श्रीआत्मानंदजैनग्रंथरत्नमालायाश्चतुर्नवतितमं रत्नम्

तार्किकशिरोमणिजिनशासनवादिप्रभावकाचार्यप्रवर-
श्रीमल्लवादिक्षमाश्रमणप्रणीतं

# द्वादशारं नयचक्रम्

आचार्यश्रीसिंहसूरिगणिवादिक्षमाश्रमणविरचितया न्यायागमानुसारिण्या
वृत्त्या समलंकृतम्

## द्वितीयो विभागः

(५–८ अराः)

टिप्पणादिभिः परिष्कृतः

संपादकः
पूज्यपादाचार्यमहाराजश्रीमद्विजयसिद्धिसूरीश्वरपट्टालंकार–
पूज्यपादाचार्यमहाराजश्रीमद्विजयमेघसूरीश्वरशिष्य–
पूज्यपादमुनिराजश्रीभुवनविजयान्तेवासी

## मुनि जम्बूविजयः

प्रकाशं प्रापयित्री

भावनगरस्था श्रीजैन–आत्मानंदसभा

वीरसंवत् २५०२ | विक्रमसंवत् २०३२
ईस्वीसन १९७६ | आत्मसंवत् ८०

अस्य ग्रंथस्य ३७७–७४४ पृष्ठानि मुंबय्यां **लक्ष्मीबाई नारायण चौधरी** इत्येताभि :
डॉ. एम्. बी. वेलकरवीथ्याम्
२६–२८ तमे गृहे निर्णयसागरसुद्रणालये मुद्रापितानि

अन्यानि पृष्ठानि भावनगरे श्रीमद् हरिलाल देवचंद शेठ इत्यनेन
स्टेशनरोड सुतारवाड्यां–आनंद प्रिन्टिंग प्रेसे मुद्रापितानि

**प्रथमावृत्ति :**
**प्रतय : ७५०**
**मूल्यं ४० रूप्यकाः**

स च **श्री खीमचंद चांपशी शाह**, एम्. ए.
निवृत्त प्रमुख, श्री जैन आत्मानंद सभा, भावनगर.
इत्यनेन प्रकाशितः ।



પરમપૂજ્ય યુગદિવાકર ન્યાયાંભોનિધિ આચાર્ય મહારાજ
**શ્રી વિજયાનંદસૂરીશ્વરજી મહારાજ**
(આત્મારામજી મહારાજ)



પરમપૂજ્ય આગમપ્રભાકર મુનિરાજ
શ્રી પુણ્યવિજયજી મહારાજ

Śrī Ātmanand Jain Granthamālā Serial No. 94

# DVĀDAŚĀRAṂ NAYACAKRAṂ

OF

Ācārya Śrī Mallavādi Kṣamāśramaṇa

With the commentary Nyāyāgamānusāriṇī

OF

Śrī Siṃhasūri Gaṇi Vādi Kṣamāśramaṇa

PART II

( 5 – 8 Aras )



Edited with critical notes by

Muni Jambūvijayajī

Disciple of

His Holiness Munirāja Śrī Bhuvanavijayajī Mahārāja

Grand Disciple of

H. H. Ācārya Śrī Vijaya Siddhisūriśvarajī Mahārāja

Published by

Śrī Jain Ātmānand Sabhā-Bhāvnagar

Vira Samvat 2502 A. D. 1976
Vikrama S. 2032 Atma S. 80

પૂજ્યપાદ સંઘસ્થવિર આ. ભ. શ્રી વિજયસિદ્ધિસૂરીશ્વરજી મ.
ના પટ્ટાલંકાર પૂ. પા. આ. શ્રી વિજયમેઘસૂરીશ્વરજી મ. ના શિષ્ય



પૂજ્ય ગુરુદેવ મુનિરાજશ્રી ભુવનવિજયજી મહારાજ

**જન્મ** : વિ. સં. ૧૯૫૧, શ્રાવણ વદિ ૫, માંડળ.
**દીક્ષા** : વિ. સં. ૧૯૮૮, જેઠ વદિ ૬, અમદાવાદ.
**સ્વર્ગવાસ** : વિ. સં. ૨૦૧૫, મહા સુદિ ૮, શંખેશ્વરજી-તીર્થ

॥ श्री सद्गुरुदेवाय नमः । श्री सद्गुरुः शरणम् ॥

पूज्यपाद अनन्तउपकारी गुरुदेव मुनिराजश्री १००८

# भुवनविजयजी महाराज !

बहुपुण्याश्रितं दत्त्वा दुर्लभं नरजन्म मे ।
लालनां पालनां पुष्टिं कृत्वा वात्सल्यतस्तथा ॥ १ ॥
वितीर्य धर्मसंस्कारानुत्तमांश्च गृहस्थितौ ।
भवद्भिः सुपितृत्वेन सुबहूपकृतोऽस्म्यहम् ॥ २ ॥
ततो भवद्भिर्दीक्षित्वा भगवत्त्यागवर्त्मनि ।
अहमप्युद्धृतो मार्गं तमेवारोह्य पावनम् ॥ ३ ॥
ततः शास्त्रोक्तपद्धत्या नानादेशविहारतः ।
अचीकरन् भवन्तो मां तीर्थयात्राः शुभावहाः ॥ ४ ॥
अनेकशास्त्राध्ययनं भवद्भिः कारितोऽस्म्यहम् ।
ज्ञानचारित्रसंस्कारैरुत्तमैर्वासितोऽस्मि च ॥ ५ ॥
ममात्मश्रेयसे नित्यं भवद्भिश्चिन्तनं कृतम् ।
व्यापृताश्च ममोन्नत्यै सदा स्वाखिलशक्तयः ॥ ६ ॥
ममाविनयदोषाश्च सदा क्षान्ता दयालुभिः ।
इत्थं भवदनन्तोपकारैरुपकृतोऽस्म्यहम् ॥ ७ ॥
मोक्षाध्वसत्पान्थ ! मुनीन्द्र ! हे गुरो !
वचोऽतिगा वः खलु मय्युपक्रियाः ।
असम्भवप्रत्युपकारसाधनाः
स्मृत्वाहमद्यापि भवामि गद्गदः ॥ ८ ॥
हे सत्पूरुष ! सर्वदर्शनसमालोचप्रभाभासुरो
विख्यातो नयचक्रमित्यभिधया ग्रन्थो महागौरवः ।
युष्मत्प्रेरणमार्गदर्शनबलात् सम्पादितोऽयं मया
कृत्वा दर्शनशास्त्रबोधममलं सम्पद्यतां श्रेयसे ॥ ९ ॥

—तत्रभवदन्तेवासी शिशुर्जम्बूविजयः

## आभारदर्शन

परम पूज्य आगमप्रभाकर श्रुतशीलवारिधि मुनिराज

### स्व. पुण्यविजयजी

महाराजश्रीना सदुपदेशथी गोरेगांव(मुंबई)ना

श्री जवाहरनगर जैन श्वेतांबर मूर्तिपूजक संघ

तरफथी आ ग्रंथ (द्वादशारं नयचक्रम्–द्वितीयो विभागः) ना प्रकाशन खर्चमां मदद अर्थे रु. ११००० ) अगियार हजारनी आर्थिक सहाय अमने मळी छे. आवी उदार सहाय माटे अमे ते श्री संघ अने तेमना ट्रस्टी साहेबोनो अंतःकरणपूर्वक आभार मानीओ छीओ.

श्री जैन आत्मानंद सभा–भावनगर.

# प्रकाशकनुं निवेदन

पूज्यपाद आचार्यमहाराज श्रीमद् विजयसिद्धिसूरीश्वरजी दादाना पट्टालंकार पूज्यपाद आचार्य महाराज श्रीमद् विजयमेघसूरीश्वरजी महाराजना शिष्य पूज्यपाद मुनिराजश्री भुवनविजयजी महाराजना अंतेवासी अने जैन साहित्यना तेमज भारतीय समग्र दार्शनिक साहित्यना तलस्पर्शी ज्ञाता तथा पोतानी अनुपम विद्वत्तावडे पूर्व तेमज पश्चिमना पौर्वात्य विद्याना विद्वानोमां आगवुं स्थान धरावनार परम पूज्य मुनिराज श्री जंबूविजयजी महाराज संशोधित अने संपादित महातार्किक, शासनप्रभावक आचार्यप्रवर श्री मल्लवादिसूरीश्वरजी प्रणीत द्वादशारं नयचक्रम् नामनो उच्च कोटिनो दार्शनिक लुप्तप्राय जेवो आकर ग्रंथ प्रगट करवा अमे भाग्यशाळी थया छीए, ते बाबतमां अमे गौरवनी लागणी अनुभवीए छीए.

आ ग्रंथना मूळ बार अर छे. तेना ओकथी चार अर समावतो पहेलो भाग सं. २०२२मां अमे प्रसिद्ध कर्यो हतो. ते वखते पांचथी बार अर एकज भागमां समावी ते बीजा भाग रूपे जेम बने तेम जलदीथी प्रगट करवानी अमारी उमेद हती. पांचथी आठ अर छपाइ गया अने आठमो अर पूरो थतां नवमो अर छापवानुं काम शरु थयुं. परंतु आठमा अरना छेल्ला पाना साथे नवमा अरना सात पानां छपायां पछी ते वखते अचानक अनिवार्य मुश्केलीओ आवी पडी अने दिलगीरी साथे छापकाम मोकुफ राखवुं पडयुं. आवी परिस्थितिमां जे चार अरो छपाइ गया छे ते वधु वखत राखी न मूकतां तेनो बीजो भाग तैयार करी विद्वानोना हाथमां मूकवो तेवो निर्णय लेवामां आव्यो. ते प्रमाणे आ पांचथी आठ अर समावतो बीजो भाग प्रसिद्ध करीए छीए. नवथी बार अर तथा अन्य उपयोगी परिशिष्टो समावतो त्रीजो भाग जलदीथी प्रगट करवानी अमारी उमेद छे. नवमा अरनां जे सात पानां आ बीजा भागमां आपवामां आव्यां छे, ते फरीथी छापीने वाचकोनी सुविधा खातर त्रीजा भागमां नवमो अर पूरेपूरो आपवामां आवशे.

आ बीजा भागमां समाविष्ट अरोना परिशिष्टो वगेरे नवथी बार अरोना परिशिष्टो साथे त्रीजा भागमां आपवामां आवशे.

आ ग्रंथना प्रथम भागमां अंग्रेजीमां विद्वत्तापूर्ण प्रस्तावना जगतना एक उच्च कोटिना दार्शनिक अने वियेना युनिवर्सिटीमां भारतीय दर्शनशास्त्रो तथा इरानियन तत्त्वज्ञाननी विद्याशाखाना अध्यक्ष विद्वान प्रोफेसर डो. अे. फ्राउवलनेरे लखी हती. आ बीजा भागनी प्रस्तावना पण तेओश्री पासे लखाववानी अमारी उमेद हती. पण गई साले दुर्भाग्ये तेमनुं शोकजनक अवसान थतां अमारी ते उमेद पूर्ण थई शकी नथी. अमे प्रो. डो. ए. फ्राउवलनेरनी अमारी तरफनी भली लागणीओने याद करी आ तके तेमनो आभार मानीए छीए.

आवा धर्म अने संस्कृतिना पायाना ग्रंथो ए आपणा समाजनुं गौरव छे, अने तेमनुं प्रकाशन आपणा गौरवशाळी अस्तित्व माटे आवश्यक छे. अमने कहेतां आनंद थाय छे के

गोरेगांव (मुंबई)ना श्री जवाहरनगर जैन श्वेतांबर मूर्तिपूजक संघे रु. ११०००) अगियार हजारनी उदार आर्थिक सहाय आपी आ बीजा भागनुं प्रकाशन सुलभ बनाव्युं छे. एटलुं ज नहीं, पण तेमणे बीजा श्री संघोने ज्ञानखातानी रकमोनो सदुउपयोग केम करवो तेनुं सुंदर मार्गदर्शन आप्युं छे.

आ भागना मुख्य पाठनां पृ. ३७७ थी पृ. ७४४ सुधीनुं छापकाम मुंबईना सुप्रसिद्ध निर्णयसागर मुद्रणालये कर्युं छे अने बाकीनुं छापकाम भावनगरना आनंद प्रिन्टींग प्रेसे कर्युं छे.

खीमचंद चांपशी शाह
एम. ए.
श्री जैन आत्मानंद सभा

भावनगर
ता. १-२-१९७६

# FOREWORD

It gives me great pleasure to bring out the Part II of the Dvādaśāraṁ Nayacakraṁ of Ācārya Sri Mallavādī with the commentary of Śrī Siṁhasūri by the grace of Arihanta and Gurudeva.

The Nayacakraṁ contains twelve Aras i. e. modes of consideration. Of these the first four were published as Part I about nine years ago. At that time it was our intention to publish the remaining eight Aras in one volume as Part II. The Aras from five to eight were printed but then owing to some unforeseen difficulties the Aras from nine to twelve have not been printed as yet. However owing to the pressing demand for publishing the Book, we have decided to publish the Aras from five to eight now as Part II. We hope that the remaining four Aras will be printed and brought out as part III very soon.

The Fifth Ara considers both the Vidhi and Niyama i. e. Dravya and Kriyā. The Vaiyākaranāḥ follow this.

The Sixth Ara considers the Vidhi of both Vidhi and Niyama (i. e. Sāmānya and Viśeṣa). The Vaiśeṣikāḥ follow this.

The Seventh Ara considers both the Vidhi and Niyama of both the Vidhi and Niyama. In this Ara old Vaiśeṣika works which are not extant now-a-days, such as Vākya, Bhāṣya Tika by Praśastamati and Katandi Tika have been criticized at length. Also in this Ara, the meaning of the WORD is described according to the famous Buddhist Logician, Diṅnāga, who is aptly called the Father of the Budhist Logic.

In the Eighth Ara, which is the longest of all the Aras, the doctrines of Bhartṛhari, his teacher Vasurāta, and Diṅnāga and his commentators, have been fully repudiated.

At present almost all the works of Diṅnāga have been lost in Sanskṛta. But a few have been preserved in the Tibetan and Chinese translations. From the Tibetan translations many important portions have been restored into Sanskṛta by me and are given in the foot-notes at the relevant places in this Ara.

This restoration of Tibetan portions into Sanskṛta will be of great help, we hope, not only to the students of Nayacakraṃ, but also to the students and scholars of many other Indian phiiosophies to understand the old Buddhist ideas.

The Eighth Ara considers the Niyama of both Vidhi and Niyama. With this Ara the second Nemi, containing the Aras from five to eight, is completed.

We are highly thankful to the late Professor Dr. Erich Frauwallner, the Head of the Department of Indian Philosophies at the University of Vienna, Austria (Europe), who described in a schoiarly manner the eontents of the first fot! Aras in his introduction of the First Part of this work. We had also hoped that he would describe in the similar seholarly way the contents of this part also. But as, we are extremely sorry to say, he ezpired last year, we could not get his valvable introduction for this part.

We express our thanks to all those, who have helped us in preparing, printing and publishing this volume.

We are very much pleased that this **work** is being brought out in the 2501 st year from the Nirvāṇa of Lord Mahāvīra.

I pay homage at His Feet by this Flower.

15th Aug. 1975

**Patri**

(Kutch)

**Muni Jambūvijaya**

Disciple of Munirāja Śrī

**Bhuvanavijayaji Mahārāja**

॥ ॐ ह्रीं अर्हं श्रीशङ्खेश्वरपार्श्वनाथाय नमः ॥

आचार्यमहाराजश्रीमद्विजयसिद्धिसूरीश्वरजीपादपद्मेभ्यो नम ।

आचार्यमहाराजश्रीमद्विजयमेघसूरीश्वरजीपादपद्मेभ्यो नमः ।

सद्गुरुदेवमुनिराजश्रीभुवनविजयजीपादपद्मेभ्यो नमः ।

# प्रास्ताविकं किञ्चित्

परमकृपालोः परमात्मनः सद्गुरुदेवस्य च कृपया न्यायागमानुसारिण्या वृत्त्या विभूषितस्य आचार्यश्रीमल्लवादिविरचितस्य द्वादशारस्य नयचक्रस्य उभयम् ५ उभयविधिः ६ उभयोभयम् ७ उभयनियमः ८ इत्यरचतुष्टयात्मकोऽयं द्वितीयो विभागो विदुषां पुरतः प्रकाश्यते ।

आदिममरचतुष्टयं बहोः कालात् पूर्वं प्रकाशितम् । मध्यममिदमरचतुष्टयमपि बहोः कालात् प्रागेव मुद्रितम्, तथापि द्वितीयविभागे सम्पूर्णं नयचक्रम्-अवशिष्टानष्टावप्यरान्-प्रकाशयितुमस्माकं समीहाऽऽसीत्, प्रथमे विभागे प्राक्कथनेऽपि तथैवास्माभिरावेदितम्. किन्तु विहितेष्वपि बहुतरेषु प्रयत्नेषु विविधकारणवशादन्तिमस्यारचतुष्टयस्य मुद्रणमद्यावधि नैव सम्पन्नम्, अतो द्राघीयसा विलम्बेन मध्यमारचतुष्टयात्मक एव द्वितीयो विभागः सम्प्रति प्रकटीक्रियते ।

नयचक्रस्य स्वरूपे, भगवतां ग्रन्थकृतां मल्लवादिसूरीणां वृत्तिकृतां सिंहसूरिगणिवादिक्षमाश्रमणानां च विषये, एतद्ग्रन्थसम्पादनशैल्याश्च विषये यद् वक्तव्यं तत् प्रथमविभागे प्राक्कथने विस्तरेणावेदितमेव । एतद्ग्रन्थसम्पादनाधारभूतानां हस्तलिखितादर्शानां स्वरूपमपि तत्रैव विस्तरेण द्रष्टव्यम् । संक्षिप्तमेव किञ्चित् प्रास्ताविकमत्र लिख्यते ।

### अरचतुष्टयस्य विषयः

चतुर्थेऽरे 'सर्वं द्रव्यमात्रम्' इति यदुक्तं तत् पञ्चमेऽरे निरस्यते, 'न केवलं द्रव्यमेव भावः, क्रियाऽपि भावः, उभयोरपि भवनाविशेषात्, यथा द्रव्यं भवति तथा क्रियापि भवति' इति पञ्चमेऽर उभयनयमतं वैयाकरणसिद्धान्तं मनसिकृत्य निरूपितं ग्रन्थकृता । अयं नयो नैगमदेशः ।

षष्ठेऽरे उभयनयमतं निराकृत्य विधि-नियमयोः सामान्य-विशेषयोः विधिः वैशेषिकमतानुसारेण वर्णितः । अयं नयो नैगमैकदेशः ।

इमे षड् द्रव्यास्तिकनयाः । अतः परं षण्णां पर्यवास्तिकनयानां प्रारम्भः ।

तत्र सप्तमेऽरे वैशेषिकसूत्र-वाक्य-भाष्य-प्रशस्तमतिटीका-कटन्दीटीकाद्यनुसारेण विस्तरेण वैशेषिकमतं निरूप्य उभयोभयनयेन निराकृतम्, उभयोर्विधि-नियमयोः सामान्य-विशेषयोः भवनमभवनं चेत्युभयं वर्णितम्। बौद्धमतानुसारेण अपोहः शब्दार्थो वर्णितः। ऋजुसूत्रदेशोऽयं नयः।

सप्तमस्य उभयोभयनयस्य मतं निराकुर्वता अष्टमेन उभयनियमनयेन 'भावाभावौ द्वावपि प्रधानौ, भावः प्रधानं विशेष उपसर्जनम्, विशेषः प्रधानं भाव उपसर्जनम्, उभयमुपसर्जनम्' इति चतुर्षु विकल्पेषु 'विशेषः प्रधानं भाव उपसर्जनम्' इति स्वमतं दर्शितम्। 'शब्दस्य कोऽर्थः' इति विचारणायां भर्तृहरेः भर्तृहर्युपाध्यायस्य वसुरातस्य च मतं नामग्राहं विस्तरेण चर्चितम्।

ततः परं 'नाम-स्थापना-द्रव्य-भिन्नलिङ्गवाच्येष्टाकरणाद् भावयुक्तवाची शब्दः' इति सिद्धान्तितमनेन शब्दनयानुसारिणा नयेन दिङ्नागेन तट्टीकाकारैश्च वर्णितोऽन्यापोहः महता विस्तरेण उपन्यस्य निराकृतः।

नयोऽयं शब्दनयदेशः। विधिनियमयोर्गुणप्रधानभावेन नियमोऽत्र उपदर्श्यते। अस्मिंश्च अष्टमेऽरेऽरचतुष्टयात्मको नयचक्रस्य द्वितीयो मार्गः समाप्यते।

अष्टमेऽरे मल्लवादिसूरिभिः बौद्धाचार्यदिङ्नागस्य मतं विस्तरेण चर्चितम्। दिङ्नागेन च प्रकरणशतं रचितमिति श्रूयते। प्रायः सर्वेऽपि तस्य ग्रन्थाः संस्कृतभाषायां चिराद् विनष्टाः, तेषु केवलं कतिपयानामेव ग्रन्थानां भोट [ Tibetan ] भाषायां चीनभाषायां चानुवादाः पुरातने काले विहिताः सम्प्रति उपलभ्यन्ते। अष्टमेऽरे चर्चितं दिङ्नागमतं प्रमाणसमुच्चयाख्ये सवृत्तिके तदीये ग्रन्थे भूयसांऽशेन विद्यत इति ज्ञात्वा देवगुरुकृपया भोटभाषामधीत्य दुर्लभतमांश्च भोटभाषामयान् ग्रन्थान् देशान्तरेभ्यो लब्ध्वा भूयसा परिश्रमेण सम्पादितोऽस्याष्टमोऽरः, भोटग्रन्थेभ्यः संस्कृतभाषायां परिवर्तनं विधाय प्रमाणसमुच्चयस्य, तद्वृत्तेः, जिनेन्द्रबुद्धिविरचिताया विशालामलवत्याश्च तट्टीकाया अनेकेंऽशाष्टिप्पण्यां तत्र तत्रोपन्यस्ता अस्माभिः।

न केवलं जैनतर्कग्रन्थाध्येतॄणां, बौद्ध-न्याय-वैशेषिक-मीमांसादिदर्शनाध्येतॄणामपि सट्टिप्पणोऽयमष्टमोऽरो नितान्तमुपयोगी भविष्यतीत्याशास्महे।

अवशिष्टमरचतुष्टयं शीघ्रं मुद्रापयित्वा प्रकाशयितुं प्रयत्यते, परमात्मनः कृपया तदपि शीघ्रं मुद्रितं प्रकाशितं च भवेत्।

## उपकारस्मरणम्

आगमप्रभाकरैः स्व० मुनिराजश्री पुण्यविजयजी महोदयैरेतद्ग्रन्थसम्पादने प्रेरणया बहुविधदुर्लभसामग्रीप्रदानेन एतद्ग्रन्थप्रकाशनव्यवस्थाविधानेन च महत् कार्यं विहितम्। स्व० एरीख् फ्राउवाल्नर [Prof. Dr. Erich Frauwallner, Vienna, Austria, Europe]- पण्डितश्री वासुदेव विश्वनाथ गोखले [ Poona ]-पण्डित हिदेनोरी कितागावा [Prof. Dr. Hidenori Kitagawa, Nagoya University, Nagoya, Japan] इत्येभिर्विविधभोट-

ग्रन्थप्रदानेन उपयोगिविविधसूचनाभिर्वा अत्र बहु साहायकं विहितम् । निर्णयसागर-मुद्रणालयस्य पण्डितैः 'पं० नारायण राम आचार्य' एभिश्च शास्त्रिमहोदयैरस्य मुद्रणादौ महता परिश्रमेण प्रभूतं प्रभूतं साहायकमनुष्ठितम् ।

गुरुदेवस्तुतिरूपं श्लोकनवकं न्यायविशारदन्यायतीर्थस्व०मुनिराजश्रीन्यायविजयजी महोदयः संस्कृते विरचितम् ।

एते सर्वेऽपि महानुभावा धन्यवादमर्हन्ति ।

## गुरुदेवचरणेषु प्रणिपातः

सम्पूर्णस्यास्य ग्रन्थस्य संशोधने सम्पादने च प्राणरूपा सर्वरूपेण सहायकाश्च मम गुरुदेवाः पितृचरणाश्च मुनिराजश्री१००८ भुवनविज्यजीमहाराजाः । परमपूज्यानां परमाराध्यानां प्रातःस्मरणीयानाममीषां गुरुदेवानां कृपया साहाय्येनैव च कार्यमिदं सम्पन्नमिति भूयो भूयो गुरुदेवानां चरणेषु प्रणिपातं करोमि ।

## प्रभुपूजनम्

अनन्तोपकारिणः शासनपतेः परमाराध्यस्य श्रमणस्य भगवतो महावीरस्य चरणेषु अनन्तशो वन्दनापूर्वकं—२५०१ वीरनिर्वाणसंवत्सरे—ग्रन्थमिमं समर्पयन् परमं हर्षमनुभवामि ।

—इत्यावेदयति
पूज्यपादाचार्यमहाराजश्रीमद्विजयसिद्धिसूरीश्वर-पट्टशिष्य—
पूज्यपादाचार्यमहाराजश्रीमद्विजयमेघसूरीश्वरशिष्य-
पूज्यपादगुरुदेवमुनिराजश्रीभुवनविजयान्तेवासी

**मुनिजम्बूविजयः**

वीरनिर्वाणसंवत् २५०१
विक्रमसंवत् २०३१
वैशाखशुक्लदशमी
प्रभुश्री महावीरस्वामिकेवलज्ञानकल्याणकदिनम्
भद्रेश्वरतीर्थम् (कच्छ)

॥ ॐ ह्रीँ अर्हँ श्री शङ्खेश्वरपार्श्वनाथाय नमः ॥

आचार्यमहाराजश्रीमद्विजयसिद्धिसूरीश्वरजीपादपद्मेभ्यो नमः ।
आचार्यमहाराजश्रीमद्विजयमेघसूरीश्वरजीपादपद्मेभ्यो नमः ।
सद्गुरुदेवमुनिराजश्रीभुवनविजयजीपादपद्मेभ्यो नमः

# प्रास्ताविक

परम कृपाळु जिनेश्वर परमात्मा तथा सद्गुरुदेवनी कृपाथी आचार्य श्री मल्लवादिविरचित द्वादशार नयचक्रनो 'उभयम् ५, उभयविधिः ६, उभयोभयम् ७, उभयनियमः ८, आ चार अरनो बनेलो बीजो विभाग प्रकाशित करतां अमे अति आनंद अनुभवीए छीए.

प्रारंभना चार अरनो बनेलो प्रथम विभाग घणा समय पूर्वे प्रकाशित थई गयो छे. आ मध्यम चार अर पण घणा समय पूर्वे छपाई गया हता. बीजा विभागमां संपूर्ण नयचक्रने-बाकी रहेला आठेय अरोने-प्रकाशित करवानी अमारी धारणा हती. प्रथम विभागनी प्रस्तावनामां अमे आ वात जणावी पण हती. छतां अनेक कारणोने लीधे छेल्ला चार अरनुं मुद्रण हजु सुधी थई शक्युं नथी. एटले जेटलुं छपाई गयुं छे तेटलुं शीघ्र प्रकाशित करवाना उद्देशथी मात्र वचला चार अरनो बनेलो आ बीजो विभाग प्रकाशित करवामां आवे छे.

छेल्ला चार अरना शीघ्र मुद्रण माटे अमारो प्रयत्न चालू छे. देवगुरुनी कृपाथी ए पण शीघ्र मुद्रित-प्रकाशित थई वाचकोना हाथमां आवशे एवी अमे आशा राखीए छीए ।

नयचक्रनुं स्वरूप केवुं छे ते संबंधमां, मूल ग्रंथकार आचार्य भगवान् मल्लवादी तथा टीकाकार सिंहसूरिगणिवादि क्षमाश्रमणना संबंधमां तेमज आ ग्रंथनी संपादनशैलीना संबंधमां प्रथम विभागनी प्रस्तावनामां अमे विस्तारथी जणाव्युं छे. आ संपादनमां आधारभूत मुख्य बे प्रति-एक आचार्यश्री धर्मसूर्तिसूरिजीए लखावेली प्रति तथा बीजी वाचकप्रवर उपाध्यायश्री यशोविजयजी महाराजे बीजा अनेक मुनिवरो साथे मळीने (पखवाडियामां ज १८००० श्लोक जेटली) लखेली प्रति-तथा उ० यशोविजय महाराजे लखेली प्रति उपरथी लखायेली प्रतिओनो परिचय प्रथम विभागनी प्रस्तावनामां विस्तारथी आपवामां आवेलो छे । जिज्ञासुओने त्यां जोई लेवा विनंति छे ।

## ५ थी ८ अरोनो विषय

'द्रव्य ज परमार्थरूप छे' एवुं चतुर्थ अरनुं मन्तव्य छे. तेनुं खंडन करीने 'द्रव्य तथा क्रिया बंने स्वतंत्र रीते पदार्थ छे' आवुं उभयनयनुं मन्तव्य वैयाकरणोना विचारोने आधारे ग्रंथकारे पांचमा उभय अरमां वर्णव्युं छे । आ उभय नय नैगमनयनो एकदेश छे ।

छट्ठा उभयविधि अरमां उभय नयनुं खंडन करीने वैशेषिक मतने अनुसारे उभयनो-विधि-नियमनो सामान्य विशेषनो उत्सर्ग-अपवादनो विधि स्वीकारवामां आव्यो छे । आ विचारधारानुं मूळ आगमग्रंथोमां क्यां मळे छे ते जणावतां जीवाजीवाभिगमसूत्रनो एक पाठ अरना अंतमां उध्धृत करवामां आव्यो छे ।

आ नय नैगमनो भेद छे । प्रारंभना छ अरो द्रव्यास्तिक होवाथी छ द्रव्यास्तिक नयोनुं वर्णन अहीं पुरुं थाय छे । हवे पछी पर्यायास्तिक नयना छ अर शरु थाय छे ।

सातमा अरमां वैशेषिकसूत्र, ते उपरनुं वाक्य, ते उपर भाष्य, ते उपर प्रशस्तमतिए रचेली टीका तथा वैशेषिकसूत्र उपर रचायेली कटन्दी नामनी टीकानुं विस्तारथी खंडन करीने 'विधि-नियमनो सामान्य-विशेषनो भाव तथा अभाव बंने छे' आ रीते सातमा उभयोभय नये पोताना मतनी स्थापना करी छे । वैशेषिकसूत्र उपरनी वाक्य आदि व्याख्याओ सेंकडो वर्षोथी [1]नामशेष थई गई छे, तेथी नयचक्रमां आवता उल्लेखो ऐतिहासिक दृष्टिए घणा ज महत्त्वना छे । वैशेषिकसूत्र उपरना रावणभाष्यनुं बीजुं नाम कटंदी छे एम पण केटलाकनुं मानवुं छे ।

आ नय ऋजुसूत्रनो भेद छे अने तेना मते अन्यापोह शब्दार्थ छे ।

आठमा उभयनियम अरमां 'विधि गौण छे, नियम मुख्य छे' आ रीते उभयनो-विधि नियमनो नियम स्वीकारवामां आव्यो छे । अने सातमा अरनुं विस्तारथी खंडन करवामां आव्युं छे ।

नाम, स्थापना, द्रव्य आदि समर्थ न होवाथी 'शब्द भाववाची छे' एम शब्दनयने अनुसारे जणावेलुं छे ।

शब्दार्थनी चर्चामां भर्तृहरि अने तेना उपाध्याय (अध्यापक गुरु) वसुरातनो ते नाम-पूर्वक करेलो उल्लेख तथा तेना मतनी विस्तारथी चर्चा ऐतिहासिक दृष्टिए खास ध्यान खेंचे छे ।

दिङ्नाग तथा तेना ग्रंथना टीकाकारोए वर्णवेला 'अन्यापोह' शब्दार्थना खंडन-मंडनमां आ अरनो घणो मोटो भाग रोकाएलो छे । नयचक्रना बधा अरोमां आ सौथी मोटो अर छे । आ आठमो अर शब्दनयनो भेद छे ते पूरो थाय एटले उभय नयना भेदो पूर्ण थाय छे तथा नयचक्रनो ५ थी ८ अरनो बनेलो बीजो मार्ग (नेमि) पण पूर्ण थाय छे ।

आठमा अरमां बौद्धाचार्य दिङ्नागना मत अन्यापोह विषे घणा ज विस्तारथी चर्चा छे । दिङ्नागे नाना-मोटा सो प्रकरणग्रंथो रचेला हता एवी अनुश्रुति छे । तेमांना लगभग बधा ज ग्रंथो संस्कृतमां अत्यारे नष्ट थई गया छे । कोईक कोईक ग्रंथोनां टिबेटन तथा चीनी भाषामां सेंकडो वर्षो पूर्वे थयेला अनुवादो मळे छे । आठमा अरमां आ. श्रीमल्लवादीए जे चर्चा करेली छे ते प्रमाणसमुच्चय नामना दिङ्नागना ग्रंथमां मळे छे एवुं अमारा जाणवामां

१. जुओ पृ. ४९८ टि. ११, पृ. ५१२ टि. ७ वगेरे ।

आव्युं, प्रमाणसमुच्चय ए बौद्धाचार्य दिङ्नागनो सौथी महत्त्वनो सारग्राही दार्शनिक ग्रंथ गणाय छे। प्रमाणसमुच्चय उपर दिङ्नागे स्वोपज्ञ वृत्ति लखेली छे, ते बधा उपर जिनेन्द्रबुद्धिए विशालामलवती नामनी मोटी टीका लखेली छे, आ बधानां लगभग सातसो-आठसो वर्षो पूर्वे थयेलां टिबेटन भाषांतरो (टिबेटने 'भोट' देश कहेवामां आवे छे, एटले भोट भाषांतरो) मळे छे। तेथी टिबेटन भाषानो देव-गुरुनी परम कृपाथी अभ्यास करीने, टिबेटन भाषाना अत्यंत दुर्लभ ते ते ग्रंथोने अमेरिका, इंग्लेन्ड युरोप तथा जापानमांथी माइक्रोफिल्म-फोटा आदि रूपे मेळवीने, ते ते टिबेटन भागोनो संस्कृतमां अनुवाद करीने नयचक्रना आठमा अरने विशद करवा अमे प्रयत्न कर्यो छे, ते ते टिबेटन अंशोनो संस्कृतमां करेलो अमारो अनुवाद आठमा अरमां [1]टिप्पणोमां ते ते स्थळे स्थळे आपेलो छे के जेथी नयचक्रना ते ते अंशो शुद्ध अने स्पष्ट रीते समजी शकाय। मात्र जैन दर्शनशास्त्रना अभ्यासीओने ज नहि, परंतु बौद्ध, न्याय, वैशेषिक, मीमांसा आदि दर्शनोना प्राचीन ग्रंथोना अध्ययनमां के ज्यां ते बौद्धसिद्धांतनी चर्चा आवे छे त्यां आ आठमो अर अने तेनां टिप्पणो घणां उपयोगी थशे एवी अमने श्रद्धा छे[1]।

आगमप्रभाकर स्व. मुनिराजश्री पुण्यविजयजी महाराजे आ ग्रंथना संपादन माटे प्रेरणा करीने, तेमज संपादन उपयोगी विविध दुर्लभ सामग्री पूरी पाडीने तथा आ ग्रंथना प्रकाशन अंगेनी बधी व्यवस्था करीने घणी ज महत्त्वनी कामगीरी करी छे। खरेखर आ ग्रंथनुं संशोधन, संपादन अने प्रकाशन एमने आभारी छे।

वियेनानी युनिवर्सीटिना प्राध्यापक महान् दर्शनशास्त्री स्व. डॉ. एरीख् फ्राउवाल्नर [Prof. Dr. Erich Frauwallner, Vienna University, Vienna, Europe], प्राध्यापक श्री वासुदेव विश्वनाथ गोखले [पुना], प्राध्यापक हिदेनोरी कितागावा [Prof. Dr. Hidenori Kitagawa, Nagoya University, Nagoya, Japan]-आ महानुभावोए टिबेटन ग्रंथो अंगे विविध सूचना द्वारा अथवा टिबेटन ग्रंथो मने मेळवी आपवामां घणी ज सहाय करेली छे।

निर्णयसागर मुद्रणालयना पंडित शास्त्रीजी श्री नारायण राम आचार्ये आ ग्रंथना अत्यंत जटिल मुद्रणमां खूब ज सहाय घणा प्रेम अने घणी ज काळजीथी करी छे।

---

१. पृ. ६०७-६०९, ६१४, ६१७, ६२९-६३३, ६३८-६४०, ६५०-६५१, ६६३, ६८३-६८५, ७०१, ७२४-७२९।

१. विषयानुक्रममां कंईक विस्तारथी आ वात जणावेली छे, जेथी ते ते विशिष्ट स्थानो शोधवामां अभ्यासीओने सरलता रहे।

गुरुस्तुतिनां ९ श्लोकोनुं संस्कृतमां सुंदर आयोजन न्यायविशारद न्यायतीर्थ स्व० मुनिराजश्री न्यायविजयजी महाराजे करी आपेलुं छे ।

आना प्रकाशनमां जैन आत्मानंद सभाना प्रमुख शाह खीमचंदभाई चांपशीभाई तथा अन्य कार्यवाहकोए घणो घणो रस लीधेलो छे ।

आ ग्रंथना संशोधन तथा सम्पादनमां प्राणरूप अने सर्व रीते सहायक पूज्यपाद मुनिराजश्री १००८ भुवनविजयजी महाराज छे के जेओ मारी पूर्वावस्थाना परमपूज्य पिताश्री तथा अत्यारे श्रमण अवस्थामां मारा तारक गुरुदेवश्री छे । परम पूज्य गुरुदेवश्रीनो शंखेश्वरजी तीर्थमां (विक्रम सं. २०१५, माह सुदि ८ मे) स्वर्गवास थयो त्यां सुधी पृ० ५५२ सुधी आ ग्रंथ छपाई गयो हतो, संपूर्ण ग्रंथनुं संशोधन अने संपादन तो तेथी पण घणा समय पूर्वे थई गयुं हतुं । आ ग्रंथना संशोधन, संपादन अने मुद्रण समये तेओश्रीए जे चिंता अने परिश्रमो कर्या छे तेनुं वर्णन शब्दो द्वारा माराथी थई शके तेम ज नथी । आ बधा प्रसंगोनुं स्मरण करतां गुरु परमात्माना चरणोमां हृदय प्रणिपातपूर्वक झुकी जाय छे ।

अनंत उपकारी शासनपति परमाराध्य चरम तीर्थंकर श्रमण भगवान् श्री महावीरप्रभुना करकमलमां प्रभुकृपाथी ज तैयार थयेला आ ग्रंथनुं—वीरनिर्वाणसंवत् २५०१ मां—समर्पण करीने अने ए रीते प्रभुपूजन करीने अत्यंत आनंद अनुभवुं छुं ।

—निवेदक

वीरनिर्वाणसंवत् २५०१
विक्रमसंवत् २०३१
ज्येष्ठ कृष्ण षष्ठी, जेठ वदि ६
पत्री (कच्छ)

पूज्यपादाचार्यमहाराजश्रीमद्विजयसिद्धिसूरीश्वरपट्टशिष्य-
पूज्यपादाचार्यमहाराजश्रीमद्विजयमेघसूरीश्वरशिष्य-
पूज्यपादगुरुदेवमुनिराजश्रीभुवनविजयान्तेवासी
मुनि जम्बूविजय



## न्यायागमानुसारिण्या वृत्त्यालङ्कृतस्य सटिप्पणस्य
## नयचक्रद्वितीयविभागस्य विषयानुक्रमः

## नयचक्रे वृत्तौ वा पञ्चम-षष्ठ-सप्तमा-ऽष्टमारेषूल्लिखितानां वाद-वादि-ग्रन्थ-ग्रन्थकृन्नाम्नां सूचिः



## नयचक्रद्वितीयविभागस्य शुद्धिपत्रकम्

| पृ० | पं० | मुद्रितम् | शुद्धम् |
|---|---|---|---|
| ३९१ | १७ | [2]यदात्मा- | [2]यदात्मा |
| ४०० | ३० | २९२-२ | २९३-१ |
| ४०८ | १५ | [3]आवनि० | [3]आवनि० ७५५ |
| ४०८ | ३० | २२२ | ७५५ |
| ४०८ | ३० | २२३ | ७५६ |
| ४१५ | ८ | आख्यातं साव्ययकारक- वाक्यमे[3]कमिति वाक्यम्, | "आख्यातं साव्ययकारक- [ विशेषणं ] वाक्यमेक[3]तिङ्" [ पा० वा० २। १। १। ] इति वाक्यम्। |
| ४१६ | १७ | [७]द्रव्यस्यैव | [७]द्रव्यस्य |
| ४१६ | २५ | वेदा° य०। | वेदा° भा०। |
| ४२८ | ३१ | अष्टमारे। | अष्टमारे पृ० ६६६-६६७। |
| ४२९ | २१ | ९। २। १। | ६। २। १। |
| ,, | २३ | ९। २। २। | ६। २। २। |
| ,, | २४ | वासोऽ | वासो नियम- पूर्वोऽ |

| पृ० | पं० | मुद्रितम् | शुद्धम् |
|---|---|---|---|
| ,, | २६ | ज्ञाना° | विज्ञाना° |
| ,, | २७ | न्निर्गता(तोऽ) | निःसृत्योऽ |
| ४३२ | २८ | पं० १ | पं० २ |
| ४३५ | २१ | घटादेः | घटादेर्न |
| ४३७ | २९ | दृश्यतां | दृश्यतां पृ० २७१ पं० १४ |
| ४४८ | १५ | वाचकत | वाचकत्वं |
| ,, | २१ | लक्षणवं | लक्षण- |
| ४५५ | ८ | ब्रमः | ब्रूमः |
| ,, | २० | २ पं० ९॥ | २ ॥ |
| ४५६ | ८ | °[1]श्रयन्त्वा° | °[1]श्रयन्त्या° |
| ,, | ८ | [2]ताकिङ्करत्वं | [2]तार्किकत्वं |
| ,, | २७ | भा०। (परमत- किङ्करत्वं ?)॥ | भा०। °किंकरत्वं य० ॥ |
| ४६१ | १७ | °मतिना | °म[६]तिना |
| ४६२ | ८ | चेत्, | चेत्,...... |
| ४६४ | १७ | 'असत्[1] | 'असत्' |
| ४६९ | २६ | सम्बन्धः | सम्बन्धः। |
| ५१६ | ८ | १ | २ |
| ,, | १० | २ | ३ |

| पृ० | पं० | मुद्रितम् | शुद्धम् |
|---|---|---|---|
| ,, | ११ | ३ | ४ |
| ,, | २१ | १ प्रशस्तमते-रभिप्राय इति भावः ॥ | × |
| ५१७ | १ | [1]प्राशस्त° | *प्राशस्त° |
| ,, | २७ | १ | *प्रशस्तमते-रभिप्राय इति भावः ॥ १ |
| ५४८ | ११ | [ वाक्या° | वाक्या° |
| ५७३ | १२ | काल | काल- |
| ५७९ | ५ | वाग्दिग्भूरश्मि | *वाग्दिग्भूरश्मि-वज्रेषुपश्वक्षि-स्वर्गवारिषु । दशस्वर्थेषु मेधावी गोशब्द-मुपधारयेत् ॥ |
| ६०६ | ३२ | °दोप्यऽत्रा° | °दोऽप्यत्रा° |
| ६०७ | १८ | [3]उक्तं च | [3]आह च |
| ,, | २६ | °पात्रो° | °मात्रो° |
| ६१९ | ३२ | ११ | १२ |
| ६२० | १९ | स्थाणु° | स्थाणु (ऊर्ध्व?) |
| ६३२ | ३४ | स्थाणु° | स्थाणु(ऊर्ध्व?)° |
| ६४० | २९ | °नेच्छया | °न तात्पर्येण |
| ६७६ | ९ | कन(ज्वल)त्स्वपि | कनत्स्वपि |
| ,, | २२ | '[17]अत्र' शब्द° | '[17]अत्र' शब्द° |

* अभिधर्मकोशभाष्ये [२ । ४७] वसुबन्धुना उद्धृतोऽयं श्लोकः, किन्तु तत्र 'नवस्वर्थेषु' इति पाठः ॥

# FOREWORD

| Page | Line | Printed | Correct | Page | Line | Printed | Correct |
|---|---|---|---|---|---|---|---|
| 10 | 15 | schoiarly | scholarly | 10 | 18 | seholarly | scholarly |
| ,, | 16 | eontents | Contents | ,, | 19 | ezpired | expired |
| ,, | ,, | foti | four | ,, | ,, | valvable | valuable |

## प्रास्ताविकं किञ्चित्

| पृ० | पं० | मुद्रितम् | शुद्धम् | पृ० | पं० | मुद्रितम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ११ | १२ | मद्याबधि | मद्यावधि | ,, | ९ | विज्यजी | विजयजी |
| ,, | १७ | तत्रैब | तत्रैव | ,, | १८ | महाबीर | महावीर |
| १२ | ४ | द्वावपि | द्वावपि | | | प्रास्ताविक | |
| ,, | १० | बर्णितो | वर्णितो | १४ | २७ | बिचारोने | विचारोने |
| ,, | १३ | चतुष्ट्यात्मको | चतुष्टयात्मको | १५ | १५ | उभयनो विधि | उभयनो-बिधि- |
| ,, | २९ | ब्यवस्था | व्यवस्था | ,, | १६ | शप्दार्थनी | शब्दार्थनी |
| ,, | ,, | बिहितम् | विहितम् | १६ | १८ | परीखू | परीख् |
| १३ | ४ | महोदयः | महोदयैः | | | | |



## अथ पञ्चम उभयारः ।

**सत्यमेतद् 'भवतीति भावः' इति । किन्त्विदं 'द्रव्यमेवार्थः' इति विरुध्यतेऽभ्युपगमेन स्ववचनेन वा तदवयवेन वा, यत् तद् भवति तस्य भावत्वादपि, अतोऽन्यथाऽसत्त्वात् खपुष्पवत्, उभयम्–द्रव्यं भावश्च ।**

---

एवमनन्तरनयेनाभिहिते [1]ब्रवीत्युत्तरः—**सत्यमेतद्** यदुच्यते त्वया '[2]**भवतीति भावः'** इति । **किन्त्विदं '[3]द्रव्यमेवार्थः' इति विरुध्यते,** द्रव्यं च भव्ये [ पा० ५ । ३ । १०४ ], द्रवतीति द्रव्यं द्रूयत इति वा द्रव्यमिति [4]कर्तृकर्मसाधनव्युत्पत्तिमात्रभेदे सत्यपि अर्थभेदाभावात् सर्वसर्वात्मकत्वाच्च द्रव्यमेव पृथिव्यादिव्रीह्यादिभावेन भवति नान्यः कश्चिद्भावोऽस्ति इत्येतदवधारणं विरुध्यते, केन सह विरुध्यते? **अभ्युपगमेन,** यस्मात् त्वयैवाभ्युपगतं विशेषणं 'द्रव्यं भवतीति भावः' इति भवनलक्षणस्य प्रकृत्यर्थस्य साध्यस्य द्रव्यलक्षणेन प्रत्ययार्थेन साधनेन कर्त्रा विशेषणात् [5]तद्द्व्यर्थताभ्युपगतेति, विशेषणविशेष्ययोश्च भेदात् 'द्रव्यमेवार्थः' इति पूर्वोऽभ्युपगमो विरुध्यते, इतरथा वैयर्थ्यं पौनरुक्त्यं वा स्याद् 'द्रव्यं भवति' २६८-२ इति । अथवा प्रकृष्टकालेनाभ्युपगमेन विरुध्यते इति किं [6]चित्रमायत्याम्? किन्तु **स्ववचनेन वा** 'विरुध्यते' इति वर्तते, **वा**शब्दस्य विकल्पार्थत्वात् समुच्चयार्थत्वाद्वा अभ्युपगमेन स्ववचनेन च विरुध्यत इति, अत आह—**तदवयवेन वा,** 'भवति' इति '[7]द्रव्यम्' इति वा विशेषणविशेष्यभेदानुपादानेऽपि एकस्मिन्नेव पदे प्रकृतिप्रत्ययार्थभेदोपादानात्, [8]**भू सत्तायां** प्रकृतिः, [9]लट्प्रत्ययः कर्तरि, तौ [10]प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्रधानोपसर्जनभावेन, यथा राजपुरुषौ पुरुषार्थमिति, तथा द्रव्यमित्यत्रापि **द्रु गतौ** [ पा० धा० ९४५ ] **कृत्यल्युटो बहुलम्** [ पा० ३ । ३ । ११३ ] इति कर्तृकर्माद्यन्यतमसाधने [11]यत्प्रत्यये प्रकृतिप्रत्यय[12]भेदाभ्युपगमात् । किं कारणम्? **यत् तद्भवति तस्य भावत्वादपि,** यत् तत् त्वदिष्टं द्रव्यं तद् भावोऽपि क्रियापि, क्रिया भावः प्रवृत्तिरिति पर्यायाः, भावस्यापि भावात् 'भवतीति भावः' इति व्युत्पत्तेः 'द्रव्यम्' इति 'भवति' इति च वचनाद् भवनस्य द्रव्याद् भिन्नत्वात् । **अतोऽन्यथाऽसत्त्वात्,** यदि द्रव्यं भावोऽपि न स्यात् क्रियापि न स्यात् ततस्तदसत् स्यादभावत्वादक्रियत्वात् **खपुष्पवदिति** । तस्माद् द्रव्यक्रिययोः सत्त्वाद् यदुक्तं त्वया '[13]**द्रव्यमात्रमुत्क्षेपणादि'** इति तदसत् ।

---

१ **प्रवी**° प्र० ॥ २ दृश्यतां पृ० ३७० पं० ३ ॥ ३ दृश्यतां पृ० ३७३ पं० ६ ॥ ४ दृश्यतां पृ० ३७३ पं० ३ ॥ ५ **तद्ध्यर्थ**° प्र० ॥ ६ °**मायत्यं** । प्र० ॥ ७ **द्रव्यमतीति वा** प्र० ॥ ८ "भू सत्तायाम्"–**पा०** **धा०** १ ॥ ९ "वर्तमाने लट्"–**पा०** ३।२।१२३ ॥ १० दृश्यतां **पा**तञ्जलमहाभाष्ये ३।१।६७ ॥ ११ "अचो यत्" **पा०** ३।१।९७ ॥ १२ °**दात् गमात्** प्र० ॥ १३ दृश्यतां पृ० ३६९ पं० ४, पृ० ३७० पं० ८ ॥

**तत्र सम्मूर्च्छितसर्वप्रभेदनिर्भेदं बीजं द्रव्यम्, तथाभवनविनाभूतसन्निधिवस्तुत्वव्यक्तिः क्रिया, प्रवृत्तिः क्रिया भावः, वदनगतनियतक्रमाकाररूपपरिमाणमायाकारकपताकिकासन्ताननिष्कालवत्, मायाकारकवद् द्रव्यादनुत्पादव्ययात्मकात् पृथिव्यादेर्मूलादयः, यथास्वं पताकिकामालावत् क्रियात्मानः । अद्रव्य-**

---

तस्माच्च न 'एकं सर्वम्' अनन्तरनयदर्शनम्, न 'सर्वमेकं' पुरुषनियत्यादिविकल्पविधिविधिनयदर्शनम्, नापि विध्युभयदर्शनं कर्त्रकर्तृभूतं[1] प्रकृतिपुरुषमिदम्, नाधिष्ठात्रधिष्ठेयमिदमितीश्वरकारणं प्रधानोपसर्जनभूतं प्राङ्निर्दिष्टम्, किं तर्हि ? **उभयं** कर्तृ भवनस्य प्रधानं च तुल्यबलत्वादस्य भावो भवतीति सामान्येन,
२६९-१ किं पुनस्तदुभयमित्यत आह – **द्रव्यं भावश्च** । अत्र भावशब्दः क्रियावचनः [2]क्रिया भावो धातुः [ पा० वा० १।३।१ ] इति लक्षणात् ।

तस्माद्[3]द्वयं द्वयं सर्वं घटपटादि भवति पचत्यादिवत् । **तत्र सम्मूर्छितसर्वप्रभेदं[4]निर्भेदम्**, सम्मूर्छिताः संसृष्टाः अविनिर्भागेन सर्वे प्रभेदाः पचिपठिभुजिगम्यासिशय्यादयः[5] कृष्णगौरदन्तुरह्रस्वदीर्घतादयश्च यस्मिंस्तत् सम्मूर्छितसर्वप्रभेदं तत् सर्वत्र स्वरूप↑[6]समवस्थानाद् निर्भेदं च तदगृहीत[7]तरङ्गादिप्रभेदसरःसलिलवत् तत् तेषां **बीज**माश्रयो **द्रव्य**मित्येतद् द्रव्यलक्षणम् । **तथाभवनविनाभूत↑सन्निधिवस्तुत्वव्यक्तिः क्रिया**, तेन प्रकारेण पचिपठिगम्यादिना भवनं तथाभवनम्, तेन भवनेन विनाभूतः सन्निधिः शक्तिमन्मात्रावस्था शक्त्यनभिव्यक्तिर्यस्य वस्तुनस्तत् तथाभवनविनाभूतसन्निधिवस्तु, तस्य भावो वस्तुत्वम्, तद्व्यक्तिः[8] वस्तुशक्त्यभिव्यक्तिः क्रिया इत्येतत् क्रियालक्षणम् । **प्रवृत्तिः क्रिया भाव** इति पर्यायकथनम् ।

तस्य द्वयस्य स्वतन्त्रस्य भावस्य निदर्शनम् – **वदनगते**त्यादि यावद् **निष्कालव**दिति । मायाकारकवदने व्यवस्थितः क्रमो यासामाकारा रूपाणि परिमाणानि च ता मायाकारकपताकिकाः, तासां सन्तानस्य निष्कालवत् । पृथक्[9] तयोः स्वरूपव्याख्यानार्थमाह – **मायाकारकवद् द्रव्यादनुत्पादव्ययात्मकात् पृथिव्यादेर्मूलादय** इति जगद् दार्ष्टान्तिकं दृष्टान्तेन मायाकारकेण समीकुर्वन् द्रव्यं व्याचष्टे क्रियां च **यथास्वं पताकिकामालावत् क्रियात्मान** इति च । या या स्वा यथास्वं पताकिकामाला अव्यवच्छेदेन नीलपीतादिवर्णा ह्रस्वदीर्घादितनुस्थूलादिसंस्थानप्रमाणा नियता एव क्रमेण निष्कसन्ति तथा 'पचति गच्छति' इत्यादिक्रिया द्रव्याद् देवदत्तादेरिति । ततोऽन्या अपि च तास्तेन विना न भवन्ति, सोऽपि ताभिर्विना
२६९-२ न भवति, अथ च नियताकाररूपपरिमाणास्ताः स च तत्परिणतव्यक्तिरिति द्वयमपि भवतीति ।

एवं तस्मिन्नेव द्रव्यक्रियात्मनि वस्तुन्यन्तर्भावात् पदार्थान्तरकल्पनावैयर्थ्यम् क्रियामात्रत्वाद् गुणाद्याश्रितपदार्थानाम् । द्रव्यजातिभेदपरिकल्पनावैयर्थ्यं च सर्वद्रव्याणां क्रियावत्त्वादिति तत्प्रदर्शनार्थमाह–

---

१ **कर्तृकर्तृभूतं** प्र० ॥ २ "क्रियावचनो धातुः ।···भाववचनो धातुः ।" इति **पाणिनीयवार्तिके** १।३।१ ॥ ३ वि० विना °**द्वयं द्रव्यं सर्वं** य० । °**द्वयं सर्वं** वि० ॥ ४ °**दं निर्भेदं** य० ॥ ५ °**गम्याशिशुपादयः** प्र० ॥ ६ ↑ ↑ एतदन्तर्गतः पाठो भा० प्रतौ नास्ति ॥ ७ **तदागृ**° य० ॥ ८ **तद्व्यक्तिः वस्तुत्वव्यक्तिः वस्तुशक्त्यभिव्यक्तिः** पा० डे० लीं० ॥ ९ **पृथक तयोः** प्र० । अत्र 'पृथक् च तयोः' इत्यपि पाठः स्यात् ॥

**द्रव्यवद्द्रव्यसंयोजनवियोजनोत्क्षेपणापक्षेपणादितथाभवनविशेषणसमवयनादयो भवनमेव द्रवति जानाति इच्छति द्वेष्टि ध्वनति यतते संयुनक्ति वियुनक्ति श्वेतते इत्यादि ।**

**पृथिव्यादिसंयोजनवियोजनोत्क्षेपणापक्षेपणतथाभवनविशेषणसमवयनादि-भवनेन विना न द्रव्यभेदाः सम्भवन्ति यावदन्त्यं द्रव्यम्, पृथिव्यादिना विना न संयोजनवियोजनोत्क्षेपणापक्षेपणतथाभवनविशेषणसमवयनादयो न मूलादिभावो वेति द्रव्यभावपरिग्रहः ।**

**एवं च कृत्वोक्तम्**—न हि किञ्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते वर्धते यावदनेन

---

**अद्रव्यद्रव्यवद्द्रव्यसंयोजने**त्यादयः, गुणादयस्तावत् क्रियैव इति प्रागुक्तम्, अधुना[१]प्युच्यते तद्द्वारेण जात्यभेदश्च । द्विविधं हि द्रव्यम्—अद्रव्यमनेकद्रव्यं च । नास्य द्रव्यं समवायिकारणमित्यद्रव्यमात्माकाशकालदिक्परमाण्वाख्यम् । द्रव्यवद् द्रव्यं तु द्व्यणुकादि महापृथिवीपर्यन्तम् । तस्य द्विविधस्यापि द्रव्यस्य जातिभेदाभावः, यस्मात् **संयोजनं** प्राप्तिः क्रिया परिणतिलक्षणा, सैव संयोगो गुणोऽण्वाकाशादीनाम्, आत्माकाशादेरपि परिणमनक्रियावत्त्वादुक्तवदक्रियस्यासत्त्वात् । एवं **वियोजनं** विभागः क्रियामात्रं न गुणः । तथा रूप्यतेऽक्षिभ्यामिति रूपम्, रस्यते जिह्वयेति रसः, एवं गन्धस्पर्शशब्दा अन्ये च सङ्ख्यादयो नेया बुद्ध्या सङ्ख्यायमानत्वात् । **उत्क्षेपणापक्षेपणादी**ति ऊर्ध्वक्षेपणादिक्रिया द्रव्यधर्मो द्रव्यप्रभेदः । **तथाभवन**मिति सत्तासामान्यं द्रव्यस्यैव समानस्य भवनम्, यत् समानेन भूयते । **विशेषण**मिति विशेषः क्रियैव येन नीलादिना गमनादिना क्रियामात्रेण द्रव्यस्य विशेषेण भवनं स स विशेषः । **समवयनं** सम्बन्धः, सोऽपि संयोग एव, 'सम्' इत्येकीभावेनावयवानामवस्थानं तन्त्वादीनां पटादित्वेन समवाय इहेति कार्यकारणयोरेकीभवनम् । **आदि**ग्रहणाद् [२]यावत्समवायिद्रव्यं भेदात् समवायानन्त्यं दर्शयति षट्पदार्थ[३]परिमाणाभावं [ च ] परिणामधर्मानन्त्यात् क्रियागुणादिपदार्थानन्त्याच्च । **भवनमेव** भाव एव क्रियैव, न गुणादयः सन्तीति **भवन**शब्देन २७०-१
क्रियां दर्शयति । इदानीं द्रव्यं दर्शयितुकाम आह—**द्र[४]वतीत्यादि** यावच्छ्वेतत **इत्यादि कारकं** तल्[५]लकारेण कर्तृवाचिना द्रुज्ञेषिद्विषिध्वनियतिसंयुजिवियुजिश्वितीनां साध्यानां क्रियाविशेषाणां सकर्तृकाणामभिधानात् ।

तयोरन्योन्यरहितयोर्द्रव्यक्रिययोरभावप्रदर्शनार्थो ग्रन्थः—**पृथिव्यादिसंयोजने**त्यादि ↑[६]यावद् **द्रव्यभावपरिग्रहः** । आदौ तावद् भवनेन क्रि[७]यया भावेन विना न द्रव्यभेदाः सम्भवन्ति पृथिव्यादयो **यावदन्त्यं द्रव्यं** परमाणुद्रव्यमिति, **पृथिव्यादिने**त्यादि↑ यावन्न **मूलादिभावो** वेत्युक्तानामेव द्रव्यभेदानामभावे संयोजनादयः क्रियाभेदा न सन्तीत्यादि तेनानिर्ष्ठापादनम् । तस्माद् **द्रव्यभावपरिग्रहो** युक्त इत्युपनयति, **इति**शब्दस्य हेत्वर्थत्वात् ।

**एवं च** कृत्वेत्यादि यावद**पायेन वा युज्यत** इति **भाष्यकारेण साङ्ख्यादाहृत्योक्तो** ज्ञापकग्रन्थः

---

१ °**नाप्युच्यते** प्र० ॥ २ "यावदवधारणे ।२।१।८। यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् ।" इति **पा०सिद्धान्तकौमुद्याम्** ॥ ३ **परिणामाभावं** प्र० ॥ ४ **द्रव्यती**° प्र० ॥ ५ दृश्यतां पृ० १२६ टि० ७ ॥ ६ ↑ ↑ एतच्चिह्नान्तर्गतः पाठो य० प्रतिषु नास्ति ॥ ७ **क्रियाया** भा० ॥ ८ °**ग्रानपा**° प्र० ॥

वर्धितव्यमपायेन वा युज्यते [ पाँ० म० भा० १।२।६४ ]। **न हि कश्चिदर्थो द्रव्यं स्वस्मिन्नात्मनि निर्भेदनिरुपाख्ये मुहूर्तमपि अवतिष्ठते, अपिशब्दाद् यावत् समयमपि नावतिष्ठते, वर्धते यावदनेन वर्धितव्यम्, यावदनेन अपेतव्यं तावदेव अपायेन युज्यते, सन्निहितव्यक्तियुक्तत्वात्।**

**यदि तु द्रव्यमित्येवाक्रियमभविष्यत् ततो नाभविष्यत्, प्राक् तदा वा पश्चाच्च**

---

सोऽयमस्मिन्नेव द्रव्यक्रियात्मकवस्तुवादे घटते, न परमतैकान्तद्रव्यपरिणामवादे नापि सततप्रवृत्तक्षणिकवादे। तद् व्याचष्टे – **न हि कश्चिदर्थो द्रव्यम्**, 'न हि किञ्चित्' इति प्राप्तस्य सामान्यनपुंसकनिर्देशस्य 'अर्थः' इति पुँल्लिङ्गेन विशेष्य व्याख्यानम्, यथोक्तम् – **अव्यक्ते गुणसन्देहे नपुंसकलिङ्गं प्रयोक्तव्यम्, जायमानं हि द्रव्यमेव जायते – पुमान् स्त्री वा, तथापि वक्तारो भवन्ति – किमस्य जातम्? इति** [ पाँ० म० भा० १।२।६९ ]। पुनरपि चार्थशब्दपर्यायमाह – **द्रव्य**मिति भाष्यकारमतेनैव, **स्वस्मिन्नात्मनि** द्रव्यात्मनीत्यर्थः, **निर्भेद-**
२७०२ **निरुपाख्ये** गमनस्पन्दननिमेषोन्मेषादिभेदविरहिते तस्य भेदविरहितस्य निरुपाख्यत्वात्, तद्धि द्रव्यं धर्मरहितमुपाख्यातुमशक्यम्, अनुपाख्यत्वाच्चासदेव स्यात्, अतस्तद् **मुहूर्तमपि नावतिष्ठते** परिणतिक्रियाविरहितम्। तद् व्याचष्टे – **'अपि'शब्दाद् यावत् समयमपि नावतिष्ठते** नालिकालवस्तोकप्राणोच्छ्वासनिःश्वासक्रमहान्या, ततः परं सूक्ष्मकालाभावात्। एतेन स्वात्मन्यनवस्थानवचनेन वृद्धिहानिसततसम्प्रवृत्तिरूपं सर्वं वस्तु इति द्रव्यप्रत्याख्यानमेव कृतम्। **वर्धते यावदनेन वर्धितव्य**मिति तु पुनः 'यत् परिमाणमस्य यावत्' इति नियतपरिमाणां वृद्धिं पद्मादीनामिव साधिकसहस्रयोजनात् परतो न भूतां कदाचिदिति दर्शयता तस्यैव द्रव्यस्यावस्थितस्यावस्थाविशेष एव वृद्धिरिति दर्शितं भवति। तथापायोऽपि, **यावदनेनापेतव्यं तावदेवापायेन युज्यत** इति यावच्छब्दार्थमधिकृतं भावयति, यथा सूक्ष्मनिगोदापर्याप्तकजीवस्यावरणान्तरायक्षयोपशमकृतयोगोपयोगस्वरूपस्याक्षरानन्ततमभागोपलम्भमात्रेऽवश्यमवतिष्ठते ज्ञानदृष्ट्यावरणवीर्यान्तरायोदयजनितोपघातयोगोपयोगहानिः, न ततः परं हीयते, अन्यथा तस्याजीवत्वप्रसङ्गादिति। तस्माद् **यावद्वचनाद्** द्रव्यमेवावस्थितं वर्धतेऽपैति वा, न च वृद्ध्यपायरहितसमवस्थितत्वे सत्यपि, इत्येषोऽस्य ग्रन्थस्यार्थः। तस्मादयमपि ग्रन्थो द्व्यात्मकदर्शनेनैव नेतुं शक्यते, नान्यथेति प्रतिपत्तव्यम्। किं कारणम्? **सन्निहितव्यक्तियुक्तत्वात्**, सन्निहितस्य अवस्थितशक्तेरेव व्यक्तिराविर्भावः सलिलसेकेन भूमिगन्धस्य, तस्या
२७१-१ व्यक्तेर्युक्तत्वात् 'द्रव्यं च क्रिया च भवति' इति ग्राह्यम्, अन्यथा तदयुक्तेरसत्कार्यवादप्रसङ्गादसम्भवाच्च।

'द्रव्यमेव, क्रियैव' इत्यनयोर्वादयोरयुक्तिरुच्यते। तत्र 'द्रव्यमेव' इति तावन्न युज्यते। कथम्? **यदि तु 'द्रव्यम्' इत्येवाक्रियमभवनमभविष्यद्** वृद्धिव्ययरहितमपरिणामैकान्तरूपं यद्यभविष्यत् **ततो नाभविष्य**दिति क्रियातिपत्तौ लृङ्, न भवनमेवापद्यत इति न भवत्येवेत्यर्थः, क्रिया भवनं प्रवृत्ति-

---

१ दृश्यतां पृ० **२८४-२, २८५-१**। "प्रवृत्तिः खल्वपि नित्या। न हीदं कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते वर्धते यावदनेन वर्धितव्यमपचयेन वा युज्यते। तच्चोभयं सर्वत्र।" इति **पा**तञ्जलमहाभाष्ये पाठः॥ २ दृश्यतां पृ० २४२ टि० ४॥ ३ °**निश्वास**° प्र०॥ ४ **संवृत्ति**° प्र०॥ ५ वि० विना °**पस्त्याक्ष**° प्र०। °**पस्त्वक्ष**° वि०॥ ६ **सपि** भा०॥ ७ °**थेति पत्तव्यम्** प्र०॥ ८ **लृद्रभवन**° प्र०। "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" **पा०** ३।३।१३९॥

**अप्रवृत्तत्वात्, खपुष्पवत्। भवदेव हि भवति। खपुष्पमपि वाऽभविष्यत्, अभवद्भवनात्, द्रव्यवत्। आत्माद्यपि च प्रवृत्तमेव, द्रव्यत्वात्, तन्तुवद् बीजवत्। तथा च चैतन्यादिलक्षणता आत्मादेस्तथाभवनप्रवृत्तिसामर्थ्यात् सत्यपि द्रव्यत्वतुल्यत्वे।**

**अथ तु प्रवृत्तिरित्येवाद्रव्या ततो नैव स्यात् सा प्राक् पश्चात् तदा वाऽद्रव्यत्वा-**

---

रित्यर्थः, यदि न प्रवर्तेत[1] न परिणमेत् न क्रियापि स्यात् द्रव्यं **प्राक्** केनचिद् गमनादिप्रकारेणावृत्तम् '**तदा[2] वा**' इति सामान्यकालवाचिना शब्देन इदानीमपि निर्देशकाले तदप्रवर्तमानम् **पश्चाच्चै[3]**ष्यत्कालेऽप्यप्रवर्तिष्यमाणं न स्यादित्यर्थः, **अप्रवृत्तत्वात्** । किमुक्तं भवति? प्राग् नासीत् इदानीमप्रवृत्तत्वात् **खपुष्पवत्** । इदानीं न स्यात् प्रागप्रवृत्तत्वात् खपुष्पवत्, पश्चान्न भविष्यति इदानीमप्रवृत्तत्वात् खपुष्पवदेवेत्यभूतं तत् स्याद् द्रव्यं क्रियाशून्यत्वात् परिणामशून्यत्वादप्रवृत्तत्वादित्यर्थः । **भवदेव हि भवति,** प्रवर्तमानमेव हि केनचिद्धर्मेण मृदिव शिवकादिना भवति, न निरुपाख्यम् । यदि निरुपाख्यमपि स्यात् खपुष्पमपि स्यात्, **खपुष्पमपि वाऽभविष्यद्** भवति भविष्यति [ च ] त्वदभिमत**द्रव्यवत् अभवद्भवना**दिति अक्रियभवनादित्यर्थः ।

स्यान्मतम्, अनैकान्तिकमेतत् – अभवद्भवनात् खपुष्पमपि भवेद् द्रव्यवत्, द्रव्यमपि मा भूदप्रवृत्तत्वात् खपुष्पवदिति । कस्मात्? आत्माकाशादीनामप्रवृत्तिभवनानां सत्त्वदर्शनादपरिणामित्वादित्यर्थ इति । एतच्चायुक्तम्, तद्विपक्षत्वासिद्धेः, यस्माद् **आत्माद्यपि च प्रवृत्तमेव द्रव्यत्वात् तन्तुवद्** २७१-२
**बीजव**दिति । यथा तन्तवस्तन्त्ववस्थायां पटावस्थायां च प्रवृत्तत्वाद् भवन्त्येव तथा आत्मादयः, एवं[4] बीजमेव ह्यङ्कुरादिभावेषु प्रवृत्तमेव तथात्मादय इति दृष्टान्तद्वयोपादानाद् न्यायव्यापिता प्रदर्श्यते । यथोक्तम् – **अस्ति[5]-भवति विद्यति-पद्यति-वर्ततयः सन्निपातषष्ठाः सत्तार्थाः** [ ] इति । तस्मात् तेन तेन प्रकारेण परिणममानं प्रवर्तमानं वस्तु भवतीत्युच्यते, स्वेन स्वेन च पारिणामिकेन प्रकारेण भवति परिणमतीति । अत्रोपचयहेतुमाह – **तथा च चैतन्यादिलक्षणते**त्यादि यावत् **तुल्यत्वे** । सत्यपि तुल्ये द्रव्यत्वेऽस्त्येव जीवद्रव्याणामजीवद्रव्याणां च भवनविशेषः । तद्यथा – जीवद्रव्यस्य चैतन्यवीर्यामूर्त्यसङ्ख्यातप्रदेशावगाहादिस्तथाभवनप्रवृत्तिसामर्थ्यम्, अजीवद्रव्येष्वपि पुद्गलानां रूपरसादिकर्मदोषकर्मादि[6] तथाभवनसामर्थ्यम्, यथासङ्ख्यं च धर्माधर्माकाशकालानां गतिस्थित्यवगाहवर्तना[7]स्तथाभवनसामर्थ्यानि । तस्मा**दात्मादेर्द्रव्यत्वतुल्यत्वे सत्यपि तथाभवनप्रवृत्तिसामर्थ्याच्चैतन्यादि**प्रतिविशिष्ट**लक्षणतो**पपद्यते ।

एवं तावद् द्रव्यस्य क्रियाविरहितस्याभाव उक्तः, तयैव युक्त्या क्रियाया अपि विना द्रव्येणासत्त्वमित्यत आह – **अथ तु प्रवृत्तिर्भूतिरित्येवाद्रव्या** प्रतिक्षणप्रवृत्त्युपरमलक्षणा भूतिरित्येव, **एवे**त्यवधारणा**दद्रव्या** द्रव्यविरहिता क्रियैवेत्यर्थः, **ततो नैव स्यात् सा** पूर्ववत्[8] **प्राक् पश्चात् तदा वाऽद्रव्यत्वादभूतत्वात् खपुष्पव**दिति तथैव व्याख्येयं **निर्बीजत्वादस्थितत्वा**दित्यादिपर्यायैस्त्रिष्वपि कालेषु साधनानि

---

१ **प्रवर्तेन परिणामेत्** भा० । **प्रवर्तेत परिणामेत्** य० ॥ २ **तदेवेति** प्र० ॥ ३ **पश्चात्वै°** भा० । अत्र **पश्चाद्वै°** इत्यपि पाठः स्यात् ॥ ४ **एवं** य० प्रतिषु नास्ति ॥ ५ दृश्यतां पृ० ३४ पं० २० ॥ ६ वि० विनान्यत्र **°कर्मदोषाकर्मादि** य० । **°कर्मादि** वि० ॥ ७ **°हा वर्तना तथा°** प्र० ॥ ८ दृश्यतां पृ० ३८० पं० ५ ॥

**दभूतत्वाद् निर्बीजत्वादस्थितत्वात्······खपुष्पवत्। भवदेव हि भवति द्रव्यार्थतः। खपुष्पमपि वा स्याददव्यत्वाद् भाववत्। भूतार्थसामर्थ्यादेव हि प्रवृत्तिः। गुणाद्यपि च द्रव्यमेव वृत्तत्वात् तन्त्वादिवत्। एवं क्रियापि द्रव्येण विना नास्ति।**

**भवतीति भावः। यतोऽसौ भवतीति भावः तद् भवनम्। अत एव उ[1]भयनियमः–प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरैव प्रकृतिः।**

---

२७२ १ योजयद्भिरिति विशेषः। **भवदेव हि भवति द्रव्यार्थत** इति स्थितिरूपं द्रव्यार्थभवनमाचष्टे। एतदनिच्छतोऽस्थितभवनसाधर्म्यात् **खपुष्पमपि वा स्याददव्यत्वाद् भाववत्** क्रियावत्, अनिष्टापादनमेतत्। **भूतार्थसामर्थ्यादेव [2]हि प्रवृत्तिः,** द्रव्यार्थसामर्थ्यादेव यस्मात् प्रवृत्तिः क्रिया, न निर्बीजेत्यर्थः। अत्रापि पू[3]र्ववदनैकान्तिकत्वाशङ्का – ननु निर्बीजगुणादिप्रवृत्तिर्दृष्टेति। अत्रोत्तरमाह – **गुणाद्यपि च द्रव्यमेव वृत्तत्वात् तन्त्वादिवत्** तन्तुबीजमृदादिवदिति प्रा[4]ग्वत्, इह तु द्रव्यभवनमन्तरेण प्रवृत्त्यभाव इति प्रदर्श्योपनेयमिति विशेषः। **एवं क्रियापि द्रव्येण विना नास्ती**त्युक्तन्यायवदेव।

इति द्रव्यक्रियालक्षणं द्वैतमुक्त्वा अक्षरार्थन्यायेनापि प्रतिपादयिष्यन्नाह – **भवतीति भाव** इति। अत्र भु[5]वश्च [ ] इतीष्टया कर्तरि 'ण'प्रत्ययं केचिदाहुः, इह तु भूयत इति भावे घञ्प्रत्ययः, स च येन भूयते स भाव इत्यर्थसामर्थ्याद् यो भवति स एव सम्बध्यत इति 'भवतीति भावः' इत्युक्तम्। स च कर्ता, कर्ता च द्रव्यम्, तस्माद् भावशब्दो द्रव्यवाची, क्रियावा[6]चित्वमपि **यतोऽसौ भ[7]वतीति भावः,** यस्माद्धेतोर्येन प्रकारेण यतो धर्मेण धर्माद् वा भवति तद्द्रव्यं स भाव इति, **इतिशब्दस्य** हेत्वर्थत्वाद् 'भवति' इत्येतद् यतो भ[8]वति भावः सा क्रिया। कुतः पुनर्भ[9]वतीति भवति? भवनसम्बन्धाद् भवतीति भवति तस्य द्रव्यस्य तस्मात् **तद् भवनं** भावः सा क्रिया प्रवृत्तिर्भवनमित्यर्थः।

**अत एवे**त्यादि तस्योभयार्थत्वदर्शनस्य दृढीकरणार्थं यावत् **प्रत्ययपरैव प्रकृति**रित्युत्तानार्थम्। क्विप्प्रत्यये [10]चिदादीनां प्रथमैकवचने प्रकृतिमात्रप्रयोजनदर्शनात् 'अधुना' इत्यादिषु च प्रत्ययमात्रश्रवणाद्

---

१ "किमयं प्रत्ययनियमः — प्रकृतिपर एव प्रत्ययः प्रयोक्तव्योऽप्रकृतिपरो नेति, आहोस्वित् प्रकृतिनियमः – प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या प्रत्ययपरा नेति?। कश्चात्र विशेषः? 'तत्र प्रत्ययनियमे प्रकृतिनियमाभावः।' तत्र प्रत्ययनियमे सति प्रकृतेर्नियमो न प्राप्नोति, अप्रत्ययिकायाः प्रकृतेः प्रयोगः प्राप्नोति···। अस्तु तर्हि प्रकृतिनियमः, 'प्रकृतिनियमे प्रत्ययानियमः', प्रकृतिनियमे सति प्रत्ययस्य नियमो न प्राप्नोति,······अप्रकृतिकस्य प्रत्ययस्य प्रयोगः प्राप्नोति। 'सिद्धं तूभयनियमात्'। सिद्धमेतत्, कथम्? उभयनियमात्, उभयनियमोऽयम् – प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिरिति।" इति **पा**तञ्जलमहाभाष्ये ३।१।२ ॥ २ हि **प्रवृत्तिः द्रव्यार्थसामर्थ्यादेव** हि **प्रवृत्तिर्द्रव्यार्थसामर्थ्यादेव** प्र० ॥ ३ दृश्यतां पृ० ३८१ पं० १३ ॥ ४ दृश्यतां पृ० ३८१ पं० २ ॥ ५ दृश्यतां पृ० १७३ पं० २५, टि० ९। "विभाषा ग्रहः।३।१।१४३। णो वा, पक्षेऽच्। व्यवस्थितविभाषेयम्, तेन जलचरे ग्राहः, ज्योतिषि ग्रहः। 'भवतेश्च' इति **का**शिका, भवो देवः संसारश्च, भावाः पदार्थाः। भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच् भावः।" इति **सिद्धान्तकौमुद्याम्** ॥ ६ °**वाचीत्वमपि** य० ॥ ७ **भवति भावः** य० ॥ ८ **भवति स भावः** य० ॥ ९ °**तीति भवनस**° य० ॥ १० **विदा**° प्र०। "पृथक् सर्वेषामिति चेत्, एकशेषे पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वात्। पृथक् सर्वेषामिति चेत्, एकशेषे पृथग्विभक्त्युपलब्धिः प्राप्नोति। किमुच्यते 'एकशेषे पृथग्विभक्त्युपलब्धिः' इति? यावता समयः कृतः 'न केवला प्रकृतिः प्रयोक्तव्या, न च केवलः प्रत्ययः प्रयोक्तव्यः' इति। तदाश्रयत्वात् प्राप्नोति, यत्र हि प्रकृतिनिमित्ता प्रत्ययनिवृत्तिः तत्राप्रत्ययिकायाः प्रकृतेः प्रयोगो भवति – अग्निचित् सोमसुदिति यथा। यत्र च प्रत्ययनिमित्ता प्रकृतिनिवृत्तिः तत्राप्रकृतिकस्य प्रत्ययस्य प्रयोगो भवति – अधुना इयानिति यथा।" इति **पा**तञ्जलमहाभाष्ये १।२।६४। "अधुना।५।३।१७। इदमः सप्तम्यन्तात् कालवाचिनः स्वार्थे 'अधुना'प्रत्ययः स्यात्। इश्, 'यस्य' [ ६।४।१८४ ] इति लोपः, अधुना।" इति **पा० सिद्धान्तकौमुद्याम्** ॥

**[1]उभयार्थवत्त्वप्रदर्शनाय च कोऽसौ भावो नाम? यत् तद् भूयते केनापि, नोच्यते– योऽसौ भवति कोऽपि, अस्वशब्दोपादानसाध्यभावत्वाद् भावस्य। कस्य भावः?**

---

व्यभिचरतीति चेत्, अत एव त[2]दर्थगतेरन्यत्र चोभयप्रयोगदर्शनादनुमीयते द्वयर्थतेति । व्युत्पादनकालेऽपि २७२-२
प्रकृत्यर्थव्युत्पत्तिरन्यथा अन्यथा प्रत्ययार्थव्युत्पत्तिः शास्त्रेऽन्व[3]यव्यतिरेकाभ्यां क्रियते । तत् किमर्थमिति चेत्, **[1]उभयार्थवत्त्वप्रदर्शनाय चे**त्यादि यावत् **कोऽपी**ति । **कोऽसौ भावो नाम**? इति प्रश्नोपक्रमं व्युत्पाद्यते क्रिया, **यत् तद् भूयते केनापि,** 'भूयते' इति भावे लकारविधानात् 'यत् तत्' इति च भवनमेव प्रकृत्यर्थो निर्दिश्यते । **नोच्यते–योऽसौ भवति कोऽपी**ति, येन भूयते योऽसौ भवति कर्ता प्रत्ययार्थः स नोच्यते तस्मिन् प्रश्ने । तस्मात् प्रकृत्यर्थपरा व्युत्पादनैवम्प्रकारा । किं कारणम्? **अस्वशब्दोपादानसाध्यभावत्वाद् भावस्य ।** अस्मदुक्तानुकाराद् यथोक्तमन्यैर्द्रव्यभावयोरुक्तिक्रियालक्षणे भेदोपप्रदर्शने **'स्वशब्दोपादानसिद्धभावं सत्त्वम्, अस्वशब्दोपादानसाध्यभावो भावः'** इत्येतदुक्तिक्रियाश्रयं सत्त्वभावयोः पृथक्त्वम् [　　　] इति । प्रसिद्धं हि लोके शास्त्रेषु च – क्रियावाचकमाख्यातं द्रव्याभिधायकं नामेति, **स्वभावसिद्धं द्रव्यं हि क्रिया चैव हि भाव्यते**[4] [पा० म० भा० १।३।१] तथा **पूर्वापरीभूतं भावमाख्यातेन आचष्टे उपक्रमप्रभृत्यपवर्गपर्यवसानं परिनिष्पन्नं नाम्ना मूर्तं सत्त्वं यथासत्त्वं व्रजति पचति व्रज्या पक्तिः**[5] [निरुक्त. १।१] इति । तस्माद् घटपटादिशब्दा द्रव्यस्य स्वशब्दाः, पचतिगच्छत्यादयः क्रियायाः, भावशब्दश्च द्वयोरपि दृष्टः । त[6]त्रास्वशब्दस्य द्रव्यवाचिनो घटदेवदत्तादेरुपादानेन साध्यो भावः साध्यत्वम्, यासावनुमानगम्या क्रि[7]या न शक्या साधनात् पृथग् दर्शयितुं गर्भवद् निर्लुठिता सा परतः साधनत एव यथा आत्मानं लभते तथाभिधानेऽपीत्यस्वशब्दोपाद[8]ानसाध्यभावो भावः क्रियेत्यर्थः । तद्भावादस्वशब्दोपादानसाध्यभावत्वाद् भावस्य प्रवृत्तिलक्षणस्यैवं प्रश्नप्रतिवचनसिद्धिरिति ।

---

१ अत्र **उभयार्थत्वप्रदर्शनाय** इति पाठः समीचीनो भाति, दृश्यतां पृ० ३८२ पं० ९ । २ एतत्समानार्थिका चर्चा **पा**तञ्जलमहाभाष्ये इत्थमुपलभ्यते — "लुप्ताख्यातेषु चोपसङ्ख्यानं कर्तव्यम्, निष्कौशाम्बिः निर्वाराणसिः ।...... सिद्धं तु काङ्क्षतिदुर्गतिवचनात् 'प्रादयः क्तार्थे' इति । तदर्थगतेर्वा । तदर्थगतेर्वा पुनः सिद्धमेतत् । किमिदं तदर्थगतेरिति? तस्यार्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, तदर्थगतेरिति यस्यार्थस्य कौशाम्ब्या सामर्थ्यं स निसोच्यते । अथवा सोऽर्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, तदर्थगतेरिति योऽर्थः कौशाम्ब्या समर्थः स निसोच्यते ।" **पा० म० भा०** २।१।१ ॥ ३ "कथं पुनर्ज्ञायते – अयं प्रकृत्यर्थः, अयं प्रत्ययार्थ इति? सिद्धं त्वन्वयव्यतिरेकाभ्याम् । अन्वयाच्च व्यतिरेकाच्च । कोऽसावन्वयो व्यतिरेको वा? इह 'पचति' इत्युक्ते कश्चिच्छब्दः श्रूयते पच्छब्दश्चकारान्तः, 'अति'शब्दश्च प्रत्ययः । अर्थोऽपि कश्चिद् गम्यते विक्लित्तिः कर्तृत्वमेकत्वं च । 'पठति' इत्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी; पच्छब्दो हीयते पठ्शब्द उपजायते 'अति'शब्दोऽन्वयी । अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी, विक्लित्तिर्हीयते पठिक्रियोपजायते कर्तृत्वं चैकत्वं चान्वयी । ते मन्यामहे यः शब्दो हीयते तस्यासावर्थो योऽर्थो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते, यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयी ।" इति **पा**तञ्जलमहाभाष्ये १।३।१ ॥ ४ दृश्यतां पृ० १२५ पं० ७ । "एवं तर्हि कर्मसाधनो भविष्यति 'भाव्यते यः स भावः' इति । क्रिया चैव हि भाव्यते, स्वभावसिद्धं तु द्रव्यम् ।" इति **पा**तञ्जलमहाभाष्ये पाठः ॥ ५ दृश्यतां पृ० १२६ पं० २४ ॥ ६ **तत्र स्व°** प्र० ॥ ७ "क्रिया नामेयमत्यन्तापरिदृष्टा अशक्या क्रिया पिण्डीभूता निदर्शयितुम्, यथा गर्भो निर्लुठितः । साऽसावनुमानगम्या । कोऽसावनुमानः? इह सर्वेषु साधनेषु सन्निहितेषु कदाचित् 'पचति' इत्येतद् भवति, कदाचिन्न भवति । यस्मिन् साधने सन्निहिते 'पचति' इत्येतद् भवति सा नूनं क्रिया । अथवा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रिया ।" इति **पा**तञ्जलमहाभाष्ये १।३।१ ॥ ८ **°दानासा°** प्र० ॥

**योऽसौ भवति, नोच्यते – यत् तद् भूयते केनापि, स्वशब्दोपादानसिद्धभावत्वात् सत्त्वस्य ।**

**लिङ्गादिमद् द्रव्यम्, क्रिया तद्रहिता । लिङ्गादिमत्त्वादलिङ्गादिमत्त्वाच्च भवतो भवनस्य च उभयमेव भावः । लिङ्गसङ्ख्यावतो द्रव्याद् वस्तुत्वैकत्वगतिः क्रिया**

---

तद्विपर्ययेण तु द्रव्यभावस्य प्रश्नप्रतिवचने दृष्टे व्युत्पादनकाले । तद्यथा – **कस्य भावः** इति प्रश्नः,
२७३-१ कस्य क्रिया प्रवृत्तिः ? कर्तरि षष्ठीं कृत्वा । तदनुरूपं प्रतिवचनमपि – **योऽसौ भवती**ति यो भविता कर्तैव वा द्रव्यलक्षणः स उच्यते । नोच्यते – यत् तद् भूयते तद् भवनमेव । किं भूयते न भूयते केनापि ? इति अनिर्दिष्टकारकं हि भावसामान्यमेव भावस्याभिन्नत्वात् । किं कारणम् ? **स्वशब्दोपादानसिद्धभावत्वात् सत्त्वस्य,** स्वशब्देनैव पृच्छ्यते – कस्य भावः ? को भवतीत्यर्थः । न पृच्छ्यते – किं भूयते न[1] भूयते केनापि ? इति । प्रतिवचनमपि तथोच्यते – योऽसौ कोऽपि भवतीति तस्य भावः स भवति तेन भूयते इति । नोच्यते – यत् तद् भूयते केनापीति, अविशदं[2] भवनमात्रं न व्याक्रियते तस्यापृष्टत्वात् । किं कारणम् ? क्रियालक्षणभाव[3]व्युत्पादनविपर्ययेण प्रश्नव्याकरणदर्शनात् तथैवार्थप्रसिद्धेस्तद्वाचिशब्दप्रवृत्तेरपि तदनुरूपत्वादिति ।

किञ्चान्यत्, **लिङ्गादिम**दित्यादि याव**दुभयमेव भाव** इति । द्रव्यं लिङ्ग-सङ्ख्या-काल-कारकयोगि, क्रिया तद्रहिता । [4]लिङ्गादिमत्त्वादलिङ्गादिमत्त्वाच्च भवतो द्रव्यस्य भवनस्य च यथासङ्ख्यं भिन्नं वस्तु [5]भवद्-भवनभूतं द्विधा । तस्मादुभयवस्तु[6]तश्चैकमिति प्रतिपाद्यमुपपत्त्येत्यतः प्रतिज्ञायते – **लिङ्गसङ्ख्यावत** इत्यादि । वस्तुत्वेनैकत्वं वस्तुत्वैकत्वम्, तस्य गतिः आपत्तिः, वस्तुत्वेनैकत्वमापन्ना **क्रिया स्वरूपतोऽन्यैव,** द्रव्यक्रियास्वरूपभिन्नमेकं वस्त्वित्यर्थः । कस्मात् ? **अलिङ्गसङ्ख्यत्वात्**, न लिङ्गसङ्ख्ये यस्य तदिदमलिङ्ग-
२७३-२ सङ्ख्यं भवनम् । तद्धि वस्तुत्वेनैकत्वं गतं सद् द्रव्येण सहानन्यदप्यन्यदेव इति प्रतिज्ञार्थोऽनेन साध्यते 'अलिङ्गसङ्ख्यत्वात्[7]' इति हेतुना । दृष्टान्तः – **प्लक्षादिव[8] भिन्नार्थानामेकसम्बन्धिविषयश्चार्थः[9],** यथा 'प्लक्षश्च धवश्च' इत्यत्र 'च'शब्दः प्लक्षधवयोरन्ययोः समुच्चेतापि समुच्चयमेकमेव सम्बन्धिनं विषयीकृत्य वृत्तत्वादनन्यत्वेऽपि सत्यन्यस्यैवार्थस्य वाचकस्तथा द्रव्यक्रियात्मकवस्तुत्वैकत्वान्यत्वमिति । अत्राह – द्रव्यादन्यत्वेन पक्षीकृतायां क्रियायां समुच्चयनक्रियैव यदि दृष्टान्तत्वेनोच्यते साध्यत्वाददृष्टान्तः । अथ मा भूदेष दोष इति द्रव्यान्तर[10]समुच्चयो यदि दृष्टान्त उच्यते तथापि द्रव्यार्थत्यागः प्लक्षधवसमुच्चयाख्यादिसर्वसत्तार्थ[11]सङ्ग्रहार्थत्वाद्

---

१ **न भूयते** भा० प्रतौ नास्ति ॥ २ °**शदं** प्र० ॥ ३ °**भावाव्यु**° प्र० ॥ ४ **लिङ्गादिमत्त्वाच्च** प्र० ॥ ५ **तद्भवनभूतं तद्विधा** य० ॥ ६ °**वस्तुतश्चैवासिति** प्र० । अत्र 'तस्मादुभयं वस्तु, तच्चैकमिति' इत्यपि पाठः स्यात् ॥ ७ °**संख्यादिति** प्र० ॥ ८ **प्लक्षादिवत्** प्र० ॥ ९ 'अलिङ्गसङ्ख्यत्वात्' इति हेतोः साध्येनानुगमप्रदर्शनार्थं समुच्चयश्चार्थो दृष्टान्तत्वेन अत्र विवक्षित इति भाति । दृश्यतां पृ० ३८५ पं० १३ । "चार्थे द्वन्द्वः" । २।२।२९ । चार्थ इत्युच्यते, चश्चाव्ययम्, तेन समासस्याव्ययसंज्ञा प्राप्नोति । नैष दोषः, पाठेनाव्ययसंज्ञा क्रियते, न च समासस्तत्र पठ्यते । पाठेनाप्यव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भवन्ति । यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसङ्ख्याभ्यां योगोऽस्ति । नेदं वाचनिकम् – अलिङ्गताऽसङ्ख्यता वा, किं तर्हि ? स्वाभाविकमेतत्, तद्यथा — समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न; न चेदानीं कश्चिदर्थवानिति सर्वैरर्थवद्भिः शक्यं भवितुं कश्चिद्वाऽनर्थक इति सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम् यत् प्राक् समासाच्चार्थस्य लिङ्गसङ्ख्याभ्यां योगो नास्ति समासे च भवति । स्वाभाविकमेतत् ।" इति **पा**तञ्जलमहाभाष्ये २।२।२९ ॥ १० ( द्रव्यान्तरं समुच्चयो ? ) ॥ ११ °**सत्तार्थ**° भा० प्रतौ नास्ति ॥

**स्वरूपतोऽन्यैव, अलिङ्गसङ्ख्यत्वात्, प्लक्षादिव भिन्नार्थानामेकसम्बन्धिविषयश्चार्थः।**

---

द्रव्यार्थस्य । [1]अथ द्रव्यार्थं मा त्याक्षमित्येकमेवेष्यते पुनरपि दृष्टान्ताभावः द्रव्याद् भिन्नस्यार्थान्तरस्याभावादिति । अत्रोच्यते – **पदार्थाना**मिति पदार्थग्रहणाद् नैष दोषः । प्रातिपदिकार्थो हि क्रियासम्बन्धी अन्तरङ्गत्वात् क्रियायाः, न पदार्थो बहिरङ्गत्वात् । यथा पुत्रमिच्छति पुत्रीयतीति द्वितीया बहिरङ्गकर्माभिधायिनी पुत्रस्य इषिणान्तरङ्गेण [2]सम्बद्धत्वात्, उक्तं च – **प्रातिपदिकानां क्रियाकृताः सम्बन्धा भवन्ति** [[3]पाँ० म० भा० २।३।५०] इत्येषितुर्देवदत्तस्य पुत्रेणाभिसम्बन्धो न पदार्थेन विभक्त्यन्तेन, पदान्तरसन्निधौ तु तद्व्यक्तिः **कारकाणां प्रवृत्तिविशेषः क्रिया** [[4]पाँ० म० भा० १।१।१] इति वचनात्, क्रियया सम्बन्धमित्वा कर्मादित्वमेतीति पूर्वमेव क्रियया सम्बन्धः । यदि च क्रियासम्बन्धवत् प्रातिपदिकावस्थायामेव समुच्चयादिसम्बन्धोऽपि स्यात् ततः प्रातिपदिकार्थातिरेकात् [5]सम्बोधनवद् यत्नान्तरविधेया प्रथमा स्यात्, द्वितीयादयश्च न स्युः, कर्माद्यधिके हि प्रातिपदिकार्थे ता विधीयन्ते । यदि तु समुच्चयाद्याधिक्ये २७४-१ कर्माद्यस्तीति द्वितीयादयः स्युस्ततः कर्माद्याधिक्येऽपि प्रातिपदिकार्थोऽस्तीति प्रथमैव स्यात् । अतः पदार्थोत्तरकालभाविनि वाक्यार्थ उपजा[6]यमाने तस्योपकुर्वन्तश्चादयः पदैरभिसम्बध्यन्त इत्यत उच्यते – **भिन्नानां पदार्थाना**मिति क्रियासम्बन्धव्युदसनार्थम् । स च समुच्चय **एकसम्बन्धिविषयः** । कोऽसावेकः सम्बन्धी ? वाक्यार्थः प्लक्षधवाद्येकदेशता अन्वाचयसमु[7]च्चययोरानयननयनादि । उक्तं च – **चार्थे द्वन्द्वः** [पा० २।२।२९], चस्य च कोऽर्थः ? समु[8]च्चयोऽर्थोऽन्वाचयः समाहार इतरेतरयोगश्च पदार्थोत्तरकालभाविनः । तत्र समुच्चयः [9]गामश्वं पुरुषं शकुनिं पशुमहरहर्नयमानो वैवस्वतो न तृप्यति सुरया इव दुर्मदीति । अन्वाचयो यथा – देवदत्त भिक्षामट यज्ञदत्तं चानय । पाणिपादं ब्राह्मण-क्षत्रिय-विट्-शूद्राः रामकेशवाविति समाहारेतरेतरयोगौ । ये च द्रव्याणां गुणानां क्रियाणां च दृश्यन्ते [10]यथा घटश्च पटश्चेति रूपं च रसश्चेति हसति तिष्ठति रमते [11]वेत्यादयः पदार्थोत्तरकालभाविनः समुच्चयविकल्पा[12]दयः न ते द्रव्यं न क्रिया न [13]गुणः, किन्तु द्रव्यस्यैव क्रियात्वाद् [14]वीरपुरुषविशेषणविशेष्यैकात्मवद् वस्तुत्वैकत्व[15]गत्यनन्यान्यत्वभाजो धर्माः प्रवृत्तिरेवेति

---

१ अ **द्रव्यार्थं मा त्याक्षामि**° प्र० ॥ २ **सम्बन्धत्वात्** प्र० ॥ ३ "प्रातिपदिकानां क्रियाकृता विशेषा उपजायन्ते तत्कृताश्चाख्याः प्रादुर्भवन्ति – कर्म करणमपादानं सम्प्रदानमधिकरणमिति ।" इति **पा**तञ्जलमहाभाष्ये ॥ ४ "न ब्रूमः कारकाणि क्रियेति । किं तर्हि ? कारकाणां प्रवृत्तिविशेषः क्रिया ।" इति **पा**तञ्जलमहाभाष्ये ॥ ५ "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । सम्बोधने च ।" **पा०** २।३।४६–४७ । दृश्यतां **पा०म०भा०** २।३।४६ ॥ ६ °**जायते तस्यो**° प्र० ॥ ७ °**च्चयोरान**° प्र० ॥ ८ °**च्चयार्थौ**° य० ॥ ९ "अहरहर्नयमानो गामश्वं पुरुषं पशुम् । वैवस्वतो न तृप्यति सुराया इव दुर्मदी ॥ १ ॥" इति **पा**तञ्जलमहाभाष्ये । २।२।२९ ॥ १० **णत्वाच यथा** य० ॥ ११ (चेत्यादयः ?) ॥ १२ °**दयः । न चेद्रव्यं** प्र० ॥ १३ **गुणाः** भा० ॥ १४ "समानाधिकरणेषूपसङ्ख्यानमसमर्थत्वात् । समानाधिकरणेषूपसङ्ख्यानं कर्तव्यम्, वीरः पुरुषो वीरपुरुषः । किं पुनः कारणं न सिध्यति ? असमर्थत्वात् । कथमसामर्थ्यम् ? 'द्रव्यं पदार्थ इति चेत्' । यदि द्रव्यं पदार्थः, न भवति तदा सामर्थ्यम् भेदाभावात् । अथ हि गुणः पदार्थः, भवति तदा सामर्थ्यम् । अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वम् । नान्यत्वमस्तीतीयता सामर्थ्यं भवति, अन्यो हि देवदत्तो गोभ्यश्चाश्वेभ्यश्च, न चैतस्यैतावता सामर्थ्यं भवति । को वा विशेषो यद् गुणे पदार्थे सामर्थ्यं स्याद् द्रव्ये च न स्यात् ? एष विशेषः – एकं तयोरधिकरणम्, अन्यश्च वीरत्वं गुणः अन्यः पुरुषत्वम् ।" इति **पा**तञ्जलमहाभाष्ये २।१।१ ॥ १५ °**गत्यान**° य० ॥

**साधु भवति देवदत्तादौ यत् त्रिलिङ्गं तन्न भवति भवने, तथा एकस्मिन् द्वयोर्बहुषु वा भवत्सु याः सङ्ख्यास्ता न भवन्ति। प्रत्ययपरप्रकृतिव्यवस्थया तु प्रथमैकवचने, अतिक्रमकारणाभावात्। नपुंसकं च भवनस्याव्यक्तत्वात्, किमपि दृश्यते इति**

**तथा त्रिकालविषयाद् द्रव्यादन्यो भावो न च तेन विना कारकः त्रिकाल-**

---

सम्बन्धः। यथात्र वीरशब्दः पुरुषसामानाधिकरण्याद् वस्तुत्वेनैकत्वं गतस्तथा पुरुषशब्दोऽपि वीरसामाना-
२७४-२ धिकरण्यात्, अन्यथा वैयधिकरण्याद् घटपटादिवदसम्बन्धादिदोषाः स्युः। अथ च वीरो विशेषणं पुरुषो विशेष्य इति परस्परतो भिन्नार्थत्वमनयोः, इतरथा सामानाधिकरण्यात् तादात्म्यात् पौनरुक्त्यादिदोषाः स्युः। दृष्टं चानयोरैकात्म्यं सामानाधिकरण्यात्, विशेषणविशेष्यभावाच्चान्यत्वम्। एवं प्लक्षादिपदत्वेन[1] दृष्टान्तपरिपूर्णत्वे सत्युत्तरकालभाविनश्चार्थस्यैकसम्बन्धिविषयत्वं प्लक्षधवाद्युपात्तैकसमुच्चयगोचरत्वमित्यनन्यत्वम्, अन्यत्वं तु प्लक्षधवयोरेवासौ समुच्चय इति, तथा द्रव्यादलिङ्गसङ्ख्यो भावो वस्तुत्वैकत्वगतिरनन्योऽन्यश्चेति। इत्थं वा[3] व्याख्यानेऽन्यत्वैकान्तो द्रव्यार्थत्यागोऽन्वयत्यागश्चेति परिहृता दोषाः।

अतः परमलिङ्गसङ्ख्यत्वप्रसाधनायोत्तरो ग्रन्थः **साधु भवती**त्यादिर्यावद् **भवत्सु याः सङ्ख्यास्ता न भवन्ती**ति। एकस्मिन् द्वयोर्बहुषु वा देवदत्तादिभवितृषु लिङ्गसङ्ख्याभेदवत्सु[4] यत् त्रिलिङ्गं सङ्ख्याश्चैकत्वाद्यास्ता न भवन्ति भवने नपुंसकलिङ्गमेकवचनमेव[5] चानुमीयते तद्विशेषणे साधुशब्दे श्रूयते च 'साधु भवन्तं पश्य' इत्यादि कारकादिव्यतिरेकेऽपि। तस्मादन्यद् भवनं भवद्भ्यो देवदत्तादिभ्यः स्वरूपतः सत्यपि वस्तुत्वैकत्वे। स्यान्मतम्—किमर्थं नपुंसकलिङ्गं प्रथमैकवचनं च? इत्यत्रोच्यते—**प्रत्ययपरप्रकृतिव्यवस्थया**[6] **तु प्रथमैकवचने**, किं कारणम्? **अतिक्रमकारणाभावात्।** अवश्यं च प्रत्ययपरा प्रकृतिः प्रयोक्तव्या, प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा [पा० २।३।४६] इति सत्तामात्रेऽपि प्रथमाविधानात् ततोऽतिरिक्तार्थासम्भवात् प्रथमातिलङ्घने फलाभावात् वचनस्य[7] च नान्तरीयकत्वात् सत्तामात्रार्थकारणत्वात् कारणान्तराभावात्, कारणाद्धि तदतिक्रमः स्यात्। **नपुंसकं च भवनस्याव्यक्तत्वात्,** अव्यक्ते[8] गुणसन्देहे
२७५-१ नपुंसकलिङ्गं प्रयोक्तव्यमिति। किं तथा लोके दृष्टमिति चेत्, उच्यते—**किमपि दृश्यते इति,** यथा हस्त्यश्वनरादिसमूहं दृष्ट्वा वक्तारो भवन्ति—किमपि दृश्यते, **इतिः** प्रदर्शने, एतदेव वाक्यमुदाहरणत्वेन प्रदर्शयति।

**तथे**त्यादि पूर्वसाधनवत् तस्मिन्नेव पक्षे हेत्वन्तरमुपचयरूपेणोच्यते। तेन प्रकारेण **तथा** यथा पूर्वं 'वस्तुत्वैकत्वगत्यनन्यदन्यत्' इति पक्षीकृत्य साधितं तथात्रापि **त्रिकालविषयाद् द्रव्यादन्यो भावो न च तेन विना कारक** इति पक्षः, द्रव्येण विना न स्वयं कारको भावः, तत्सहवृत्तिरेवान्यत्वेऽपीत्यर्थः।

---

१ °**पदत्तेन** पा० डे० लीं० रं० ही०। (°पदं, तेन, ?)॥ २ **धवादिउपा**° प्र०॥ ३ (च?)॥ ४ °**वस्तु पतत्रिलिङ्गं** प्र०॥ ५ °**नमेव वानु**° य०। °**नमेवानु**° भा०॥ ६ °**स्थाया** य०॥ ७ °**स्य वचनान्त**° प्र०॥ ८ दृश्यतां पृ० २४२ पं० ४॥

त्वात्, द्रव्यं त्रिकालविषयम् क्रिया तु त्रिकाला गमनगन्तृवत्, वर्तमान एव देवदत्ते गन्तरि गतित्रैकाल्यम् 'अगमद् गच्छति गमिष्यति' इति तथा 'अभूद् भवति भविष्यति' इति।

भावस्य द्रव्यादन्यत्वेन तदपृथक्कारकत्वेन च साध्यत्वाद् भावगमनयोरेकार्थत्वाद् दृष्टान्तः साध्यैकदेश इति चेत्, देवदत्तगमनयोस्त्रैकाल्यात्रैकाल्याभ्यां भेदसिद्धेर्द्रव्यभावयोरपि तद्वत्, युगपदयुगपत्तत्त्वखघटवत्।

अथ द्रव्यार्थभेदत्वादस्य कथमिदं प्रागभावप्रध्वंसाभावात्मकं त्रैकाल्यम्?

---

कस्मात्? **त्रिकालत्वात्**, त्रयः काला अस्येति त्रिकालः, कोऽसौ? भावः क्रियालक्षणः, '[1]**अभूद् भवति भविष्यति**' इत्युपनेष्यमाणत्वाद् भेदेन त्रिभिरपि कालैरभिसम्बन्धदर्शनाद् भावस्य त्रिकालत्वं सिद्धत्वाद्धेतुः। **द्रव्यं त्रिकालविषय**मिति, भावस्य त्रिधा भिन्नकालत्वेऽपि एकरूपत्वाद् वर्तमानत्वेनावतिष्ठमानं तत्सम्ब[2]न्धि द्रव्यं तांस्त्रीनपि विषयीकरोतीति 'त्रिकालविषयम्' इत्युच्यते, त्रिष्वपि कालेषु तदेव भवतीत्यर्थः। अत्रिकालं द्रव्यं त्रिकालविषयमिति **क्रिया तु त्रिकाला** वर्तमानविषयेत्युक्तं भवति। **गमनगन्तृव**दिति दृष्टान्तः। तद्व्याचष्टे–**वर्तमान एव देवदत्ते गन्तरि**, 'एव'कारोऽवधारणे, त्रिष्वपि कालेषु गन्तुर्वर्तमानैककालतामवधारयति। [3]**गतित्रैकाल्यम्**, गमनस्य त्रयोऽपि काला अनवधारितैकरूपा दृष्टाः। तन्निदर्शयति–**अगमद् गच्छति गमिष्यतीति**, [4]**तथाऽभूदि**त्यादिरुपनयो व्याख्यातार्थः। २७५-२

**भावस्ये**त्यादि परमताशङ्का। स्यान्मतम्–**भावस्य द्रव्यादन्यत्वेन तदपृथक्कारकत्वेन च साध्यत्वाद् भावगमनयोरेकार्थत्वाद्** द्रव्याद् भवनपृथक्त्वासिद्धिवद् गन्तुर्गमनपृथक्त्वासिद्धे**र्दृष्टान्तः साध्यैकदेश** इत्येतस्यां विचिकित्सायां कथं साधन**मिति चेत्**, उच्यते–**देवदत्तगमनयोस्त्रैकाल्यात्रै[5]काल्याभ्यां भेदसिद्धेर्द्रव्यभावयोरपि तद्व**दिति सामान्यविशेषयोः साध्यसाधनत्वाभ्यां विवक्षितत्वाददोषः तद्विचिकित्सायामपि [6]तुल्यत्वात्, **युगपदयुगपत्तत्त्वखघटव**दिति दृष्टान्तः, तस्य भाव**स्तत्त्वम्**, तदेव भवतीत्यर्थः। [7]ननूक्तं 'द्रव्यभेदे द्रव्यार्थत्यागः, अत्यागेऽन्वयाभावः' इति, नैष दोषः, **युगपदयुगपत्तत्त्व**विशेषणादात्मादिसर्वैक्याद् युगपत्तत्त्वं खं द्रव्यार्थात्माभेदात् खादेः द्रव्यात्मैव [8]वाऽयुगपत्तत्त्वो घटः, तथा त्रैकाल्यात्रैकाल्यवस्त्वन्यानन्यत्वे द्रव्यभावयोः।

**अथे**त्यादि। अथ मतम्–**द्रव्यार्थभेदत्वादस्य** नयस्य द्रव्यार्थस्य च नित्यत्वात् **कथमिदं प्रागभावप्रध्वंसाभावात्मकं त्रैकाल्यं** युज्यत इति [9]वाक्यशेषः। यत् प्राग् नासीदधुना भवति तद् वर्तमानमित्युच्यते, तच्च प्रागभूतम्, यद्विनष्टमतीतं प्रध्वस्तमभूतम्, यद् भविष्यति तदपि प्रागभूतमिदानीमभावात्, अङ्कुरघटकपालादिदर्शनात्। तच्च पूर्वापरकालतुल्यत्वाद् नित्यस्य न युक्तम्, **नेर्ध्रुवे** [10]त्यब्

---

१ दृश्यतां पं० २, १५॥ २ °न्धे प्र०॥ ३ **गतैत्रै**° भा०। **गतेत्रै**°(**स्त्रै**°?) य०॥ ४ **तथाभूत्यादि**° प्र०। दृश्यतां पं० २, ८॥ ५ °**काल्या भेद**° प्र०॥ ६ **तुल्यत्यते युगप**° प्र०॥ ७ दृश्यतां पृ० ३८४ पं० २४, पृ० ३८६ पं० ६॥ ८ (चायुग°?)॥ ९ **वाक्यविशेषः** प्र०॥ १० **त्यन्नित्य**° प्र०। "अव्ययात् त्यप्। ४।२।१०४।…त्यब् नेर्ध्रुवे। त्यब् नेर्ध्रुवे वक्तव्यः। नित्यः।" इति **पा**तञ्जलमहाभाष्ये॥

**न, प्रवृत्तिनित्यत्वात् । नित्यत्वस्यापि द्वित्वम् । कूटस्थस्य द्रव्यस्य तं तमात्मानं पर्यनुभवतः ध्रौव्यं कौटस्थ्यं च । इतरस्य तु तथा तथाभिव्यज्यमानस्य अकौटस्थ्यं सततसम्प्रवृत्तिरूपं नित्यत्वं च ।**

**अत एव भूताभूतभाक्त्वं 'द्रव्यादन्यो भावः' इत्यस्यार्थस्य साधनम् । व्यतिक्रान्त्यव्यतिक्रान्तिभाक्त्वाद् भिन्नौ क्रियाद्रव्यभावौ, तद्यथा – कृतः कटो देवदत्तेन, कृतः कर्मणा विभागः । क्रिया व्यतिक्रामति, विभागः कर्म च न व्यतिक्रामतः शब्दार्थस्य पिण्डितत्वात । न च व्यतिक्रमाव्यतिक्रमौ निर्निमित्तौ भवितुमर्हतः । दृष्टश्च कर्मविभागयोरव्यतिक्रमे करणस्य विभागविषयस्य व्यतिक्रमः । तत्र**

---

नित्यमिति निरुक्तेः । तस्मादसिद्धं भावस्य त्रैकाल्यम्, द्रव्यार्थाभ्युपगमात् । द्रव्यस्यैव वा त्रैकाल्याभ्युपगमे भावस्य द्रव्यार्थ[1]वादत्याग इति । अत्रोच्यते – **न** दोषः, **प्रवृत्तिनित्यत्वात्**, नात्रापि द्रव्यार्थत्यागः प्रवृत्ति-
२७६-१ नित्यत्वात्, भवनप्रवृत्तिर्भाव[2] इत्यर्थः, सा च प्रवृत्तिर्नित्या सदा प्रवृत्तेर्वस्तुनो भावोऽपि नित्य एवेति न द्रव्यार्थत्यागो नात्रैकाल्यमिति ।

इतर आह – कुतो नित्यत्वस्य द्वैतम् ? इति । अत्रोच्यते – वस्तुनो द्रव्यभवनात्मकस्योभयत्वादेव **नित्यत्वस्यापि**[3] **द्वित्वं** सिद्धं यथा प्रागुपवर्णितं न[4] हि तदेव नित्यमित्यादि यावत् तदपि हि नित्यं यस्मिंस्तत्त्वं न विहन्यते [ पा० म० भा० १।१। पस्पशा० ] इति उक्तत्वात्, इदानीमपि तद्वित्वं प्रदर्श्यते – **कूटस्थस्ये**त्यादि, द्रव्यं हि कूटस्थं नित्यं पूर्वापरकालतुल्यत्वात्, तस्य कूटस्थस्य द्रव्यस्य सर्वप्रभेदनिर्भेदस्य बीजभूतस्य गमनस्थानादिसर्वात्मकत्वेनावस्थितस्य तं तमात्मानं पर्यनुभवतः तत्पर्यनुभवनात्मत्वादेव [5]ध्रौव्यं कौटस्थ्यं च युज्यते । इतरस्य तु भावस्य तथा तथाभिव्यज्यमानस्य पर्यनुभूयमानस्य क्रमेण युगपद्वा सततप्रवर्तनात्मनो भावस्य प्रवृत्तेरकौटस्थ्यं सततसम्प्रवृत्तिरूपमव्यवच्छिन्नभवनात्मकं नित्यत्वं चेति 'नित्यत्वस्यापि द्वित्वम्' इति साधूक्तम् ।

**अत एवे**त्यादि । एतस्मादेव नित्यत्वद्वित्वादन्यदिदमपि कारणं **भूताभूतभाक्त्वं** द्रव्याद्वैधर्म्यमस्याः प्रवृत्तेरन्यत्वकारि **'द्रव्यादन्यो भावः' इत्यस्यार्थस्य साधनम्**, 'द्रव्यविलक्षणो भावः' इत्यत्र हेतुरित्यर्थः । भूताभूता क्रिया, द्रव्यं भवदेव, वृत्ता वर्तमाना च क्रिया, द्रव्यं वर्तत एवेत्यर्थः । अथवा भूतं द्रव्यमभूतं करणं स्थितं गतं च यथासङ्ख्यं, **व्यतिक्रान्त्यव्यतिक्रान्तिभाक्त्वाद् भिन्नौ**[6] **क्रियाद्रव्यभावौ, तद्यथा – कृतः कटो देवदत्तेन,** देवदत्तः कटकरणकाले करणोपरमे च कटस्यैकरूप एव, क्रिया तु वीरण-
२७६-२ संयोगावस्थायामव्यतिक्रान्ता कटनिष्पत्त्युत्तरावस्थायां व्यतिक्रान्ता । तथा **कृतः कर्मणा विभाग** इति द्वितीयमुदाहरणं क[7]र्तृकर्मसमवायित्वात् क्रियायाः पचिभिदिवत्, वैयाकरणसिद्धान्तेन तु कर्तुरीप्सिततमं कर्म [ पा० १-४-४९ ], क्रियैव तु वैशेषिकस्य, इहाविशेषेण विभागहेतुः क्रिया, विभागश्च सन्तत्यनुपरमाद्

---

१ °र्थत्यागः य० ॥ २ ( भवनं प्रवृत्तिर्भावः ? ) ॥ ३ **नित्यस्यापि** य० ॥ ४ दृश्यतां पृ० २१ पं० २२, पृ० २१२ टि० ४ ॥ ५ **द्रव्यं कौ°** भा० । **द्रव्यकौ°** य० ॥ ६ **भिन्नो क्रियाद्रव्यभावो** य० ॥ ७ दृश्यतां पृ० २८३–२ ॥

**देवदत्ते द्रव्ये कर्मणि वा करणलक्षणया प्रवृत्त्या भवितव्यमविच्छेदेन, सा च तदतद्भवनस्वरूपा।**

**यथा च संयोगविभागफलं कर्म गमनं गन्तुः पदार्थान्तरम्, तत्सम्बन्धं चान्तरेण गमनं न भवति तथा गमनाद्यपि करणसम्बन्धमन्तरेण न भवति, अन्यतो भिन्नं स्वतत्त्वाद् द्रव्याद्वा न स्यात् कर्मेति न स्यात्। तथा भवद्वा 'कृतम्' इति व्यपदेशं न जनयेत्, करणसम्बन्धाभावात्, आकाशादिवत्। तथा च तत् सद् असत्कारणमिति नित्यं स्यात्।**

---

द्रव्यवदवस्थित इति विवक्षितं तस्य, विभागः [1]कटकर्तुश्चलनात्मकस्य कर्मण ईप्सिततमत्वात् कर्म चलनेन द्रव्यं देशान्तरं प्रापयता क्रियत इति सा क्रिया व्यतिक्रामति, विभागः कर्म च न व्यतिक्रामतः, शब्दार्थस्य पिण्डितत्वाद् नामत्वादित्यर्थः। न च व्यतिक्रमाव्यतिक्रमौ निर्निमित्तौ भवितुमर्हतः। दृष्टश्च वर्तमानयोः कर्मविभागयोः द्रव्ययोरव्यतिक्रमे करणस्य क्रियाया विभागविषयस्य व्यतिक्रमः। न चैकस्मिन् व्यतिक्रमाव्यतिक्रमौ युगपद् भवतः विरोधात् प्रमाणान्तरापेक्षामन्तरेण, तस्मादेतदनुमेयं [2]तत्र देवदत्ते द्रव्ये कटस्य कर्तरि कर्मणि वा कर्तरि चलने वीरणानां कटे वा कर्मणि करणलक्षणया प्रवृत्त्या भवितव्यमविच्छेदेन। **सा च** प्रवृत्तिः क्रिया **तदतद्भवनस्वरूपा,** तस्मिन् द्रव्येऽतस्मिंश्च करणे भवनमस्याः प्रवृत्तेः स्वरूपम्, तया च [व्यतिक्रमा]व्यतिक्रमविभागतया द्विरू[3]पयाऽवश्यमव्यवच्छि[4]न्नया[ऽ]कूटस्थया प्रवृत्तिभवनात्मिकया भवितव्यमिति।

[5]**यथा च संयोगे**त्यादि। इदमधुना गन्तृगमनदृष्टान्तयोर्भवितृभवनदार्ष्टान्तिकयोश्च प्रागुक्तवद् भेदानभ्युपगमे दोषाभिधित्सयोच्यते। [6]**संयोगविभागाः कर्मणां कार्यं सामान्यम्, गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणं कारणं सामान्यम्** [वै॰ सू॰] इति वचनाद् देशान्तरसंयोगं द्रव्यस्य देशान्तरविभागं च गमनकर्मारभते गुरुत्वादिजनकं चोत्क्षेपणं कर्म। तस्मात् **संयोगविभागफलं कर्म गमनं गन्तुः पदार्थान्तरम्,** तयोः संयोगविभागयोस्तत्कारणस्य च कर्मणो यावद्द्रव्यभावाभावाद् **वैशेषिकमतवत्** २७७ १
पदार्थान्तरतायां सत्यां गन्तुर्गमनेन सम्बन्धः, तत्सम्बन्धं चान्तरेण गमनं [न] भवति, 'गच्छति देवदत्तः' इति हि गमनसम्बन्धाद् दृष्टम्, व्यतिलङ्घितगमनश्च 'गतः' इत्युच्यते, तस्मात् तद्व्यतिक्रममन्तरेण 'गतम्' [7]इति न भवति। एष विधिः कर्मविशेषे गमने दृष्टः। **तथा गमनाद्यपि करणसम्बन्धमन्तरेण न भवती**ति क्रिया सिध्यति, **अन्यतो भिन्न**मिति **स्वतत्त्वात्** कर्मत्वात् **द्रव्याद्वा** कर्मत्वस्य स्वतत्त्वस्याश्रयो **न स्यात् कर्मेति न स्यात्,** क्रियमाणत्वाद्धि तत् कर्म [8]करणे सति, करणव्यतिक्रमे च 'कृतम्' इति न स्यात्। कर्मणि तु भिन्ने द्रव्यात् स्वतत्त्वाद्वा स्यादिति। **तथा भवद्वे**त्यादिना करणं भवदपि स्वसम्बन्धव्यतिक्रममन्तरेण **'कृतम्'** इत्येतं **व्यपदेशं न जनयेत्,** तच्च दृष्टम्, किं कारणं न स्यादिति चेत्, **करणसम्ब-**

---

१ **कर्मटकर्तु॰** डे॰ लीं॰। **कर्मचटकर्तु॰** रं॰ ही॰। **कर्मचमोटकर्तु॰** पा॰। दृश्यतां पं॰ ९। 'विभागः कर्तुश्चलनात्मकस्य' इत्यपि पाठोऽत्र स्यात्॥ २ **तत्त** भा॰। **तत्वत्** डे॰ लीं॰ रं॰ ही॰। **तत्वव** पा॰। **ते तत्वत्** वि॰॥ ३ **॰पतया॰** य॰॥ ४ **॰न्नयाकूट** भा॰। **॰न्नकूट॰** य॰॥ ५ **यथारसंयो॰** प्र॰॥ ६ "द्रव्यगुणकर्मणां द्रव्यं **कारणं** सामान्यम्। १।१।१८।···द्रव्याणां द्रव्यं कार्यं सामान्यम्। १।१।२३। गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम्। १।१।२९। संयोगविभागाश्च कर्मणाम्। १।१।३०। कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम्। १।१।३१।" इति वैशेषिकसूत्रे पाठः॥ ७ **इति भवति** भा॰॥ ८ **करणे ।सति** पा॰ डे॰ लीं॰ रं॰ ही॰। (कर्म, करणेऽसति करणव्यतिक्रमे च ?)॥

**यथा च कर्म क्रियया विना न भवति तथा करणमपि भवनव्यक्तिमन्तरेण नैव भवेत्, तथा भवनसम्बन्धव्यतिक्रममन्तरेण भूतमिति न स्यात्। पूर्वः पूर्व उत्तरोत्तरकार्यकारणभावेन। ततश्च प्रागादिनिर्विशेषणं नास्ति भवनसम्बन्धव्यतिक्रमाभावात् खपुष्पवत्, असत्कारणत्वाद्वा, अभूतभवनसम्बन्धव्यतिक्रमत्वात्। व्यतिक्रमश्च तृणकर्मादौ कटविभागादिभवनभूततायाम्। द्रव्यं क्रिया च द्वयमेव**

---

**न्धाभावात्।** किमिव ? **आकाशादिवत्।** ततः किं स्यात् ? **तथा च तद्** भवत्[1] कर्म सत्त्वात् कारणा[2]सम्बन्धाच्च **[3]सदसत्कारणमिति नित्यं स्यात्,** नित्यलक्षणयोगात्। किं नित्यलक्षणमिति चेत्, उच्यते – सदकारण[4]वत्तन्नित्यम् [ वै० सू० ४।१।१ ] इति नित्यलक्षणं वैशेषिकमतेनेति। एवं तावत् 'कर्म गमनादि करणसम्बन्धाद् भवति' इत्युपपादितम्।

**यथा च कर्मे**त्यादि। यथा च गमनादि कर्म **क्रियया विना न भव**त्युक्तविधिना **तथा करणमपि भवनव्यक्तिमन्तरेण** भवनक्रियाविर्भावेन विना **नैव भवेत्,** न भवितुमर्हतीत्यर्थः। **तथा**
२७७-२ **भवनसम्बन्धव्यतिक्र[5]ममन्तरेण भूतमिति न स्यात्,** तत्सम्बन्धे 'भवति' इति भवति तत्सम्बन्धव्यतिक्रमे च 'भूतम्' इति। **पूर्वः पूर्व उत्तरोत्तरकार्यकारणभावेने**ति क्रियास[6]म्बन्धप्रबन्धं प्रदर्शयति **ततश्च प्रागादिनिर्विशेषण**मित्यादि भवनसम्बन्धे तद्व्यतिक्रमे चासति प्राक्प्रध्वंसेतरेतरशक्तिसंयोगाद्यभावाभावादभावभेदरहितो **नास्त्य**भाव इत्यनर्थान्तरमिति [7]अविशेषेणैकोऽत्यन्ताभाव एव स्यादभावः **भवनसम्बन्धव्यतिक्रमाभावात् खपुष्पवदि**ति, यथा खपुष्पं भवनसम्बन्धाभावात् तद्व्यतिक्रमाभावाच्च न [8]भवेदेवं सर्वं घटादि स्यादिति। **असत्कारणत्वाद्वा,** तदा हि वस्तुनो भवनकारणं योऽसौ क[9]रणसम्बन्धो भवनसम्बन्धश्च स नास्ति तद्व्यतिक्रमो वेति [10]सत्कारणाभावादकारणत्वादत्यन्ताभाव एव स्यात् खपुष्पवत् [11]सर्वं घटादि। तदुपसंहृत्य हेतुमाह – **अभूतभवनसम्बन्धव्यतिक्रमत्वा**दिति, गतिस्थित्यादिकरणभवनसम्बन्धव्यतिक्रमसद्भावाद् गच्छति तिष्ठति करोति भवति गतस्थितकृतभूतव्यक्त्यात्मकदेवदत्तवस्तु भवदुपलभ्यते [12]नान्यथेति। स्यान्मतम् – भवनस्य सततसम्प्रवृत्त[13]स्याव्यतिक्रम इति। अत्रोच्यते – **व्यतिक्रमश्च तृणकर्मादौ,** तृणतन्त्वादीनां क्रियास्तृणकर्म, **आदि**ग्रहणात् संयोगः, यथासङ्ख्यं **कटविभागादिभवनभूततायाम्,** अत्रापि **आदि**ग्रहणात् पटविभागसंयोगादयो गृहीताः, भवनस्य भूततायामेवंलक्षणस्य भवति व्यतिक्रमः 'तृणं कटो भवति, गमनकर्म विभागो भवति संयोगश्चान्येन'। स्यान्मतम् – कथं 'तृणं कटो भवति, कर्म विभागो भवति' इत्येतदुच्यते ? इति। अत्रोच्यते, अत्रापि ननूक्तम् – **द्रव्यं क्रिया**
२७८-१ **च द्वयमेव सर्वमिद**मिति संयोगादि [14]सर्वं गुणक्रियात्वप्रतिपादनात् तस्य भवनस्य भूतता व्यतिक्रम इति।

---

१ भवकर्म प्र० ॥ २ ( करणास° ? ) ॥ ३ **सदसतकामिति** य० । **सदत्ततत्कमिति** भा० ॥ ४ °**णनत्तनित्यम्** य० । "सदकारणवन्नित्यम्" इति वैशेषिकसूत्रे पाठः ॥ ५ °**क्रमन्त**° प्र० ॥ ६ °**सम्बन्धप्रबन्धप्रदर्शयति** य० । °**सम्बन्धप्रबन्धप्रबन्धप्रदर्शयति** भा० ॥ ७ **अविशेषणैकात्य**° य० ॥ ८ ( भवेदेवं ? ) ॥ ९ **कारण**° प्र० ॥ १० **असत्कारणाभावा**° य० । वस्तुतस्तु अत्र **असत्कारणभावा**° इति पाठः समीचीनो भाति, 'असत्कारणत्वात्' इत्यर्थः ॥ ११ **सर्व** प्र० ॥ १२ **नन्यथेति** भा० । **अन्यथेति** य० ॥ १३ °**स्य व्यति**° प्र० ॥ १४ **सर्वगुण**° वि० रं० ॥

**सर्वमिदम् । एवमेव च भावक्रियाश्रयः कारकाणां कर्मादिभावः ।**

**यदि द्रव्यवत् क्रियापि वस्तुनस्तत्त्वं स्यात् ततस्तया विना नैव वस्तु स्यात्, तत्त्वात्, देवदत्तबालादिवत् घटरूपादिवत् । दृष्टं चैतद् गमनादिक्रियया विनापि देवदत्ताख्यं वस्तु । अन्तरेणापि तु क्रियां भवत्येव वस्तु, तस्मात् ततोऽन्यत् तदन्तरेणापि भावात् घटपटवत् । दृश्यते हि देवदत्ते गच्छत्यधृतिं करोति यज्ञदत्तः । यदि द्रव्यपारमार्थ्यवत् क्रियापि स्यात् गमनवत् क्रियात्वात् स्थानमपि परमार्थ**

---

**एवमेव** चेत्यादि । एवं कृत्वा **भावक्रियाश्रयः**, भाव एव क्रिया भावक्रिया । द्रव्यं भावः, स एव च क्रिया, द्रव्यस्य वा क्रिया । तदाश्रयो द्रव्यभवनाश्रयोऽयं **कारकाणां कर्मादिभावः** कर्मकरणादिभावः, न नियतरूपः विचित्रक्रियाभवनसम्बन्धाद् भवति, 'देवदत्तः पचति ओदनं काष्ठैः स्थाल्याम्, ओदनो भवति, काष्ठानि ज्वलन्ति सन्धुक्षन्ति, स्थाली धारयतीत्यधिश्रीयते' इत्येवमादिदर्शनात् । न हि किञ्चिज्जातिविशेषयोगाद् गोत्वादियो[1]गादिवत् कर्मत्वकरणत्वाधिकरणत्वादियोगात् कर्मैवेदं करणमेवाधिकरणमेव नियतं नान्यदपि भवतीति । किं तर्हि ? अनियतशक्तिविषयम्, शक्तीनां कारकत्वात्, तदेव हि द्रव्यमन्यया क्रियया 'प्रमार्ष्टि नेत्रे' इति नेत्रादि कर्म भवति, अन्यया करणम् 'नेत्रेण पश्यति' इति, अन्ययाधिकरणम् 'नेत्रेऽञ्जनं तिष्ठति' इत्यादि । तस्मात् सर्वप्रभेदनिर्भेदं बीजं वस्तु द्रव्यं तत्त्वम्, तद्भेदिभवनव्यक्तिः क्रिया ।

**यदी**त्यादि एवमनिच्छतो दोषः, **यदि द्रव्यवत् क्रियापि वस्तुनस्तत्त्वम्** आत्मा स्वरूपं **स्यात् ततस्तया विना** क्रियया **नैव वस्तु स्यात्, तत्त्वात्** तदात्मत्वात् स्वरूपत्वात्, यद् यत्तत्त्वं ये[2]दात्मास्वरूपं वा न तत् तेन विना भवति **देवदत्तबालादिवत्**, यथा देवदत्ततत्त्वा बालादयोऽवस्थाविशेषाः क्रमभाविनो न तेन विना भवन्ति तथैतदपि वस्तु क्रियया विना न स्यात्, **घटरूपादिव**दिति घटतत्त्वा रूपादयो युगपद्भाविनस्तेन विना न भवन्ति तथा क्रियया विना तद् वस्तु न स्यादिति विशेषः । **दृष्टं चैतद् गमनादिक्रियया विनापि देवदत्ताख्यं वस्त्वि**त्यनिष्टापादनमेतत् । दोषदर्शनादपि वस्तु भवतीत्येतदर्थं साधनमाह – **अन्तरेणापि तु क्रियां भवत्येव वस्तु तस्माद्** विना भावे दोषदर्शनात् **ततोऽन्यत्** 'क्रियातोऽन्यद् वस्तु' इति प्रतिपत्तव्यम् । न केवलं दोषदर्शनादेव, किं तर्हि ? अन्यत्वहेतुरप्यस्तीत्यत आह – **तदन्तरेणापि भावात्**, यद् यदन्तरेणापि भवति तत् ततोऽन्यत् **घटपटवत्**, यथा घटः पटमन्तरेण भवन् पटादन्यः पटश्च घटमन्तरेणापि भवंस्ततोऽन्यस्तथा क्रियामन्तरेणापि भवद् वस्तु ततोऽन्यदिति । तन्निदर्शनान्तरं विचारान्तरास्पदमभ्याह – **दृश्यते हि देवदत्ते ग[3]च्छत्यधृतिं करोति यज्ञदत्त** इति । अत्र यज्ञदत्तस्याधृतिकारणं गमनं देवदत्ताख्याद् वस्तुनो↑[4]ऽन्यत् पूर्वोत्तरकालतुल्येऽपि तस्मिन् यतोऽधृतिर्भवति, तस्माद् न क्रिया वस्तुनस्तत्त्वम् । २७८-२

**यदि द्रव्यपारमार्थ्यव**दित्यादि । यदि यथा देवदत्ताख्यस्य वस्तुनो↑ द्रव्यं परमार्थस्तथा **क्रियापि स्यात् गमनवत् क्रियात्वात् स्थानमपि परमार्थ इति** प्रागेव स्थानक्रियया गमनविरोधिन्या देवदत्तोऽ-

---

१ °**योगादि**° भा० प्रतौ नास्ति ॥ २ **य आत्मा** प्र० । अत्र **यस्यात्मा** इत्यपि पाठः स्यात् ॥ ३ **न गच्छ**° प्र० ॥ ४ ↑ ↑ एतदन्तर्गतपाठो य० प्रतिषु नास्ति ॥

**इति तस्य गमनं नैव स्यात्, देवदत्तावरुद्धदेशे यज्ञदत्तवत्। अथ गमनतत्त्व एव देवदत्त इष्यते तथापि गमनक्रियापरमार्थदेवदत्तत्वात् स्थानं नैव स्यात् इति यानस्थानयोरभावात् पूर्ववद्धृतिः सततमधृतिर्वा स्यात् तथा। तथा भवने[ऽपि] यथा देवदत्ते गच्छति अधृतिरस्य तथा तदात्मत्वाद् यावद्देवदत्तमधृतिप्रसङ्गः तत्कालवत्, देवदत्त एवास्याधृतिनिमित्तमिति । स्थित्यात्मकत्वाद्वास्य गच्छत्यपि देवदत्ते यज्ञदत्तस्य धृतिरेव सदा स्यात् स्थानकालवत् । यज्ञदत्त………… धृतिरधृतिर्वा ।**

---

वरुद्धः स्यात् । ततश्च तयावरुद्धत्वात् **तस्य**[1] देवदत्तस्य **गमनं नैव स्यात्,** कदाचिदपि न गच्छेद् देवदत्त इत्यर्थः । **देवदत्तावरुद्धदेशे यज्ञदत्तवत्,** यथा देवदत्ताख्यं वस्तु देवदत्तत्वेनावरुद्धमिति तद्विरोधिनो यज्ञदत्तत्वस्यानवकाशात् तत्र यज्ञदत्तत्वं नैव जातु भवति तथा देवदत्ते स्थानेनावरुद्धे गमनं नैव जातु स्यादिति । **अथ** मा भूद् यज्ञदत्ताधृतिकारणस्य देवदत्तगमनस्याभाव इति **गमनतत्त्व एव देवदत्त इष्यते तथापि गमनक्रियापरमार्थदेवदत्तत्वात् स्थानं नैव स्यात्** कदाचिदपि, गमनेनावरुद्धत्वाद् देवदत्तस्य देवदत्तत्वावरुद्ध[2]देवदत्ते यज्ञदत्तत्ववदेव। **इति**शब्दो हेत्वर्थे, ततश्च हेतो**र्यानस्थानयोरभावात्,** यानाभावात् तावत् **पूर्ववद्धृति**[3]र्यथा प्राग् गमनोत्पत्तेर्गमनासत्त्वा[4]दधृत्यभावः तथा गमनाभावाद् गच्छत्यपि देवदत्ते यज्ञदत्तस्याधृत्यभावः देवदत्त[5]सत्त्वात् गमनकालेऽपि[6], गमनाभावे यथा यज्ञदत्तस्य धृतिर्भवत्येवं **सततमधृतिर्वा स्या**दिति । एवं स्थानाभावेऽपि धृत्यधृती स्यातामुक्तन्यायेन । **तथे**ति
२७९-१ तेन प्रकारेण प्रोक्तोपपत्तिक्रमप्रापिताभावप्रकारेण यानस्थानयोरिति ।

**तथा भवने[ऽपी]**त्यादि । भ[7]वतु वा गमनं स्थानं वेत्यभ्युपगम्यापि दोष उच्यते । तत्र गमने तावद् **यथा देवदत्ते गच्छत्यधृतिरस्य तथा तदात्मत्वाद् यावद्देवदत्तमधृतिप्रसङ्गः,** यथा देवदत्तगमनकाले यज्ञदत्तस्याधृतिहेतुर्देवदत्तो गमनात्मत्वात् तथा यावज्जीवम् आत्मनो यावदायुर्यज्ञदत्ताधृतिहेतुरेव स्यात् गमनात्मत्वात् **तत्कालव**दिति त[8]स्य देवदत्तस्य गतिपरमार्थत्वाद् वस्तुत्वावस्थानाच्च देवदत्त[9]स्य गमनात्मनः पूर्वोत्तरकालतुल्यत्वात् । अतस्तद्विवरणार्थमाह – **देवदत्त एवास्याधृतिनिमित्तमिति,** 'इति'– शब्दो हेत्वर्थे, यतो देवदत्तो गमनात्मैव तस्मात् सततमधृतिप्रसङ्गः । एवं तावदयं स्थानविरोधिन्या गतेर्भावेऽभिहितो दोषः । गतिविरोधिन्याः स्थितेरेव वा भावे **स्थित्यात्मकत्वाद् वास्य** देवदत्तस्य **गच्छत्यपि देवदत्ते यज्ञदत्तस्य धृतिरेव सदा स्यात् स्थानकालवद्** देवदत्तसद्भावादिति ।

एवं तावद् देवदत्तगतिस्थितिविषययज्ञदत्ताधृतिविचारद्वारेण दोषा उक्ताः । इदानीं यज्ञदत्ताधृतिविषयोऽपि विचारस्तथैव कर्तव्यः । अत्रापि य[10]दि द्रव्यपारमार्थ्यवदित्यादिग्रन्थो धृत्यधृतियज्ञदत्तशब्दोच्चारणेन यथासम्भवं योज्यः । प्रकारान्तरेणापि तु **यज्ञदत्ते**त्यादि यावद् **धृतिरधृतिर्वा** । यज्ञदत्तद्रव्यत्वं

---

१ **तस्या** प्र० ॥ २ °**रुद्धं**(रुद्धे ?) **देव**° भा० । °**रुद्धत्वं देव**° य० ॥ ३ °**वद्धृत्तेर्यथा** प्र० ॥ ४ °**त्वाद्धृत्यभावः** प्र० ॥ ५ °**त्तस्यत्वात्** य० ॥ ६ °**पि भावे यथा** य० ॥ ७ **भवमु वा** भा० । **भवनमु वा** य० ॥ ८ **ततस्यादत्तस्य** भा० ॥ ९ °**त्तत्वस्य** भा० ॥ १० दृश्यतां पृ० ३९१ पं० ६ ॥

**न, तदतद्भवनाविच्छेदात्मकप्रवृत्तिनित्यत्वस्याकूटस्थत्वाद् भवनमेवेदं गतिधृतिस्थित्यादि । भेदज्ञानव्यवहारौ तु शब्दभेदद्रव्यप्रवृत्तितत्त्वानुरूप्यात्, शब्द-**

---

हि वस्तुस्वरूपम्, धृत्यधृतिक्रिये च तदव्यतिरिक्ते । ततो देवदत्तयानस्थानयोरपि देवदत्ताव्यतिरेकात् २७९-२
तद्वद् यावद्देवदत्तं गमनं स्थानं वेति धृतिरेवाधृतिरेव वा स्याद् यज्ञदत्त[1]तत्त्ववत्, विरोधिनः क्रियान्तरस्याभावात् पूर्ववत् । तस्मादेतेन क्रियाया अपि नित्यत्वादित्याह – **न[2], तदतद्भवनाविच्छेदात्मकप्रवृत्तिनित्यत्वस्याकूटस्थत्वात्**, तद्भवनम[3]तद्भवनं तदतद्भवनं च सरूपैकशेषात् तदतद्भवनम् । तद्भवनं तावदस्तिभवत्यादिविषयम्, पुनः पुनर्भवत्येवेति । अतद्भवनं स्थानाद् गमनं गमनाच्च स्थानमिति । तदतद्भवनं भवनसहिते ते एव स्थानगमने तथा धृत्यधृती । तस्याविच्छेद आत्मा यस्याः प्रवृत्तेरविच्छेदा[4]त्मिकायाः सा तदतद्भवनाविच्छेदात्मकप्रवृत्तिः, [5]तस्या नित्यत्वम्, तदकूटस्थं कूटस्थद्रव्यनित्यत्वविलक्षणम्, तद्भावात् **तदतद्भवनाविच्छेदात्मकप्रवृत्तिनित्यत्वस्याकूटस्थत्वाद् भवनमेवेदं गतिधृतिस्थित्यादि,** एता यानस्थानधृत्यधृत्यादिकाः परस्परविरोधिन्यः क्रियास्ता एता भवनमेव सततसम्प्रवृत्तिरूपभवनात्मकत्वाद् [6]भवद्भवनविलक्षणं नित्यं च प्रवृत्तिभवनमात्रमेवेत्यभिन्नं क्रियामात्रम् । अतो द्रव्यं क्रिया चोभयं नित्यं भावः। स्यान्मतम् – क्रियाभेदाभावाद् भेदज्ञानव्यवहाराभावः स्यात्, दृश्येते भेदज्ञानं भेदव्यवहारश्चेति । एतन्नायुक्तम्, [7]तस्माद् **भेदज्ञानव्यवहारौ तु** 'गच्छति तिष्ठति धृतिं करोत्यधृतिं वा न वा' इति द्वावप्येतौ **शब्दभेदद्रव्यप्रवृत्तितत्त्वानुरूप्यात्,** शब्दो भेदो यस्या द्रव्यप्रवृत्तेः सा शब्दभेद[8]द्रव्यप्रवृत्तिः, न शब्दोऽन्यो द्रव्यात्, प्रवृत्तिः क्रिया गुणोऽपि क्रियेति प्रागुक्तम् । रूपरसगन्धस्पर्शभेदायाः प्रवृत्तेः शब्द- २८०-१
भेदा प्रवृत्तिरन्या, तस्यास्तत्त्वं [9]वर्णात्मकत्वादि रूपम्, तदानुरूप्याच्छब्दभेदप्रवृत्तितत्त्वानुरूप्याद् भेदज्ञानं भेदव्यवहारश्च भवति । शक्तिमतो द्रव्यस्य शक्तयो युगपद्भाविन्यो रूपरसादयः क्रिया एव, गमनस्थानादिक्रियास्तु क्रमभाविन्यः । यथोक्तम् –

**शक्तिमात्रासहायस्य विश्वस्याद्भुतकर्मणः ।**
**[10]सर्वथा सर्वदा भावात् कचित् किञ्चिद् विवक्ष्यते ॥** [ वाक्यप० ३।७।२ ] इति ।

---

१ °ततत्ववत् प्र० । ( °त्तत्ववत् ? ) ॥ २ दृश्यतां पृ० ३९५ पं० १० ॥ ३ °**मतद्भवनं च सरूपैकशेषात् तदतद्भवनं तावद**° य० ॥ ४ °**का सा तद**° प्र० ॥ ५ **तस्यापि नि**° प्र० ॥ ६ **भवनवद्भवनवि**° य० ॥ ७ (**यस्माद् ?**) ॥ ८ °**द्रव्यत्तिर्न शब्दो** भा० । °**द्रव्यत्तिदर्शनान्न शब्दो**° य० ॥ ९ **वर्णावर्णात्म**° प्र० ॥ १० "कथं पुनरेतदवगम्यते 'शक्तिः साधनम्, न पुनर्द्रव्यम्' इत्याशङ्क्याह — **शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः । सर्वदा सर्वथा भावात् कचित् किञ्चिद् विवक्ष्यते ॥** [ वाक्यप० ३।७।२ ] । घटादयो भावा विश्वशब्दवाच्याः, ते च तत्तदुदकाहरणादिकार्यसाधिकानां शक्तीनां समूहरूपाः । अत एव ताः शक्तयः तत्र मात्रा भागाः इति शक्तिसमाहारमात्रं घटादयः । ताश्च शक्तयोऽनेकविधाः, काश्चित् स्वहेतोरेव दैवात् भवन्ति, आश्रयादिनाशं मत्वेव न च विनश्यन्ति यथा बोधप्रदीपानां प्रकाशशक्तयः । काश्चित् पौरुषेऽप्यन्तःस्थिता एव आश्रये निरुध्यन्ते यथा **बा**( बो ?)धादिशक्तयः, ता हि समभ्यासेन दृष्टद्रव्योपयोगेन जायन्ते । अन्याः सत्यो वा अपरपुरुषप्रयत्नेन विध्वंस्यन्ते, यथा विषस्य मारणशक्तिः बीजस्य अङ्कुरजननशक्तिः । अन्याः प्रभावातिशयवता विपरिवर्त्यन्ते, यथा योगिना सर्वभावानां रूपपरिवृत्तिराधीयते । काश्चित् कालपरिवासेन व्यज्यन्ते यथा धर्माधर्मशक्तिः फलदाने इत्याद्यनेकविधमुन्नेयम् । एवमनेकस्वभावत्वे शक्तिसमुदायस्य विचित्रे कार्ये यथाशक्ति भेदविवक्षायां प्रतिनियतसाधनभावोपपत्तिः । द्रव्यस्य तु साधनत्वे तस्यैकरूपत्वात् कार्यवैचित्र्यं न स्यादित्यर्थः । तदुक्तं भाष्ये 'गुणसमुदायः साधनम्' इति । प्रधानक्रियाया एकैकशक्तिसाध्यत्वा-

**शक्तीनां यथानुरूपं प्रतिविषयनियतप्रत्यायनवृत्तित्वात् नित्यप्रवृत्तिक्रमप्राप्तिविशिष्टवस्तुभागाभिनिवेशिभिरभिधानैः सर्वस्य वस्तुरूपस्याभिधातुमयोग्यत्वात्। यथा 'देवदत्तो गच्छति' इत्यत्र 'देवदत्तशब्दो द्रव्यांशविषयनियतशक्तित्वाद् गत्यादीन् नोपात्ते न वा व्युदस्यति तथाख्यातमपि देवदत्तं नोपात्ते न वा व्युदस्यति क्रियांशविषयनियतशक्तित्वात् नामाख्यातयोर्नियतवस्तुभागाभिनिवेशित्वात्, तदनुपात्ययं भेदप्रत्ययः। तथैव गतिस्थितिधृत्यधृत्यादिभेदव्यवहाराः सर्वभेदपर्यनुभवार्थत्वाद् नित्यप्रवृत्तेः।**

**देवदत्तवस्तुना गतिरुपात्तैव तदात्मत्वात् अग्निनेवौष्ण्यम्। गच्छतिशब्देन**

---

विवक्षापि च तासां **शब्दशक्तीनां यथानुरूपं प्रतिविषयनियतप्रत्यायनवृत्तित्वात्,** सत्यपि सर्वसर्वात्मकत्वे द्रव्यार्थनयस्य वर्णात्मकघटशब्दशक्तेः पृथुकुक्ष्यूर्ध्वग्रीवाद्याकारप्रत्यायने नियता वृत्तिर्नान्यत्र, रूपादिद्रव्यशक्तिप्रवृत्तिभेदनियतेन्द्रियग्राह्यत्ववच्छब्दशक्तिप्रवृत्तिभेदाद् भेदज्ञानव्यवहारा[2]वित्यर्थः। तद्व्याचष्टे – **नित्यप्रवृत्ती**त्यादिना, नित्यप्रवृत्तेः क्रमप्राप्त्या विशिष्टो यो वस्तुभागस्तदभिनिवेशिभिरभिधानैः सर्वस्य वस्तुरूपस्याभिधातुं शब्दैरयोग्यत्वादिति। तन्निदर्शयति – **यथा देवदत्तो गच्छती**त्यादि यावद् **न वा व्युदस्यती**ति गतार्थम्। **तथाख्यातमपी**त्यादि तद्वदेव गतार्थं यावत् **क्रियांशविषयनियतशक्तित्वा**दिति, **नामाख्यातयोर्नियतवस्तुभागाभिनिवेशित्वा**दिति तदेव कारणम्,
२८०-२ **तदनुपात्ययं भेदप्रत्यय** इत्युपसंहरति, द्रव्यशक्त्यंशनियतशब्दप्रवृत्त्यनुपाति भेदज्ञानमित्यर्थः। **तथैव गतिस्थितिधृत्यधृत्यादिभेदव्यवहा[3]राः सर्वभेदपर्यनुभवार्थत्वाद् नित्यप्रवृत्तेः** यासौ सततसम्प्रवृत्तिः सा 'सर्वान् गमनादीन् भवनभेदान् पर्यनुभावयामि द्रव्यम्' इति प्रवर्तते, यदि तान् नानुभवेत् क्रियाभेदान् द्रव्यं ततो न ते स्युः तेनापर्यनुभूयमानत्वात् खपुष्पवत्। 'सर्वभेदं निर्भेदं बीजं द्रव्यम्' इति चेष्यते। तद्वा द्रव्यं न स्यात् भेदापर्यनुभवनात् खपुष्पवत्, एवं तद् द्रव्यं बीजं स्याद् यदि तान् भेदान् पर्यनुभवेत्।

आह – यथानन्तरोक्तं[4] **देवदत्तशब्दो गत्यादीन् नोपादत्ते न च व्युदस्यति** अंशनियतत्वाच्छब्दशक्तीनां प्रवृत्तत्वाच्च तथा वस्तुनापि देवदत्तेन गत्यादयः किमनुपात्ताव्युदस्ताः ? नेत्युच्यते विशेषः – **देवदत्तवस्तुने**त्यादि, देवदत्तशब्देनानुपादीयमानापि हि **गतिर्वस्तुना** तेन **उपात्तैव** अंशनियत्यभावाद् विशेषहेतोश्च। को विशेषहेतुरिति चेत्, उच्यते – **तदात्मत्वात्,** गत्याद्यात्मको हि देवदत्तः तत्पर्यनुभवनात्, यद् यदात्मकं तेन तदुपात्तम्, **अग्निनेवौष्ण्यम्,** यथा अग्नेरौष्ण्यमात्मेत्यग्निनोपात्तं तथा देवदत्तेन गतिरिति।

---

भावात् समुदायग्रहणम्, गुणक्रियापेक्षया तु प्रत्येकं शक्तेः साधनता, तस्याश्च प्रधानक्रियापेक्षया वैचित्र्यात् कर्माकर्मादिविरूपताया वा प्रत्येकं साधनत्वेऽपि समुदायग्रहणं शक्तीनां साधनत्वेन आसां भेदात् एकस्य कार्यभेदोपपत्तिव्याख्यापनार्थम्। तेन अनेकशक्तेरपि पदार्थस्य सत्येव तथा स्थानेऽपि काचिच्छक्तिः क्वचिदुद्भूता विवक्ष्यते इति 'घटं पश्य, घटेनोदकमानय, घटे उदकं निधेहि' इत्यादिकर्मकरणादिभावो नियमेन उपपद्यत इति न कारकसाङ्कर्यप्रसङ्गः। द्रव्यस्य तु एकस्वभावत्वात् कर्मकरणादित्वं नोपपद्यते इति गर्भीकृतेयमत्र शक्तिः शक्तेः साधनत्वे बोद्धव्या।" इति **वाक्यपदीयस्य** तृतीयकाण्डे साधनसमुद्देशे **हेलाराज**कृतायां व्याख्यायाम्॥ १ दृश्यतां पं० २१॥ २ °**रादित्यर्थः** प्र०॥ ३ °**हारः** भा०॥ ४ दृश्यतां पं० ३॥

**च देवदत्त उपात्तः, शब्दस्य द्रव्यभेदपर्यनुभवनप्रवृत्त्यात्मत्वात् ।**

**अर्थोपनिपातित्वात्तु वचसो [देवदत्त]शब्देनापि गत्यादि न नोपात्तम्, अर्थवत् तद्भवनार्थत्वात् । देवदत्तशब्दो हि द्वितीयादिविनाभूतः केवले कर्तर्येव प्रयुज्यते, कर्ता च क्रियायाः साधनत्वात् क्रियासु तथा तथा वर्तमानस्तथा तथा शब्दोऽपि तत्तदर्थवाची । यथाहुरन्ततः —** अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति गम्यते, 'वृक्षः' अस्तीति गम्यते [ पा० म० भा० २।३।१ ] ।

---

एवं तावद् देवदत्तवस्तुना गतिरुपात्ता न देवदत्तशब्देन इति विशेष उक्तः । किं गच्छतिशब्देन गच्छत्यर्थेन च देवदत्तार्थ उपात्तो न ? इत्यत्रोच्यते – **गच्छतिशब्देन च देवदत्त उपात्त** इति, पुँल्लिङ्गं देवदत्ताभिसम्बन्धात् । शब्देन चेदर्थ उपात्तोऽर्थेन गच्छतिलक्षणेन देवदत्तार्थ उपात्त एव तदात्मत्वादिति विशेषः । यथा '[२]नं, तदतद्भवनाविच्छेदात्मकप्रवृत्तिनित्यत्वस्याकूटस्थत्वाद् भवनमेवेदं गतिस्थितिधृत्य-धृत्यादि' इति गम्यादिप्रवृत्तिभ[३]वनेन भवद्भवनमुपात्तमेव उभयात्मत्वाद् वस्तुनो द्रव्यक्रियात्मद्वैरूप्यात् अर्थेन ग[४]त्वाद्युपात्तं देवदत्तादि गमयतीत्युक्तं क्रियाया द्रव्यभेदपर्यनुभवात्मकत्वादिति तथा शब्दे[५]ऽप्येष विधिः – **गच्छतिशब्दे[ने]**त्यादि, गच्छतिशब्देन च देवदत्त [ उपात्त ] उक्तवदुभयवस्तुत्वात् प्राक् **शब्दस्य द्रव्यभेदपर्यनुभवनप्रवृत्त्यात्मत्वा**दिति ।

एवं तावत् सर्वसर्वात्मकद्रव्यार्थनयत्वादसतो भेदान् कल्पितानाश्रित्य भेदज्ञानव्यवहारावुक्तौ, परमार्थतस्तु **अर्थोपनिपातित्वात् तु वचस** इत्यादि । **[ देवदत्त]शब्देनापि गत्यादि न नोपात्तम्,** उपात्तमेव, अर्थवत् । कुतः ? **तद्भवनार्थत्वात् ,** तस्य भवनं तद्भवनं गत्यादिभवनमेवार्थो देवदत्तशब्दस्येति देवदत्तार्थेनेव गत्याद्यर्थोऽप्युपात्त इति गृहाण । मा शङ्किष्ठाः – तद्भवनार्थत्वमसिद्धमिति, अत आह – **देवदत्तशब्दो ही**त्यादि । यदा 'स्वार्थ-द्रव्य-लिङ्ग-सङ्ख्या-कर्मादि[६]वाचि प्रातिपदिकं, विभक्तयस्त[७]दभिव्यञ्जिकाः, विवक्षावशाच्च कारकविशेषाश्रयणम्, कर्मादीनामपि कारकत्वात् कर्तृत्वमिष्टमेव' इति सिद्धान्तस्तदा २८१-१ विशेषानाश्र्[८]यणेऽपि द्वितीयादिविनाभूतो देवदत्तशब्दः केवले कर्तर्येव प्रयुज्यते, कर्ता च क्रियायाः साधनत्वात् क्रियामन्तरेण [ न ] भवति, क्रियाश्च आसिशयितिष्ठत्यादयः, ता[९]सु तासु स्वयमसौ कर्ता तेन तेन प्रकारेण वर्तमानस्तथा तथा शब्दोऽपि तत्तदर्थवाची । **यथाहुरन्तत** इति ज्ञापकम्, विचारावसाने वैयाकरणैरेतद् निश्चितम् – **[१०]अस्तिर्भवन्तीपर** इत्यादि । लड् 'भवन्ती' इत्युच्यते । शेषं गतार्थम् । प्रथममध्यमोत्तमान्तमन्यदपि क्रियापदं [११]भवत्येव दिङ्मात्रोल्लिङ्गनात् 'त्वमसि अहमस्मि [१२]तिष्ठति तिष्ठसि तिष्ठामि' इत्यादीनां नियमाभावात्, 'क्रियापदेन [१३]विना न भवति' इत्येष हि नियमः ।

---

१ दृश्यतां पृ० २६१ पं० ६ टि० २ ॥ २ दृश्यतां पृ० ३९३ पं० १ ॥ ३ °**वनेन न भव**° भा० ॥ ४ **गंत्वाद्यु**° वि० डे० लीं० । **गत्वाद्य**° रं० ही० पा० ॥ ५ °**ऽप्यर्थैं द्रव्य**° प्र० । दृश्यतां पृ० ५६ पं० १३ ॥ ६ °**वाचिप्रातिपदिके** भा० ॥ ७ °**भिष्वञ्जिकाः** प्र० ॥ ८ °**श्रयाणामपि** प्र० ॥ ९ °**तासु स्वय**° य० ॥ १० दृश्यतां पृ० २६१ पं० ५ ॥ ११ **भत्येव** प्र० ॥ १२ **ति तिष्ठसि** प्र० ॥ १३ **विना भवति** प्र० ॥

**देवदत्तशब्दो न देवदत्तकर्त्रर्थप्रत्यायनार्थो नानर्थकः, अर्थप्रत्यायनार्थत्वाद् वचनप्रवृत्तेः। देवदत्तशब्देन देवदत्तार्थो विज्ञायमान एवानूद्यते 'स गच्छति' इति विधानाय, गतिविधानं स्थानविपरीतदेवदत्तकर्तृकगमनप्रतिपादनाय 'यो गच्छति स देवदत्तः' इति तथा 'योऽसौ स गच्छति' इति।**

**तथा चेदमानर्थक्यं पौनरुक्त्यं च अविभक्तविध्यनुवादार्थं वक्तारं प्रति। प्रथमपदोपादानसन्निहितार्थव्यञ्जनं द्वितीयपदं तत्सन्निधिमात्रेण तथा प्रतिपत्तुः श्रोतुरुपकारकं नान्यस्य।**

---

स एष उपात्तगत्यर्थो **देवदत्तशब्दो न देवदत्तकर्त्रर्थप्रत्यायनार्थो नानर्थकः** सम्यक्प्रत्यवे[1]क्षायामिति वर्तते[2], तस्या **अर्थप्रत्यायनार्थत्वाद्[3] वचनप्रवृत्तेः** 'अर्थं प्रत्याययिष्यामि' इति वचनं प्रवर्तते तस्मान्नानर्थकम्, समीक्ष्यकार्युक्तित्वात्[4]। प्रमाणान्तरोपलब्धत्वाच्च देवदत्तस्य न देवदत्तवाचकः, किं तर्हि? **देवदत्तशब्देन देवदत्तार्थो विज्ञायमान एवानूद्यते,** ज्ञातार्थो ह्यनुवादो विध्यङ्गत्वात्। किमर्थोऽनुवाद इति चेत्, **स गच्छतीति विधानाय,** देवदत्तविशिष्टगतिविधानाय। गतिर्ह्यज्ञातार्थत्वाद् विधीयते देवदत्तकर्तृका। देवदत्तानुवादो गतिविधानार्थोऽस्तु, गतिविधानं किमर्थमिति चेत्, उच्यते – **स्थानविपरीते**[5]त्यादि। अध्यारूढदेवदत्तकर्तृसाधनं स्थानविपरीतं गमनं विवक्षितम्, तत्प्रतिपादनाय 'देवदत्तं गतिकर्तृत्वेन अध्यारोहयामि' इति प्रयुज्यते। तन्निदर्शयति – **यो गच्छति स देवदत्त इति तथा[6] [7]'योऽसौ स गच्छति'**
२८१-२ **इति** देवदत्तो गतिक्रियायाः कर्तेति अज्ञातार्थस्य ज्ञातार्थेनानूद्यमानेन विधानाद् द्रव्यक्रियावाचिनोश्चाभिन्नार्थत्वाच्च वस्तुतः।

एवं सति पौनरुक्त्यमिति चेत्, अभ्युपगम्यते **तथा चेद**मित्यादि। एवं च कृत्वा 'देवदत्तः' इत्युक्ते विशिष्टक्रियात्मककर्तृनिर्देशाद् गतेर्गतत्वाद् गच्छतिशब्दोऽनर्थकः पुनरुक्तं च तथा गच्छतिशब्दादेव[8] विशिष्टकर्तृकगमनवचनाद् देवदत्तार्थगतेर्देवदत्तशब्दोऽपि। तौ च आनर्थक्यपौनरुक्त्यदोषौ न विभक्तविध्यनुवादार्थं[9] वक्तारं श्रोतारं वा प्रति भवतः, [10]कं तर्हि प्रति? उच्यते – **अविभक्तविध्य[11]नुवादार्थं वक्तारं प्रति,** अविभक्तो विधिरयमविज्ञातार्थत्वाच्छब्दः अनुवादोऽयं विज्ञातार्थत्वाद् विध्यङ्गत्वाच्च इत्यविवेक्तारं वक्तारं श्रोतारं वाऽऽसाद्य आनर्थक्यं पौनरुक्त्यं वा स्यादन्यतरस्यैवानयोः, न विवेक्तारं वक्तारं श्रोतारं वा आसाद्य आनर्थक्यं पौनरुक्त्यं वा स्यादन्यतरस्यैवानयोर्विवेक्तारं 'विध्यनुवादार्थौ' इति।

स्यान्मतम् – अस्तु स्वयं निश्चितद्रव्यक्रियात्मकैकवस्तुविध्यनुवादार्थं वचनं वक्तारं प्रति, कथं पुनः श्रोतुरिति चेत्, उच्यते – तस्यापि **प्रथमपदोपादाने**त्यादि यावच्छ्र**ोतुरुपकारक**मिति। प्रथमं पदमत्र 'देवदत्तः' इति 'गच्छति' इति वा यथाविवक्षं प्रयुक्तम्। प्रथमपदमुपादानमस्य सोऽर्थः प्रथमपदोपादानः,

---

१ °त्यपेक्षाया° प्र० ॥ २ **वर्ततेस्या** भा० ॥ ३ दृश्यतां **पा**तञ्जलमहाभाष्ये २।१।१। दृश्यतां पृ० १३३ टि० ११ ॥ ४ °**कारयुक्ति**° प्र० ॥ ५ °**रीतीत्यादि** प्र० ॥ ६ **तप्दा** भा० ॥ ७ **योऽसौ गच्छति** य० ॥ ८ °**ब्दादेविशि**° भा०। °**ब्दादेर्विशि**° य० ॥ ९ °**वादार्थ** प्र० ॥ १० **किं** प्र० ॥ ११ °**नुवक्तारं** य० ॥

**प्रथमपदोपात्तार्थमेव द्वितीयपदम् उद्ग्राहितार्थविवरणार्थत्वाद् भाष्यग्रन्थवत्, नादित एव तदर्थज्ञानस्य कारकं तथाव्यक्तव्यञ्जनत्वात् प्रदीपवत् ।**

---

सन्निहितश्च द्वितीयपदाभिधेयाभिमतः, तस्य [1]व्यञ्जनशब्दो [2]द्वितीयपदम्, **तत्सन्निधिमात्रेण** प्रयोगमात्रेण प्राक् प्रतिपन्न एवाभिव्यज्यते सोऽर्थस्तेनेत्यर्थः, **तथा प्रतिपत्तुः श्रोतु**रिति वक्तुरभिप्रायमूहितुं समर्थस्य गृहीतसङ्केतस्येत्यर्थः **उपकारकं** प्रतिपत्त्याधानसमर्थं, **नान्यस्येति** अविभक्तविध्यनुवादार्थस्याकृतसङ्गीतेर्वा । न स पुनः शब्दापराधो यदसौ तदर्थं न प्रतिपद्यते, यथा – न हि स सूर्यस्यापराधो यदेनमुलूको न २८२-१ पश्यतीति । तस्मादैकार्थ्ये सत्यपि विध्यनुवादभिन्नार्थावेतौ ।

अत्र प्रयोगः – **प्रथमपदोपात्तार्थमेव द्वितीयपदम्, उद्ग्राहितार्थविवरणार्थत्वात्**, उद्ग्राहितो गमनभवनाभिसम्बन्धी देवदत्तः, तद्विवरणार्थो गच्छतिशब्दः, 'देवदत्तः' इत्युक्ते आगृहीतगतिरपि न परेण ज्ञायत इत्युक्तत्वात् । यदुद्ग्राहितार्थविवरणार्थं पदं तत् पूर्वपदोपात्तार्थमेव दृष्टम्, **भाष्यग्रन्थवत्**, यथा **वृद्धिरादैच्** [ पा० १।१।१ ] इति सूत्रेणैवोपात्तमर्थं **भाष्यग्रन्थे** पदानि विवृण्वन्ति – 'वृद्धिः' इतीयं संज्ञा भवति '[3]आदैच्'वर्णानामिति, [4]साध्वनुशासनादिविचाराधारेण सूत्रेणैवोपात्तत्वात् । तथा चोक्तम् —

सूत्रेष्वेव हि तत् सर्वं यद् वृत्तौ यच्च वार्तिके ।[5]
उदाहरण[6]मर्थस्य प्रत्युदाहरणं पशोः ॥ [ ] इति ।

स्यान्मतम् – प्रथमपदोपात्तार्थं चेत् प्रथमपदोच्चारणकाल [7]एवं तथा प्रतिपत्तुः श्रोतुरुपकारकं स्यात् तेनैव व्यक्तत्वादिति । अत्रोच्यते – कस्यचिद् भवत्यपि, केषाञ्चिद् **नादित एव त[8]दर्थ[ज्ञान]स्य कारकम्, तथाव्यक्तव्यञ्जनत्वात्**, तेन प्रकारेण व्यक्तस्तथाव्यक्तः, देवदत्तशब्दोच्चारणमात्रेण श्रोतुः 'विशिष्टक्रियाविषयकर्तृको देवदत्तः' इत्येतावत् तावदाधीयते बुद्धौ [9]*तस्मात् तथाव्यक्तः*, तस्य व्यञ्जनो गच्छतिशब्दः नापूर्वं किञ्चिदाह तदनुवादित्वात्, अतस्तथाव्यक्तव्यञ्जनत्वात् **प्रदीपवत्**, यथा प्रदीपः प्रागभिव्यक्तं [10]घटमपवरकस्थं व्यनक्तीति नादित एव तदर्थज्ञानस्य कारकः तथात्र वाक्ये गच्छतिशब्दोऽपीति । अथवा द्रव्यार्थवादे कुम्भकारोऽपि विद्यमानमेव घटं तथाभिव्यनक्ति नाविद्यमानमुत्पादयति प्रदीपवत् । तस्मात् कुम्भकारस्यापि व्यक्तव्यञ्जनत्वात् पिण्डाद्यवस्थायामपि व्यक्त एव घटः क्रियाक्रमाभिव्यक्तिप्रत्यक्षत्वात् प्रदीपाभिव्यक्तघटवत्, तथा 'देवदत्तो गच्छति' इत्यत्रापि व्यक्तव्यञ्जनत्वाद् नादित [11]एव तदर्थज्ञानस्य कारक इति ।

---

१ ( व्यञ्जनं शब्दो ? ) ॥ २ **द्वियपदम्** प्र० ॥ ३ **आदैव**( आदैज् ? )**वर्णा**° प्र० ॥ ४ **साद्यनु**° य० ॥ ५ "न हि सूत्रत एव शब्दान् प्रतिपद्यते । किं तर्हि ? व्याख्यानतश्चेति । परिहृतमेतत् – तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति । ननु चोक्तम् – न केवलानि चर्चापदानि व्याख्यानम् – वृद्धिः, आत्, ऐजिति । किं तर्हि ? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवतीति । अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान् प्रतिपद्यते ।" इति **पा**तञ्जलमहाभाष्ये पस्पशाह्निके । एतदुपरि **कै**यटविरचिते **भा**ष्यप्रदीपोद्द्योते पूर्वार्धमात्रमस्य श्लोकस्य उद्धृतं दृश्यते ॥ ६ °**णमंथस्य** प्र० ॥ ७ ↑↑ एतच्चिह्नान्तर्गतः °**व तथा प्रतिपत्तुः** इत्यत आरभ्य **श्रोतुरपि भवन्ती दृष्टा त**° [ पृ० ३९९ पं० १० ] इत्यन्तः पाठो य० प्रतिषु **इतश्चासिद्धिः स्ववि**° [ पृ० ४०० पं० १८ ] इत्यनन्तरं वर्तते ॥ ८ दृश्यतां पं० २३ ॥ ९ * * एतदन्तर्गतः पाठो भा० प्रतौ नास्ति ॥ १० **घटमपरमस्थं** भा० । **घटमस्थं** य० ॥ ११ **एव च तद**° य० ॥

**तथा च विनापि तथाभूतशब्दसन्निधिं पूर्वश्रुतशब्दोपात्तार्थवृत्तिरेव, तथा-नियतत्वात्, [1]यथा प्रविश पिण्डीमिति । वक्तुर्विवक्षायामन्यथोक्त्यानर्थक्यात् अर्थ-प्रकरणाद्यापादनाच्च अन्ते नाम्नः कर्तृत्वप्रतिपत्तिः श्रोतुरपि भवन्ती दृष्टा । तस्माद् वक्तृवत् प्रतिपत्तिः श्रोतुरपि ।**

---

मा च मंस्थाः – केवलोपपत्तिमात्रकमेवैतदुच्यते 'प्रथमपदोपात्तार्थवाचि द्वितीयपदम्' इति । किन्तु लोकव्यवहारेऽपि प्रसिद्धिस्तथा दृष्टेति तद् दर्शयितुमाह – **तथा च विनापी**त्यादि यावत् **प्रविश पिण्डीमिति** इति । एवं च कृत्वा **तथाभूतस्या**नुवादमात्रभिन्नार्थस्य **शब्दस्य सन्निधि**मन्तरेणापि **पूर्वश्रुतशब्दोपात्तस्यार्थस्य [2]वृत्तिरेव तथानियतत्वात्**, [3]तथा हि तच्छब्दवृत्तिर्नियता यथा क्वचिद् श्रूयमाण-द्वितीयपदो[4]ऽपि तत्पदार्थविषयप्रतिपत्तिहेतुर्भवति तथैव च प्रतिपत्तारो दृश्यन्ते, [5]यथा 'प्रविश पिण्डीम्' इत्यत्र 'प्रविश'शब्दश्रवणात् प्रवेशयोग्यं प्रकरणादिभिः 'सुषिरं गृहादि कर्मपदमत्र' इति 'पिण्डीम्' इति च कर्मपदश्रवणादनन्तरोक्त[6]प्रविश्यसम्भवात् 'तद्योग्यभक्षिक्रियाकर्तृकर्मकम्' इति प्रतिपद्यन्ते । तस्मात् 'प्रथम-
२८३-१ पदोपात्तार्थव्यञ्जनं द्वितीयपदम्' इति साधूक्तम् । यथा देवदत्तशब्दोपात्तार्थवाची गच्छतिशब्दस्तथा 'गच्छति' इति च तिपा उपात्त एव कर्ता, किं कारणम्? 'लँः कर्तरि च' इति कर्तरि विहितलकारादेशत्वात् तिपः । कोऽसौ कर्ता इति चेत्, उच्यते – स च देवदत्त एव विशिष्टः, विशिष्टकर्तृविषयगमनविवक्षितत्वात् । अथवा गच्छतिः स्वांशोपात्तार्थविषयक एव तच्छब्दव्यवस्थाप्यस्वरूपत्वात्, [8]यो यच्छब्दव्यवस्थाप्यस्वरूपः शब्दः स स्वांशोपात्तार्थविषयक एव दृष्टः, यथा घटशब्दव्यवस्थाप्योर्ध्वत्वा[9]दिरिति ।

एवमनिच्छतो दोष उच्यते – **[10]वक्तुर्विवक्षायामन्यथोक्त्यानर्थक्या**दिति, देवदत्तकर्तृविषयां गतिं [11]प्रतिपिपादयिषता हि वक्त्रा गच्छतिः प्रयुक्तो यदि तमेवार्थं न ब्रूया[12]दुक्तेर्वाच्यः कोऽर्थः स्यात्? इत्यानर्थक्यं प्राप्तमिति । किञ्चान्यत्, **अर्थप्रकरणाद्यापादनाच्च**, [13]"संसर्गविप्रयोगसाहचर्यविरोधार्थप्रकरणलिङ्गशब्दा-

---

१ "वाक्यैकदेशप्रयोगाद्वा ॥ अथवा दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः पदेषु च पदैकदेशान् । वाक्येषु तावद्वाक्यैकदेशान् 'प्रविश, पिण्डीम्, प्रविश, तर्पणम्' इति । पदेषु पदैकदेशान् 'देवदत्तो दत्तः, सत्यभामा भामा' इति । एवमिहापि, संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येत्येतस्य वाक्यस्यार्थे संप्रसारणात्संप्रसारणस्येत्येष वाक्यैकदेशः प्रयुज्यते । ते निर्वृत्तस्य विधिं विज्ञास्यामः 'संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्य' इति ।" इति **पा**तञ्जलमहाभाष्ये १।१।४४ । अस्य व्याख्या — "प्रविशेति । प्रवेशनक्रिया कर्म योग्यमाक्षिपति, तत्र पिण्ड्यां प्रवेशासंभवाद् गृहप्रतिपत्तिः । एवं पिण्डीमिति कर्म योग्यां क्रियामाक्षिपद्भक्षणक्रियां प्रकरणवशात् प्रत्याययति, एवं संप्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः । यथा च पदैकदेश-प्रयोगस्तथा 'सिद्धे शब्दार्थसंबन्धे' इत्यत्र प्रतिपादितम् ॥" इति **कै**यटविरचितायां **प्र**दीपाख्यायां **पा**तञ्जलमहाभाष्यव्याख्यायाम् १।१।४४ । अस्य व्याख्या — "वाक्येष्विति । स्वार्थबोधनाय वाक्येषु प्रयोक्तव्येष्वित्यर्थः । योग्या क्रिया दर्शनादिरपीत्यत आह – प्रकरणेति । तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्रहणकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः, पदैकदेशस्य पदार्थ इवेति शक्त्यैव बोधः । पूर्वपरिहारे संप्रसारणपदस्य तज्जन्यवर्णे उपचारात्प्रयोगः । अत्र त्वेकदेशेन शक्त्या तदर्थप्रतिपत्तिरिति भेदः । तदाह – आक्षेप्स्यतीति । आक्षेपोऽत्र बोधनमेव । भाष्ये 'इत्येतस्य वाक्यस्यार्थे' इति । अत्र 'वाक्य'पदं पदसमुदाय-परम् । इत्येतस्य – इत्येतदर्थकस्य, संप्रसारणादुत्पन्नो यस्तस्मादित्यस्येति संप्रसारणस्य यत्कार्यं तस्येति च 'वाक्यस्यार्थे' इत्यर्थः ।" इति **ना**गेशभट्टविरचितायाम् **उद्द्योता**भिधायां **पा**तञ्जलमहाभाष्य**प्र**दीपस्य व्याख्यायाम् १।१।४४ ॥ २ **वृत्तेरेव** प्र० ॥ ३ **तथाहि** भा० प्रतौ नास्ति ॥ ४ (°पदेऽपि?) ॥ ५ **तथा प्रविश** प्र० । (तद्यथा प्रविश?) ॥ ६ °**प्रविशिसम्भ**° प्र० । (°प्रवेशासम्भवात्?) ॥ ७ दृश्यतां पृ० १२६ टि० ७ ॥ ८ **योग्यं यच्छ**° भा० ॥ ९ °**त्वादिविति** प्र० ॥ १० **वक्तुवि**° प्र० । (वक्तृवि°?) ॥ ११ **प्रतिपादविष**-**ता** भा० । **प्रतिपादविषयता** य० ॥ १२ °**दुक्तेर्वान्यः** भा० पा० डे० लीं० ॥ १३ दृश्यतां पृ० १२७ पं० ११ । दृश्यतां **वा**क्यपदीये २।३१७,३१८ ॥

**अनया च शब्दार्थगतिभावनया भवनमेवेदमेकरूपं देवदत्तभेदं गतिस्थित्यादिभेदं वा भवति, तेन तथा भूयत इति।**

**ननु कारकाणां प्रवृत्तिविशेषः क्रिया। सर्वत्र प्रवृत्तिसम्भवे केनचित् फलोद्देशेन कारकवत्याः परिग्रहार्थं विशेषग्रहणम्। सर्वभावेषु हि प्रवृत्तिरस्ति सहभाविभिरसहभाविभिश्च विशेषैः प्रत्याश्रयं सहिता प्रादुर्भावतिरोभावात्मिका**

---

न्तरसन्निध्यौचितीदेशकालव्यक्तिस्वरादिसामर्थ्यभेदैरर्थस्यानवगम्यमानस्य वक्त्रभिप्रायानुवर्तिभिर्व्याख्यातृभिर्विशेषेऽवस्थापनं दृष्टम्, तच्च तेनैव शब्देनोपात्तार्थत्वे घटते नान्यथेति। तथा श्रोत्राप्यश्रुतोऽपि गृह्यते स इति 'गच्छति' इत्युक्ते को गच्छति? 'देवदत्तः' इति **अन्ते**ऽवसाने **नाम्नः कर्तृत्वप्रतिपत्तिः,** यद्यपि तिपा उपात्तं कर्तृत्वं तथापि यां तां गतिं गत्वा 'नामपदार्थ एव कर्ता' इति प्रतिपत्तिः **श्रोतुरपि भवन्ती दृष्टा[1],** त[2]स्माद्धेतोस्तस्या दृष्टायाः प्रतिपत्तेः, केव? **वक्तृवत्,** वक्तरीव वक्तृवत्, यथा वक्तरि **प्रतिपत्तिः** प्रागुपजाता 'गच्छ[3]तिं देवदत्तकर्तृविषयं प्रयुञ्जेऽहम्' इति **श्रोतुरपी**ति। एवम् 'अन्योन्याभिस[4]म्बद्धद्रव्यक्रियावाचिनौ नामाख्यातशब्दौ' इति साधूक्तम्। एवमुपप[5]त्त्यन्तरं शब्दार्थोऽपि द्रव्यक्रिया- २८३-२ त्मकवस्तुविषय इति भावितम्।

**अनया चे**त्यादि। एतयापि **शब्दार्थगतिभावनया**स्मद्व्याख्यातया लोके दृष्टया **भवनमेवेदमेकरूपं** देवदत्तभेदं गतिभेदं स्थितिभेदं धृत्यधृतिहसनकथनादिभेदं **वा[6] भवति** सर्वत्र [7]व्यक्तेर्भवति। यस्मात् **तेन तथा भूयत इति,** 'इति'शब्दहेत्वर्थत्वाद् यस्मादेकमेव भवनं देवदत्तद्रव्यरूपं गतिस्थित्यादिक्रियारूपं च भवति, तेनैव तेन तेन रूपेण भूयते, न भवनशून्यमन्यत् किञ्चिदस्ति, भवनमेव भवतीति।

**ननु कारकाणा**मित्यादि। 'भवनमेवा[8]विशिष्टं सर्वत्र क्रिया' इत्यापादिते तदमृष्यता इदं वैयाकरणेन क्रियालक्षणमभिधीयते – **प्रवृत्तिविशेषः क्रिया** इत्येतज्ज्यायः क्रियालक्षणम्, न सततसम्प्रवृत्तिमात्रम्। तत्र 'कारकाणाम्' इत्येतस्य व्याख्यानमुद्भूतशब्दैः कारकस्यैव क्रियात्वं मा विज्ञायि भवता, 'कारकपृथग्भूता गृह्यताम्' इति भेददर्शनार्था षष्ठी। विशेषग्रहणं पुनः किमर्थमिति चेत्, तत आह – **सर्वत्र प्रवृत्तिसम्भव** इत्यादि। **केनचित् फलोद्देशेने**ति सांव्यवहारिकमोदनादिफलमुद्दिश्यते, **कारक[9]वत्या** इति स्वाश्रयपृथग्भूतकरणादिसाधनवत्या इत्यर्थः, सर्वा हि क्रिया कर्तृसमवायिनी कर्मसमवायिनी वा स्यात् पचतिभिनत्तिवत् फलवतीति एवंरूपायाः पचिपठिगम्यादेः **परिग्रहार्थं** भिद्यादेश्च **विशेषग्रहण**मिति।

प्रवृत्तिमात्रपरिग्रहे त्वत्पक्षे दोष उच्यते – **सर्वभावेषु हि प्रवृत्तिरस्ती**त्यादि, रूपादिभिः **सहभाविभिरसहभाविभि**र्गतिस्थित्यादिभिश्च **विशेषैः प्रत्याश्रयं** वस्तुनि वस्तुनि **सहिता** युक्तैव सा प्रवृत्तिः, **प्रादुर्भावतिरोभावात्मिके**ति रूपमस्याः कथयति, **प्र[10]चयापचयफले**ति कार्यस्य प्रवृत्तिमाह क्रियायां २८४-१

---

१ **दृष्टा तं°** य० ॥ २ °**स्माद्धेतोस्तस्मा दृ°** भा०। वि० विना °**द्धतोस्तस्मा दृ°** य०। °**द्धतोस्मात्दृ°** वि० ॥ ३ °**तिदे°** प्र० ॥ ४ °**म्बन्धद्रव्य°** प्र० ॥ ५ °**त्यनन्तरं** प्र० ॥ ६ **चाभवति** प्र० ॥ ७ **व्याक्तेर्भवति** य०। **व्या त्क्तार्भवति** भा०। (व्यक्तौ भवति? व्यक्तीभवति?) ॥ ८ °**वावशिष्टं** प्र० ॥ ९ °**कव्रुत्त्या** प्र० ॥ १० **प्रचयाप्रचयफलेति कार्यसाप्रवृत्तिमहि** प्र० ॥

**प्रचयापचयफला इत्युक्तं भाष्यकारेण – सर्वस्य[1] मुहूर्तमप्यनवस्थानात् किं फलं लौकिकम् ? विशेषास्तूपजायमानाः स्वाश्रयात् कारकान्तराण्यपेक्षन्ते, यथा विक्लेदस्तण्डुलाश्रयः काष्ठादीन्यपेक्षते । तत्र या प्रवृत्तिः सा लोकव्यवहारानङ्गम् । तस्मात् प्रवृत्तिविशेषः क्रिया न[2] प्रवृत्तिसामान्यम् ।**

**भावश्च क्रिया इति यदुच्यते तन्न सिध्यति । प्रवृत्तिसामान्यस्य कुतः क्रियात्वं फलोद्देशकारकसम्बन्धाभावात्, गच्छत्यादिव्यापिरूपता वा प्रवृत्तिविशेषत्वेनाभूतत्वात् कारकवत्, वैधर्म्यं तद्भेदवत् । तथा च [3]द्रव्यद्वितीयतापि नैव प्रवृत्तिसामान्यस्य, असत्त्वात्, खपुष्पस्येव । असत्त्वं च अद्रव्यत्वे सति अगत्यादित्वात् खपुष्पवत् ।**

---

गृहीत्वोक्तं **भाष्यकारेणे**ति तस्याः सर्वत्र वस्तुनि सम्भवन्त्याः स्वरूपफलसद्भावप्रदर्शनार्थमुक्तमिति ग्रन्थं योजयति, **सर्वस्य मुहूर्तमप्यनवस्थानात् किं फलं लौकिकं** सांव्यवहारिकम् ? इति व्यवहाराक्षमतां दर्शयति । विशेषग्रहणसामर्थ्यात् पुन**र्विशेषास्तूपजायमानाः** पच्यादय ओदनादिफलान्तरहेतवः **स्वाश्रयात् कारकान्तराण्यपेक्षन्ते** । तन्निदर्शयति – **यथा विक्लेदस्तण्डुलाश्रयः काष्ठादीन्यपेक्षते** इति । तदुपनयति – **तत्र या प्रवृत्ति**रित्यादि गतार्थं यावद् **न प्रवृत्तिसामान्य[4]**मिति । इति विशेषग्रहणसाफल्यं व्याख्यातं भवति प्रवृत्तिसामान्यस्याक्रियात्वं च ।

**भावश्च क्रिये**त्यादि यावत् **कुतः क्रियात्वं फलोद्देशकारकसम्बन्धाभावात् ?** यदुच्यते 'द्रव्यं च क्रिया[5] च' इति यन्न्यायबलेन त्वयोच्यते द्रव्यक्रियात्मको भाव इति तन्न सिध्यति त्वदभिप्रेतक्रियाभावासिद्धेरित्यर्थः । [6]इतश्चासिद्धिः स्वविशेषाव्यापित्वाद् न प्रवृत्तिसामान्यं क्रियेति । तत्प्रतिपादनार्थमाह – **गच्छत्यादिव्यापिरूपता वा** इति 'कुतः' इति वर्तते । गत्यादिव्यापिनी न भवति त्वदिष्टप्रवृत्तिसामान्यलक्षणा क्रिया **प्रवृत्तिविशेषत्वेनाभूतत्वात्**, यद् यत् प्रवृत्तिविशेषत्वेनाभूतं तत् तद् गच्छत्यादीन् न व्याप्नोति यथा कारकं कारकाणां प्रवृत्तिविशेषत्वेनाभूतमक्रिया, अक्रियात्वं चावयोः सिद्धमिति दृष्टान्तः साधर्म्येण । [7]**वैधर्म्यं तद्भेदव**दिति, या या क्रिया सा सा प्रवृत्तिविशेषत्वेन भूता यथा गच्छतितिष्ठत्या[8]दिक्रियाभेदाः द्रवण-पतन-सर्पण-रिङ्गणादयो वा गमनविशेषाः । तस्माद् गच्छत्याद्यव्यापित्वादप्यक्रियात्वं
२८४-२ प्रवृत्तिसामान्यस्य **कारकव**दिति ।

**तथा चे**त्यादि । एवं च कृत्वा द्रव्यं क्रिया च द्वौ भावाविति 'द्रव्यस्य भावस्य द्वितीयो भावः क्रिया' इत्येतदपि प्रवृत्तिसामान्यक्रियावादिनो नोपपद्यते तस्याः क्रियायास्त्वदिष्टाया **असत्त्वात् खपुष्पस्येव**, यथा खपुष्पमसत्त्वाद् द्रव्यस्य द्वितीयं न भवति तथा प्रवृत्तिसामान्यमिति । असत्त्वमसिद्धं प्रवृत्तिसामान्यस्येति चेत्, असत् तदद्रव्यत्वे सति अगत्यादित्वात् खपुष्पवत्, अगत्यादित्वं च तदव्यापित्वादिति । [9]तस्मात् प्रवृत्तिविशेषः क्रिया न प्रवृत्तिसामान्यम् इति वैयाकरणपक्षः ।

---

१ दृश्यतां पृ० ३७९ पं० ८, पृ० ३८० टि० १ ॥ २ दृश्यतां पं० २९, पृ० २८५-१, २९२-२ ॥ ३ दृश्यतां पृ० २८५-२ ॥ ४ °मिति विशेष भा० ॥ ५ क्रियत इति य० । क्रिच इति भा० ॥ ६ दृश्यतां पृ० ३९७ टि० ७ ॥ ७ ( वैधर्म्यें ? ) ॥ ८ त्याक्रियाभेदः प्र० ॥ ९ दृश्यतां पृ० ४०० पं० ३ ॥

**अभ्युपगता तावदस्मदभिमतिवत् सर्वभावविषया प्रवृत्तिर्भावानामात्मा फलान्तरहेतुहेतुभावाविभक्तवृत्तिः सर्वभावेष्वित्युक्तेः । अनन्तरोक्तविशेषद्वय-सन्निधानात् फलान्तरहेतुत्वात् तेषामेव ।**

**यथा च विशेषाः फलनिर्वृत्तौ कारकान्तराण्यपेक्षन्ते तथा मृद्भवनस्यापि घटफलनिर्वृत्तौ कारकान्तरापेक्षा, कर्ता कुम्भकारोऽस्य दण्डादिना उदकाद्याहृत्यै अततः शालायां घटं करोति । मालवनगरे सप्त वर्षशतानि आम एव घटो वर्षे**

---

अत्रोच्यते – **अभ्युपगता तावदस्मदभिमतिव**दित्यादि । ननु त्वयापि प्रवृत्तिविशेषक्रियावा[1]दिना 'प्रवृत्तिसामान्यमेव क्रिया' इत्येतदभ्युपगतमस्मदभिमतिवत् । कथम् ? इति तद्दर्शयति – **सर्वभावविषया प्रवृत्तिर्भावानामात्मे**ति, आदावेव तावदभ्युपगतं त्वया न[2] हि किञ्चित् स्वात्मनि मुहूर्तमप्यवतिष्ठते वर्धते यावदनेन वर्धितव्यमपायेन वा युज्यते इति ब्रुवता सर्वभावानां सततसम्प्रवृत्तिरात्मा स्वरूपमिति, स चाभ्युपगमोऽस्मन्मतिसाम्यात् प्रवृत्तिसामान्यक्रियात्वं समर्थयति, किं कारणम् ? **फलान्तरहेतुहेतुभावाविभक्तवृत्तिः सर्वभावेष्वित्युक्तेः**, फलं बीजादिप्रवृत्तेर्हेतुभू[3]ताया अङ्कुरादि, ततोऽन्यानि फलानि फलान्तराणि तदनुबन्धजन्मानि पर्ण-नाल-काण्ड-तुष-शूक-क्षीर-तण्डुलादीनि क्रमेण, हेतवः पू[4]र्वे पूर्वे यथास्वम्, ततोऽपि पूर्वे पूर्वेऽन्तरिता हेतुहेतवः, त एव भावाः क्रियात्मानः, तैरेवाविभक्ता वृत्तिर्वर्तनं सततसम्प्रवृत्तिः सर्वभावेष्वित्युक्तत्वात् । कथमुक्तम् ? न[6] हि किञ्चित् स्वात्मनि इत्यादिवचनात् सर्वभावेषु २८५-१ बीजाङ्कुरमृत्पिण्डादिषूक्तम् । तच्च प्रवृत्तिसामान्यं तण्डुलविक्लेदादीनामपि त[5]त्स्वारूप्यानतिवृत्तेः । किञ्चान्यत्, यदपि चोक्तं [6]'**केनचित् फलोद्देशेन प्रवृत्तिविशेषः कारकाणाम्**' इति 'स च विशेषः सहभाविनो रूपादयोऽसहभाविनो गमनस्थानादयश्च तैः प्रत्याश्रयं युक्ता तदात्मिका च' इत्यनेनापि वचनेन सामान्यप्रवृत्तेरेवेति क्रियात्वमुक्तं भ[7]वति । किं कारणम् ? अनन्तरोक्तविशेषद्वयसन्निधानात् सर्वत्र तेषामेव च विशेषाणां सामान्यप्रवृत्त्यात्मकानामोदनाद्युद्देश्यफलरूपत्वात् सन्निधानाच्च फलान्तरहेतुत्वात् तेषामेव, त एव ह्योदनादि-फलान्तरहेतवो नान्यः कश्चित्, अतः प्रवृत्तिविशेषात्मिकापि सैव सामान्यप्रवृत्तिरेवेति ।

यदपि चोक्तं [8]'**विशेषास्तूपजायमाना** इत्यादिस्तदनन्तरोक्तो ग्रन्थो यावद् **न प्रवृत्तिसामान्यं** लोक-व्यवहारानङ्गत्वादिति, अत्रोच्यते – इहापि समानकल्पत्वाद् न दोषः, विशेषग्रहणानर्थक्यं च परपक्ष इत्यत आह – **यथा च विशेषा** इत्यादि प्रवृत्तिविशेषसामान्यलक्षणयोः क्रिययोरविशेषापादनग्रन्थो गतार्थः । पचेरोदनफलनिर्वृत्तौ कारकान्तरापेक्षावत् **मृद्भवनस्यापि घटफलनिर्वृत्तौ कारकान्तरापेक्षे**ति पिण्डादिषु सर्वेषु भवनमेव कुम्भकारादीनि मृदोऽन्यानि कारकाण्यपेक्षत इत्यर्थः । तान्युदाहरति – **कर्ता कुम्भकारोऽस्ये**त्यादि कर्तृकरणसम्प्रदानापादानाधिकरणानि कुलालदण्डाद्युदकाद्याहृत्यतच्छा[9]ला इति । कालोऽपि केषा- २८५-२ ञ्चित् कारकमिति तद्दर्शयन्नाह – **मालवनगरे सप्त वर्षशतानी**ति, तत्र आम एव घटो व[10]र्षे प्रदर्श्यते

---

१ °वादि प्रवृ° प्र० ॥ २ दृश्यतां पृ० ३७९ पं० ८ ॥ ३ °भूतस्यांकुरादि प्र० ॥ ४ सर्वे पूर्वे य० । पूर्वे भा० ॥ ५ तत्स्वरूप्या° प्र० ॥ ६ दृश्यतां पृ० ३९९ पं० ३ ॥ ७ भवति य० प्रतिषु नास्ति ॥ ८ दृश्यतां पृ० ४०० पं० २ ॥ ९ °च्छालाया इति प्र० ॥ १० वर्षे त्रदर्श्यते प्र० ॥

**प्रदश्यते सङ्गोप्यते च गोदोहे वा तडागादौ; तस्यैव क्षणमप्यनवस्थानमुदके प्रक्षिप्तस्य । प्रवृत्तिविशेषत्वेनाभूतत्वाद्यसिद्धतापि चैवमुक्तैव । अगत्यादित्वाच्च नासत्त्वम् । नन्वगमनस्थानं चाकाशं भवति इति सन्देहहेतुता ।**

**गत्यभावोऽप्रवृत्तिर्गतिनिवृत्तिरिति चेत्, अथ निरुपाख्यमेव गत्यभावमात्रस्थानं तत् प्राप्नोति अभावत्वादप्रवृत्तत्वात् खपुष्पवत् ।**

---

**सङ्गोप्यते च** 'सङ्गोपितसाराणि द्रव्याणि' इति ख्यापनार्थं, [1]'गोदोहे वा तडागादाविति, तस्यैव आमस्य क्षणमप्यनवस्थानमुदके प्रक्षिप्तस्येति च कारकविशेषापेक्षाप्रदर्शनम् ।

यदप्युक्तं [2]प्रवृत्तिसामान्यं प्रवृत्तिविशेषत्वेनाभूतत्वात् कारकवद् गच्छत्यादिव्यापि न भवति इति तदपि नानुमानम्, असिद्धहेतुत्वात् । प्रवृत्तिसामान्यस्य [3]*प्रवृत्तिविशेषत्वेनाभूतत्वमसिद्धं प्रवृत्तिविशेषस्वरूपत्वादेव, तत्सामान्यस्य* प्रवृत्तिविशेषस्वरूपत्वं च सर्वत्र भवनस्याविच्छिन्नत्वात् तदविनाभावाच्च गत्यादिविशेषाणां भवनस्यात्मवदिति तद्व्यायमनुसारयन्नाह – **प्रवृत्तिविशेषत्वेनाभूतत्वाद्यसिद्धतापि चैवमुक्तैव ।** आदिग्रहणाद् विरोधाविरोधभावौ द्रव्यक्रिययोरेवमुक्तावेवेति । यदप्युक्तम्[4] –असत्त्वाद् द्रव्यद्वितीयतापि नैव प्रवृत्तिसामान्यस्यासत्त्वं च खपुष्पवदगत्यादित्वादिति, अत्रोच्यते – अगत्यादित्वाच्च नासत्त्वं हेत्वसिद्धेरेवोक्तवद् गत्यादिस्वरूपत्वात् सततभवनस्येति ।

अभ्युपगम्यापि अगत्यादिहेतुसिद्धिमनैकान्तिकत्वं ब्रूमः – **नन्व[5]गमनस्थानं चाकाशम्** अगच्छदतिष्ठच्च व्योम **भवति** अस्त्येव । तत्र किमगत्यादित्वादसत् स्यात् खपुष्पवत्? उताकाशवत् सत् स्यात्?
२८६-१ **इति सन्देहहेतुते**ति । स्यान्मतम् – अगत्यस्तु, कथमस्थानमाकाशम् नित्यस्थितत्वात्? तस्मात् 'अगतित्वात्' इति संशयहेतुता स्यात्, 'अस्थानत्वात्' इत्ययुक्तेति । अत्रोच्यते – अस्याप्यस्थानत्वमेव, यस्मात् पठ्यते **ष्ठा [6]गतिनिवृत्तौ** [ पा० धा० ९२८ ], प्रवृत्ताया गतेर्या निवृत्तिः प्रतिबन्धः सा स्थितिर्वक्ष्यमाणवत् । न चास्य प्रवृत्तगतेराकाशस्य प्रतिबन्धो [8]जातु प्रगतदेवदत्तगतिनिवर्तनवत् । 'अस्थानम्' इति च स्थानादन्यद् गमनादि उच्यते न स्थानस्यात्यन्ताभाव एव, तस्मादाकाशमप्यस्थानगमनं सच्चेत्यनैकान्तिकहेतुता तदवस्थैव साधनयोरनयोरिति ।

**गत्यभावोऽप्रवृत्तिर्गतिनिवृत्तिरिति चेत् ।** स्यान्मतम् – नन्व[9]भावो गतेर्गतिनिवृत्तिरप्रवृत्तिः, तस्माद् गत्यभावमात्रत्वात् स्थितेरभावत्वाद् नास्थानं न [10]स्थानवदेव चाकाशं गतेरेवाभावादिति । अत्रोच्यते – **अथ निरुपाख्यमेवे**त्यादि । उपाख्या संज्ञा, निर्गतोपाख्यं निरुपाख्यं त्वत्परिकल्पितगत्यभावमात्रस्थानं तत् प्राप्नोति, अभावत्वात् । अभावत्वं चास्याप्रवृत्तत्वात् खपुष्पवत् । आकाशादि [11]च प्रवृत्तं स्थानवदस्थानं चेति वक्ष्यामः ।

---

१ **गोदाहं वा तडागादाविति तथैव** य० । **गोदोविति तस्यैव** भा० ॥ २ दृश्यतां पृ० ४०० पं० ६ ॥ ३ * * एतच्चिह्नान्तर्गतपाठस्थाने **प्रवृत्तिविशेषत्वेनाभूतत्वमसिद्धं प्रवृत्तिविशेषस्वरूपत्वादेव तत्सामान्यस्य प्रवृत्तिविशेषत्वेनाभूतत्वमसिद्धं प्रवृत्तिविशेषस्वरूपत्वात्सामान्यस्य** इति द्विर्भूतः पाठः प्रतिषु ॥ ४ दृश्यतां पृ० ४०० पं० ७ ॥ ५ **नन्वगमनं चाकाशम्** भा० । ( नन्वगमनमस्थानं चाकाशम्? नन्वस्थानगमनं चाकाशम्? ) ॥ ६ **गतिनिवर्तनवदस्थानमिति वृत्तौ** य० ॥ ७ **प्रवृत्ता । प्रवृत्ताया** भा० । **प्रवृत्ताऽप्रवृत्ताया** य० ॥ ८ **जानु** य० ॥ ९ **भावगते**° भा० । °**भागवते**° य० ॥ १० **स्थानतदेव** प्र० ॥ ११ **व** प्र० ॥

**गतिविशेषणसामर्थ्यादिति चेत्, तदेवेदमस्मदिष्टं स्थानस्य सत्त्वं गत्यभावस्य गतिविशेषणयोगात् सिद्धम् । गतिविशेषणसामर्थ्यापादितस्थित्याद्युत्तरभावसत्यत्वात् अत एव च सर्वात्मकभवनस्वतत्त्वमालम्ब्य तत्स्वाभाव्यात् पूर्वोत्तरभावयोरेकस्याभिव्यक्त्या इतरस्य अनभिव्यक्त्या च भवनं भावः। विरोधिभावप्रादुर्भावे हि भावान्तरनिवृत्तिः भाव एव विरोधिभावप्रादुर्भावत्वादेव, यथा जागरणेन स्वप्नो निवर्त्यते। न हि क्रियान्तरमन्यङ्गीय क्रियान्तरं प्रादुर्भवतीह किञ्चित् । इहापि च गतिभवनमन्यङ्गीय न स्थितिभवनं प्रादुर्भवति।**

---

**गतिविशेषणसामर्थ्यादिति चेत्** । स्यान्मतम्—यदि सर्वथा स्थानं निवृत्तिरभावः इत्यविशेष्य ब्रूयां खपुष्पवद् निरुपाख्यं स्यात्, किं तर्हि? 'गत्या विशिष्टं स्थानं गतिनिवृत्तिः' इति ब्रूमः । तस्माद् 'गत्यभावः' इति सोपाख्यमिति । अत्रोच्यते—**तदेवेदमस्मदिष्टं स्थानस्य सत्त्वं गत्यभावस्य** स्थित्यभावस्य गमनस्य सत्त्ववद् **गतिविशेषणयोगाद्** भवन्मतविरुद्धं **सिद्धम्**, तस्मिंश्च सिद्धे स्थाने तद्वद् २८६-२ गतिस्थित्यादि सर्वक्रियापदाभिधेयं भावः सत्यमेव नासदिति सिद्धम् । तस्माच्च गतिविशेषणसामर्थ्यापादितस्थित्याद्युत्तरभावसत्यत्वात् **अत एव च सर्वात्मके**त्यादि यावद् **भवनं भाव** इति । येयं निरुक्तिः 'भवनं भावः' इति साप्येतस्मादेव कारणाद् गतिस्थित्यादिसर्वात्मकमेव भवनस्वतत्त्व[1]मालम्ब्य तदपरित्यागेन **तत्स्वाभाव्यात्** तत्तद्भवनानुभवस्वभावत्वात् पूर्वस्य गतिभावस्य उत्तरस्य च स्थितिभावस्य अथवा पूर्वस्य स्थितिभावस्य उत्तरस्य च गतिभावस्य यथाविवक्षाक्रमं यथापरिणतिक्रमं च[2] यथासम्भव**मेकस्याभिव्यक्त्या इतरस्यानभिव्यक्त्या च भवनं भाव** इति निरुच्यते ।

स्यान्मतम्—विरोधिनो भावस्य उत्तरस्य स्थित्यादेः प्रादुर्भावाद् गतेर्विनाशः गतेर्वा प्रादुर्भावे स्थितेः, स चाभावो वि[3]नाशः पाकजोत्पत्तिवदिति । अत्रोच्यते—योऽप्यभावाभिमतो विनाशो **विरोधिभावप्रादुर्भावे हि भावान्तरनिवृत्ति**रितीष्टैः[4], स च भावान्तरानभिव्यक्तिस्तस्य भावान्तरस्य स्थितेरन्यस्य गत्यादेः गतेर्वान्यस्य स्थित्यादे**र्भाव एव** नाभावः, विरोधिभावप्रादुर्भावत्वादेव । यथा जागरणेन स्वप्नो निवर्त्यते, ↑[5]किमुक्तं भवति? निवर्त्य↑तेऽनभिव्यक्तिं नीयत इत्युच्यते । यथा जागरणेन स्वप्नोऽनभिव्यक्तिं नीयते तथा स्वप्नेन जागरणम्, जाग्रतोऽपि च सुप्तवद् मन्द-मन्दतर-मन्दतमचैतन्यदर्शनात् सुप्तस्यापि जाग्रत इवाभिव्यक्त[व्यक्त]तरव्यक्ततमस्वप्न[6]दर्शनात् तदेव हि चैतन्यं तीव्रमन्दावरणोदयक्षयोपशमापेक्षं निद्रा-निद्रा-[निद्रा]-प्रचला-प्रचला[प्रचला]दिभेदं पटु-पटुतर-[पटु]तं[7]मेन्द्रियादिभेदं च दृश्यते। तस्मादेकस्यैर्व[8] वस्तुनो- २८७-१ ऽभिव्यक्त्यनभिव्यक्तिकृते स्वप्नजागरणे, अन्यतरन्यङ्‌न्यनेनान्यतरभवनात् सर्पस्फटाटोपकुण्डलकीभवनवत् । अत आह—**न हि क्रियान्तरमन्यङ्गीये**त्यादि गतार्थं याव**दिह किञ्चिदि**ति । एषा दृष्टान्तवर्णना। **इहापि च गतिभवन**मित्यादि गतार्थं दार्ष्टान्तिकवर्णनमपि । तस्मात् क्रियान्तरप्रादुर्भावे पूर्वभावनिवृत्तिः नाभाव इति ।

---

१ °**स्य तत्त्व**° य० ॥ २ रं० विना **च यथासंख्यमे**° प्र० । ( चायथासंख्यमे° ? ) ॥ ३ **पिनाशः** प्र० ॥ ४ °**ष्ट सा** प्र० ॥ ५ ↑ ↑ एतदन्तर्गतः पाठो य० प्रतिषु नास्ति ॥ ६ °**प्नप्रद**° प्र० ॥ ७ °**तमैन्द्रि**° य० ॥ ८ °**व च वस्तुनो**° भा० ॥

स्यादेतत्—यथा भुक्तिक्रियाया निवृत्तिस्तृप्तिफलावसाना, प्रयोजनाभावे कारकानभिसम्बन्धाद् भुजेर्निवृत्तिर्न क्रियान्तरबाधनात् एवमेतदपि स्यात्। अत्रोच्यते—अत्रापि तु फलं तृप्तिः क्रियान्तरम्। बुभुक्षां हि बाधित्वा भुक्तिः प्रवर्तते, भुक्तिं च बाधित्वा तृप्तिः प्रवर्तते, क्रियाचक्रकाण्येतानि।

यदि स्थितिर्नाम अवस्तुकमभिधानं विवक्षाशब्दयोरप्रवृत्तिप्रसङ्गः। अथ द्रव्यमात्रं स्थितिः द्रव्यस्याविरोधाद् गतावपि स्यात्। यतस्तु खलु विरोध्यविरोधिभावा वाच्यवस्तुस्थितिः तस्माद् भवनानन्यत्व एव गतिविरोधिनी स्थितिः।

---

अत्राह—**स्यादेत**दित्यादि याव**देवमेतदपि स्या**दिति। यथा तु[1] भुक्तिक्रियाया निवृत्तिस्तृप्तिफलावसाना[2] तत् प्रयोजनमुद्दिश्य कारकप्रवृत्तेः, तस्मिंश्चावसिते प्रयोजने कारकाणि न प्रवर्तन्ते, तस्मात् कारकानभिसम्बन्धाद् भुजेर्निवृत्तिः न क्रियान्तरबाधनात्। एवं गतिरपि प्राप्तिफलावसाना प्रयोजनाभावे कारकानभिसम्बन्धाद् निवर्तते न क्रियान्तरबाधनात्। अतः संशेमहे—किं स्वप्नजागरणवत् क्रियान्तरन्यङ्ग्यने क्रियान्तरोद्भावस्तादात्म्ये सत्येव स्यात्? उतात्यन्तनिवृत्तिरेव गतेः फलावसा[3]नभुजिक्रियावत्? इति। **अत्रोच्यते—अत्रापि तु** मा मंस्थाः 'भुजिनिवृत्तिरभाव एव' इति, किं तर्हि? **फलं तृप्तिः क्रियान्तरं** प्रवृत्तेरेव[4] क्रियात्वात्, **बुभुक्षां हि बाधित्वे**त्यादि यावत् **क्रियाचक्रकाण्येतानी**ति। एतदुक्तं भवति—क्रियान्तरप्रादुर्भावेन विना न क्रियानिवृत्तिर्नापि पूर्वक्रियान्यक्करणमन्तरेण क्रियान्तरप्रादुर्भावः, बुभुक्षाभुक्तितृप्तिक्रियाचक्रवत् पूर्वपूर्वबाधया उत्तरोत्तरप्रादुर्भावात् समानमेतदपीति। तस्माद् नाभावो गतिनिवृत्तिः, भाव एव स्थितिरिति।

२८७-२ एतदनिच्छोर्दोष उच्यते—**यदि स्थितिर्नामे**त्यादि। स्थितेर्भावत्वानभ्युपगमे द्वयी गतिः स्थितिशब्दस्य स्यात् तृतीयविकल्पाभावात्—यद्वा स्थित्यभिधानमवस्तुकम्? यद्वा द्रव्यमात्रविषयं स्यात्? किञ्चातः? इदमतो भवति दोषजातम्—अवस्तुकत्वे **विवक्षाशब्दयोरप्रवृत्तिप्रसङ्गः**, यद्यवस्तुविषयं स्थितिशब्दवचनं वक्तुमिच्छा विवक्षा सा स्वनिश्चितमर्थं परं प्रत्याययामीति जायते, अर्थाभावाच्च न स्यात्। तथा च अभिधीयतेऽनेनेत्यभिधानं स्थितिशब्दः, तस्याभावः स्यादर्थाभावात्, काकवासितादिवदनर्थकं वा तत् स्यादिति। एवं तावदवस्तुकत्वे दोषः। **अथ द्रव्यमात्रं स्थितिः द्रव्यस्याविरोधाद् गतावपि स्यात्**, यथा देवदत्तसद्भावाद् गत्यविरोधाच्च 'देवदत्तो गच्छति' इत्यत्र देवदत्ताभिधानं प्रवर्तते तथा 'देवदत्तस्तिष्ठति गच्छति च' इत्येतदभिधानं प्रवर्तेत, उभयत्र द्रव्यस्यैव सत्त्वात् विशेषाभावाच्च। एवं दोषदर्शनाद् न गत्यभावमात्रं स्थितिः। **यतस्तु खल्वि**त्यादि, विरोध्यविरोधि[5]भा[6]वा वाच्यवस्तुस्थितिः, गतिस्थित्योः परस्परविरोधाद् देवदत्तद्रव्येण सहाविरोधाद् भावावेव गतिस्थिती द्रव्यवत्, ग्रन्थो गतार्थो यावद् **भवनानन्यत्व एव गतिविरोधिनी स्थितिरि**ति। भवनानन्यत्व इति द्रव्यभवनादनन्यैव गतिः स्थितिर्वेति प्रवृत्तिभवनानन्यत्व एवेति यथाप्र[7]क्रान्तमुपसंहरति।

---

१ तु भा०॥ २ °सान प्र०॥ ३ °सानेभुजि° य०॥ ४ (प्रवृत्तिरेव?)॥ ५ विरोधाविरोधि° प्र०॥ ६ °भावाचाव्यवस्तुस्थिति भा०। भावावस्तुस्थितिः वि०। °भावावाव्यस्तुस्थितिः पा० डे० लीं० रं०॥ ७ °पक्रान्त° प्र०॥

**स्यादेतत् — स्थित्या विरोधवत् खपुष्पादिना गत्यभावेनापि विरोधः, तत्र तद्विरोधित्वात् तदविनाभावित्वे कुत एतद् भावविषयमेव अभावविषयमेवैतददिति वा कुतः ? यद्यभावोऽपि भावेन अभावेन वा भावो विरुध्यते तावुभौ भावावेव तर्हि विरोधित्वात् यत्किञ्चिद्वत् । अनुत्पद्यमानस्थितौ गतिनिवृत्तौ गतिस्थित्याद्येकभूतभवनाविनाभूतद्रव्यविनाशविषयं 'स्थानम्' इत्यभिधानं स्यात् । तस्माद् गत्यभावलक्षित……… ।**

**एवं खपुष्पाद्यसत्तावाचिशब्दानां भावार्थत्वम्, यथा 'तिष्ठति पचति' इत्य-**

---

**स्यादेत**दित्यादि । स्यान्मतम् – 'विरोधित्वात्' इत्येतदनैकान्तिकमभावत्वप्रसङ्गात् । गतेरभावो गत्या विरुध्यते प्रकाशाभावेनेव तमसा प्रकाशः, यथा त्वन्मतेनैव[1] ननु प्राग् गतिरेव क्रियान्तरप्रादुर्भावेनानभिव्यक्तिं नीयमाना भाव एव इत्युक्तम्, तत्र **स्थित्या विरोधवत् खपुष्पादिना गत्यभावेनापि विरोधः । तत्र तद्विरोधित्वात् तदविनाभावित्वे**[2] इति गतिरभावाविनाभाविनी स्यात् तद्विरोधित्वात्, यच्च यद्विरोधि २८८-१
तत् तेनाविनाभावि दृष्टम्, यथा – गतिः स्थित्या । खपुष्पादेर्वा भावत्वमेव स्यात्, गतिविरोधित्वात्, स्थितिवत् । एवं **तदविनाभावित्वे** सति **कुत एतद् भावविषयमेव** एतदभिधानं 'स्थितिः' इति ? 'खपुष्पादिः' इत्य**भावविषयमेवैतददिति वा कुतः ?** विशेषो वात्र वाच्य इति ।

अत्र ब्रूमः[3] – **य↑[4]द्यभावोऽपी**त्यादि । खपुष्पादेर्विपक्षं कृत्वा भावत्वाद्[5] नानिष्टापादनम् । किं विशेषेणोक्तेन[6] ? यथा स्थितेरभावत्वायुक्तिस्तथा खपुष्पादेरपीत्यभिप्रायः↑ । तत् कथं भाव्यते ? इति तदुच्यते – **यद्यभावो भावेन अभावेन वा भावो विरुध्यते तावुभौ** यो विरुध्यते येन च विरुध्यते **भावावेव तर्हि विरोधित्वात् यत्किञ्चिद्व**दिति उदाहरणसौलभ्यं दर्शयति अहिनकुलादिवद् घटपटादिवद् घटकपालादिवद्वा सर्वत्र सहानवस्थानलक्षणविरोधदर्शनाद्[7] देशतः कालतो वेति । तस्मात् खपुष्पादेरपि भावत्वाद् नानिष्टमिति ।

यदपि च त्वया स्थित्यभिधानमभावविषयमिति मन्यते तस्यापीयमुपपत्तिः स्याद् भवन्ती, तद्यथा – गत्यभावमात्रविषयत्वं चानुत्पद्यमानस्थितिर्गतिनिवृत्तिरिति, तथा च कल्प्यमानायाम[8]**नुत्पद्यमानस्थितौ गतिनिवृत्तौ,** गतिस्थित्यादि एकभूतं भवनं प्रागुक्तन्यायकम्, तेनाविनाभूतं द्रव्यम्, तस्य विनाशोऽत्यन्तमभावः, तद्विषयं 'स्थानम्' इत्यभिधानं स्यात्, न चैवं द्रव्यस्य कूटस्थनित्यत्वाद् भवितुमर्हति । तस्मादेव च तदनिष्टभयात् प्रतिपत्तव्यम् – गतिनिवृत्तिः स्थितिर्नाभावः, तथा खपुष्पादिश्चेति । तदुपसंहरति – **तस्माद् गत्यभावलक्षिते**त्यादि गतार्थम् ।

अनन्तरं खपुष्पादिरपि प्रसङ्गतोऽभिहितो योऽसावभावाभिमतस्तत्रापि 'अभावः' इति च नापदार्थ उच्यते, किं तर्हि ? नञः पर्युदासवाचित्वाद् भावादन्यो भाव इति भावविशेषः, अब्राह्मणक्षत्रियादिवत् । २८८-२
**एवं खपुष्पाद्य[9]सत्तावाचिशब्दानां भावार्थत्वम्,** एवमसद्भावाभिमतेष्वपि सदर्थविषयत्वमिति न्याय-

---

१ °तेनेव प्र० ॥ २ °भावत्वे भा० । °भावत्ते य० ॥ ३ वा ब्रूमः भा० ॥ ४ ↑ ↑ एतदन्तर्गतः पाठो भा० प्रतौ नास्ति ॥ ५ भावाद् य० ॥ ६ विशेषेणा° वि० विना० ॥ ७ °धाद्दर्शनाद् प्र० ॥ ८ पा० विना °मानायामुद्यमानस्थितौ य० । °मानायानुद्यमानस्थितौ पा० । °मानस्थितौ भा० ॥ ९ °ष्पादिसत्वा° प्र० ॥

**न्यथाभवनं तथा 'विनश्यति' इत्यादि। खपुष्पादीनामपि ननु तथा अभवनम्, अन्यथा न तु अभवनम्। अगतिस्थितिरन्यथाभवनमेवं खपुष्पादिरपि, सति नियतत्वात् प्रकाराणाम्।**

**एवं च एक एव पूर्वापरीभूतो भावः प्रवृत्तिरित्युच्यते स च एवान्तर्भावितस्वप्रभेदत्वात् प्रवृत्तिविशेष इत्युच्यते, भुजिविशेषवत्, यथा भुजावेव द्रव्यक्षेत्र-**

---

व्यापितां दर्शयति। वक्ष्यते चास्योदाहरणमतिदेशस्य। इदं तु तावत् प्रकृतं भाव्यते—**यथा 'तिष्ठति, पचति' इत्यन्यथाभवनम्,** अन्येन प्रकारेण परिस्पन्दपरिणतस्य द्रव्यस्य ततः प्रकारादन्येन अपरिस्पन्दपरिणतिप्रकारेण भवनं तिष्ठति आस्ते शेत इत्यादि, तण्डुलादिकठिनद्रव्यमृदूभवनं पचत्यादि। यथैताः क्रियाः अन्यथाभवनमात्रभेदाः प्रवृत्तिसामान्यं [1]↑भवनं नातिवर्तन्ते तथा 'विनश्यति प्रध्वंसते [2]नितिष्ठति' इत्यादयोऽपि भवनप्रकाराः प्रवृत्तिसामान्यं↑[1] भावत्वं च नातिवर्तन्ते। एवं क्रियापदवाच्यस्यार्थस्य अन्यथाभवनमात्रता व्याख्याता। येऽप्यत्यन्ताभावाभिमताः खपुष्पादिशब्दवाच्यास्तेषामपि ननु तथा अभवनम्, अन्येन प्रकारेण न त्वभवनम्, भवनमेव, नात्यन्ताभवनमित्यर्थः। कथम्? **अगतिस्थितिः,** गतेरन्या स्थितिरगतिस्थितिः, न तु गत्यभावमात्रम्, गतेरेव प्रकारान्तरता। यथा सा स्थिति**रन्यथाभवनमेवं खपुष्पादिरपि** अन्यथाभवनम्। किं कारणम्? **सति नियतत्वात् प्रकाराणाम्,** प्रकारत्वात् सन्नेव खपुष्पादिः, यो यः प्रकारः स सन्नेव, यथा गतिनि[3]वृत्तिः स्थितिरुक्तन्याया सती। कथं खपुष्पादेः प्रकारता इति चेत्, उच्यते—खपुष्पस्य च समवायरूपेणानभिव्यक्तिः अशोककुसुमादिप्रकारेणाभिव्यक्तिरिति प्रकारत्वानतिवृत्तेः, द्रव्यक्रिययोः सर्वात्मकत्वादस्मिन् द्रव्यार्थनयभेदे सर्वं द्रव्यं क्रिया च[4] गमनादि, द्रव्यभेदानां गमनादिक्रियाभेदानां चोक्तवद् भवनद्वयाभेदात् कतमत् खं कतमे[5]द्वा पुष्पाणां विकसनमन्यत्? इति देवदत्तगमनभवनद्वयत्ववत् तदपीति खपुष्पादिरपि भावः।

२८९-१ **एवं चे**त्यादि। एवं च कृत्वा गमनस्थानादिक्रमभाविनीनामपि क्रियाणां सततसम्प्रवृत्तितादात्म्यानतिक्रमा**देक एव पूर्वापरीभूतो भावः प्रवृत्तिरित्युच्यते,** एवमेव च तदुपपद्यते यदुक्तं [6]**पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचति** [ निरुक्त० १।१ ] इत्यादीति सर्वधात्वैकार्थ्यस्य चानन्तरमा[7]पादयिष्यमाणत्वात्। कस्मात् स भावः प्रवृत्तिरित्युच्यते? ब्रूमः—प्रकर्षेण वर्तनात्। स च प्रकर्षः सदा सर्वप्रभेदानुभवनरूपः, **स[8] च एवान्तर्भावितस्वप्रभेदत्वात् प्रवृत्तिविशेष इत्युच्यते** रूपादिगत्यादीन् स्वप्रभेदान् अन्तर्भावयन्नेव भावः सामान्यभवनलक्षणो भ[9]वन्, भेदानां परस्परतो विशेषा[10]विशेषौ [11]भेदानुस्यूतत्वात्, न त्वदिष्टः कारकाणां प्रवृत्तिविशेषः सामान्यप्रवृत्तेर्भिन्नः कश्चिदिति। दृष्टान्तः—**भुजिविशेषव**दिति। तद्व्याख्यानम्—**यथा भुजावे**वेत्यादि यावत् **प्रकारमात्रं भिद्यत** इति। अशन-पान-खाद्य-स्वाद्यादिद्रव्यभेदेन

---

१ ↑ ↑ एतदन्तर्गतः पाठो भा० प्रतौ नास्ति॥ २ **निस्तिष्ठति** य०॥ ३ °**वृत्तिस्थि**° प्र०॥ ४ **चा** भा० वि०॥ ५ °**मद्धा** य०॥ ६ दृश्यतां पृ० १२६ पं० २४॥ ७ °**मापायांतर्भाविदयिष्य**° य०॥ ८ **स च एचान्त**° भा०। ( स एव चान्त°? )॥ ९ **भव भे**° वि०। **भाव भे**° डे० लीं०। ( भवेत्? )॥ १० °**विशेषो** य०॥ ११ **भेदानुभ्युतत्वात्** भा०। **भेदानुभ्युपगतत्वात्** य०॥

**कालभावभेदेन प्रकारमात्रं भिद्यते एवं गतिस्थित्योरस्तिम्रियत्योर्वा । सर्वैव वासौ .........क्रियैव ।**

**एवं च भुजिगतिस्थितिपक्त्यादीनामपि तथा तथा सर्वभावव्यापिता, भाषतिजानातिश्वेतत्यादीनामपि पूर्वोत्तरव्यक्त्यव्यक्तिभवनैकत्वात् ।**

---

कांसपात्र्यां पाणौ शरावे वेति क्षेत्रभेदेन प्रथमद्वितीयग्रासादिना दिनरा[1]त्र्यादिना [2]सायंप्रातराशादिना वा कालभेदेन तीव्रमन्दक्षुधितग्लानौषध[3]स्वस्वरसायनादिभावेन च प्रकारमात्रेणैव भिद्यते न भुजित्वेन । न हि तेषु प्रकारभिन्नेषु कश्चिदभुजिर्भवति अक्रिया वा । किन्तु सर्वोऽप्यसौ भुजिरूपानतिक्रमाद् भुजिरेव, अथ च परस्परतः प्रकारमात्रभेदाद् भिद्यन्ते तथा सामान्यप्रवृत्तिरेव प्रवृत्तिविशेषः, वर्ततेरस्त्यर्थस्य सर्वगतिस्थित्यादिभेदात्मकत्वात् । **एवं गतिस्थित्योरस्तिम्रियत्योर्वे**ति विरोधिभावप्रादुर्भावोऽपि सामान्यभवनस्यैव प्रकारमात्रभिन्नस्य विस्पन्दितमिति तन्निगमयति – **सर्वैव वाऽसा**विति यावत् **क्रियैव** । तस्मादस्ति-भवति- २८९-२
विद्यति-पद्यति-वर्ततीनामेकार्थत्वात् प्रकारभेदाच्च [4]ततो नासामान्यः प्रवृत्तिविशेषो भुजिसामान्यमात्रप्रकारभिन्नभुजिविशेषवदिति ।

किञ्चान्यत्, **एवं चे**त्यादि । न केवलमस्त्यादय एव सर्वधात्वर्थव्यापित्वात् सामान्यप्रवृत्तिमात्रत्वभावनायां निदर्शनम्, किं तर्हि ? **भुजिगतिस्थितिपक्त्यादीनामपि तथा तथा सर्वभावव्यापिता,** भुक्तेस्तावद् भु[5]ंजेरभ्यवहरणार्थस्य उपयोगपर्यायत्वात् उपयोगस्यापत्त्यर्थत्वात् आपत्तेः परिणामार्थत्वात् परिणामस्य वृत्तिसत्ताभवनार्थत्वात् । तथा गतिरपि सर्वभावव्यापिनी गमन-चलन-स्पन्दन-परिणामाद्येकार्थत्वात्, द्रवति द्रोष्यति दुद्रावेति द्रुः, द्रोर्विकारो द्रव्यम्, द्रव्यं च भव्ये [ पा० ५।३।१०४ ], द्रव्यं सदैव गत्यात्मकं विपरिणामात्मकमित्यर्थः । आर्षेऽपि यथा – **परमाणुपोग्गले णं भंते ! किं एयति वेयति चलति फंदति खोभति खुभति तं तं भावं परिणमति ? हंता गोतमा ! तदेव जाव परिणमति** [ [6]भगवतीसू० ५।७।२१२ ] इति । स्थितिरपि तिष्ठत्यास्तेऽस्ति स्वरूपं न त्यजति परिणमति तथा तथा भवतीत्यर्थः । पचति-कृषति-लिखत्यादयः पक्त्यादयः, तेषामपि पक्त्यादीनामस्त्याद्यविशेषः पाकस्य क्रियाफलत्वात् क्रियायाश्च हेतुफलरूपाभिन्नपरिणतित्वात् 'पच्यते पचत्यात्मानं बीजमङ्कुरीभवति जायतेऽस्ति विपरिणमति' [7]इत्याद्येकार्थत्वात् । यथा [8]कृषि-विलि[9]खती तथात्मनः शिरां दर्शयति [10]तथा तथा सर्वभाववृत्तेः कण्डूयत [11]इत्याद्येकार्थम् । स्यान्मतम् – अस्तु भुज्यादीनां सर्वभावव्यापिता गतिस्थितिसत्ताविपरिणामाद्यनतिक्रमात्, पठि-हसि-विदि-श्विति-गड्यादीनां कथमिति चेत्, उच्यते – **भाषतिजानातिश्वेतत्यादीनामपि पूर्वोत्तरव्यक्त्यव्यक्तिभवनैकत्वात्** 'एवं च तथा तथा २९०-१

---

१ °रात्रा° प्र० ॥ २ **सायंप्रातराशादिना** य० प्रतिषु नास्ति ॥ ३ °**स्वस्वरेसायना**° य० । °**स्वरसायंना**° भा० ॥ ४ **ततोन्यसामान्यः** य० । **वतोन्यसामान्यः** भा० । ( ततोऽनन्यसामान्यः ? ) ॥ ५ "भुज पालनाभ्यवहारयोः" – **पा० धा०** १४५५ ॥ ६ "परमाणुपोग्गले णं भंते ! एयइ वेयइ जाव तं तं भावं परिणमइ ? गोयमा ! सिय एयइ वेयइ जाव परिणमइ, सिय णो एयइ जाव णो परिणमइ ।" इति **भ**गवतीसूत्रे पाठः ॥ ७ **इत्यादिदोषार्थं** य० । **इत्यादोषार्थत्वात्** भा० ॥ ८ "कृष विलेखने" – **पा० धा०** ९९० ॥ ९ °**खति** प्र० ॥ १० **तथा सर्वे**° भा० वि० रं० ॥ ११ **इति आद्येकार्थ्यम्** प्र० । ( इत्याद्यैकार्थ्यम् ? ) ॥

**यदप्यादिनैगमनयदर्शनमनवबुध्य पूर्वनयनिपाति स्थितिस्वरूपनिरूपणं क्रियते 'सा तु द्रव्यावस्थाविशेषो गतिवत् प्रतिपत्तव्या' इति अत्रापि यत्नप्रसाधितक्रियार्थान्तरत्वत्यागः अव्यक्तद्रव्यावस्थात्वात्। यत् तद् द्रव्यं ततोऽनन्या क्रिया, तदवस्थात्वात्, देवदत्तबालकुमारादिवत्। तथा चाभ्युपगमविरोधः।**

---

**सर्वभावव्यापिता'** इति वर्तते । **भाष व्यक्तायां वाचि** [ पा० धा० ६१२ ] **ज्ञा अवबोधने** [ पा० धा० १५०८ ] **श्विता वर्णे** [ पा० धा० ७४२ ] **गडि वदनैकदेशे** [ पा० धा० ६५,३६१ ] इत्येवमादीनां पूर्वोक्तपूर्वापरीभूतव्यक्त्यव्यक्तिलक्षणभवनैकत्वात् । एकमेव हि पूर्वापरीभूतं भवनं गतिस्थित्यादिवत् क्रियात्वादित्युक्तम् । तथा भाषत्यादीनामपि पूर्वापरीभूतैकभवनव्यक्त्यव्यक्तिलक्षणक्रियात्वानतिवृत्तेः सर्वभावव्यापितैव । पूर्वमभाषमाणो गच्छंस्तिष्ठन्नुदासीनो वा प[1]श्चाद् भाषते, तथा पश्यति जानाति इच्छति द्वेष्टि प्रयतते स्मरतीत्यादिषु तुल्यश्चर्चः । तस्मान्न काचिदपूर्वापरीभूता क्रियास्ति, क्रियात्वाच्च 'सर्वधात्वर्थाः सर्वधात्वर्थव्यापिनः' इति साधूक्तम् ।

एवं तावत् प्रवृत्तिसामान्यमेव क्रिया प्रवृत्तिविशेष इत्युक्तम्, अधुना लक्षणान्तरं परीक्ष्यम्, अत आह—**यदप्यादिनैगमे**त्यादि ।

**णेगेहिं मिणति माणेहिं णेगमो एस तस्स णेरुत्ती ।**
**संगहितपिंडितत्थं संगहवयणं समा[2]सेण ॥** [ आ[3]वनि० ]

इत्येवमादिनयलक्षणे द्रव्यक्रियात्मकद्वित्वा[4]द्यनेकधा गमो नैगम इति निरुक्त्ये[5]पेक्षया द्रव्यक्रियाद्वित्वात्मकवस्तुवाद आदिनैगमनयदर्शनम्, त्रित्वादिदर्शनानां द्वितीयादिनैगमत्वात् । एतद् **दर्शनमनवबुध्य पूर्वनयनिपाति** संग्रहनयं निपतितुं शीलं यस्य निरूपणस्य तदिदं **स्थितिस्वरूपनिरूपणं क्रियते** सङ्ग्रहनयदर्शनानुपाति । प्रथमाद् विधिभङ्गाद् व्यवहारनयादारातीया येऽतीताः पूर्वनयास्ते सङ्ग्रहनयभेदाः, तदनु-
१९०-२ पाति यदुत्तरं क्रियालक्षणं स्थित्युदाहरणद्वारेणोच्यते तत्स्वरूपनिरूपणाय तदविदितनयविषयविवेकैरेवोच्यते । कथं पुनस्तैः स्थितिस्वरूपनिरूपणं क्रियते ? उच्यते—**सा तु द्रव्यावस्थाविशेषो गतिवत् प्रतिपत्तव्या** इत्येवं निरूप्यते । यथा गतिर्द्रव्यस्यावस्थाविशेषो बालकुमारादिवद् द्रव्यादनन्या तथा स्थितिरिति । गतिस्थितिवच्च सर्वक्रिया इति । **अत्रापि** लक्षणान्तरे दोष उच्यते अविकल्पि[6]तै क इति चेत्, उच्यते—**यत्नप्रसाधितक्रियार्थान्तरत्वत्यागः**, प्राक् त्वया यत्नेन प्रसाधितमुक्तिवस्तुक्रियालक्षणाभिधानेन 'द्रव्यादर्थान्तरं क्रिया' इति तस्य त्यागो दोषः । किं कारणम् ? **अव्यक्तद्रव्यावस्थात्वात्**, इह ह्यवस्थाशब्देनाव्यक्ताः क्रमभाविनो बालकुमारादयो धर्मा द्रव्यस्यैव देवदत्तादेरंशा एवोच्यन्ते, ते चांशास्तदवयवत्वात् त[7]तोऽनन्ये । तस्मान्न ततोऽर्थान्तरमित्येतदापन्नम् । स चाभ्युपगतद्रव्यार्थान्तरभूतक्रियापदार्थत्यागो दोषः । एष प्रयोगेणैवोद्भाव्यते—**यत् तद् द्रव्यं ततोऽनन्ये**त्यादि गतार्थं याव**दभ्युपगमविरोध** इति ।

---

१ **पश्चाषते** प्र० ॥ २ °**सेणं** पा० वि० ॥ ३ "णेगेहिं माणेहिं मिणइत्ती णेगमस्स नेरुत्ती । सेसाणं पि णयाणं लक्खणमिणमो सुणह वोच्छं ॥ २२२ ॥ संगहियपिंडियत्थं संगहवयणं समासओ बिंति ।······॥ २२३ ॥" इति **आवश्यकनिर्युक्तौ** पाठः ॥ ४ °**द्यनेकमा गमो** प्र० ॥ ५ °**क्त्यापे**° प्र० ॥ ६ भा० रं० विनान्यत्र–°**ल्पितैक इति** ॥ ७ **ततो नान्ये** य० ॥

**एवमभिधानात्तु अव्युत्पत्तौ व्युत्पत्तौ वा स्ववचनादिविरोधः। तत्र तावदव्युत्पत्तौ अवस्थायास्ततोऽन्यत्वम्, तत्स्वादिविषयशब्दवाच्यत्वात्, देवदत्ताश्ववत्। शिलापुत्रकशरीरवन्नेति चेत्, न, अवस्थाशरीरशब्दप्रयोगानर्थक्यात् अत्रापि शरीरावस्थाक्रियात्वात्।**

**व्युत्पत्तावपि कर्तरि षष्ठीयं 'द्रव्यस्यावस्था' इति, सा यद्विषयं द्रव्यस्य कर्तृत्वं तामात्मनोऽक्रियात्वात् तदन्यगतिविचलनप्रतिबन्धात्मिकामवस्थां दर्शयति।**

---

**एवमभिधानात्त्व[1]व्युत्पत्तौ व्युत्पत्तौ वे**त्यादि । अत्र 'द्रव्यावस्था' इत्यस्य शब्दस्यार्थद्वयकल्पना स्यात्–राजवृक्षादिशब्दवद[2]व्युत्पत्तिर्व्युत्पत्तिर्वा राजपुरुषशब्दवत् । उभयथापि **स्ववचनविरोधः** । तद्व्याचष्टे–**तत्र तावदव्युत्पत्तौ अवस्थायास्ततोऽन्यत्वम्**, द्रव्यादन्यावस्था, **तत्स्वा[3]दिविषयशब्दवाच्यत्वात्**, तस्य स्वस्वामिसम्बन्धादि[4]षष्ठीविषयेणावस्थाशब्देन वाच्यत्वं द्रव्यस्य, इतरथा द्रव्यशब्दोऽवस्थाशब्दो वानर्थकः स्यात्, इ[5]ह यद्विशेषवाचिनोऽपि शब्दस्य वाच्यार्थोऽन्य इत्यवश्यमभ्युपगन्तव्यम्, **देवदत्ताश्ववत्**, यथा देवदत्ताश्व इत्युक्ते देवदत्तस्य स्वमश्वः सोऽस्य स्वामीति [6]तेन स्वा[7]मिविषयेण २९१-१ 'अश्व'शब्देन तस्य देवदत्तस्य वाच्यत्वात् ततोऽन्यत्वं दृष्टमेवं द्रव्यावस्थेति ।

**शिलापुत्रकशरीरवन्नेति चेत्** । स्यान्मतम्–यथा 'शिलापुत्रकस्य शरीरम्' इत्यत्र शिलापुत्रकादनन्यस्मिन्नपि शरीरे स्वादिविषयशब्दवाच्यत्वदर्शनादनैकान्तिकतेति । एतच्च **न, अवस्थाशरीरशब्दप्रयोगा[8]नर्थक्यात्**, यद्यनन्यच्छिलापु[9]त्रकाच्छिलापुत्रकशरीरं 'शिलापुत्रक एव शरीरं शरीरमेव शिलापुत्रकः' इति घटकुटशब्दवत् पर्यायमात्रत्वात् प्रतीतपदार्थकं श्रोतारं प्रति अन्यतरप्रयोगानर्थक्यं स्याद् गतार्थत्वात् । तथा द्रव्यमेवावस्था द्रव्यावस्थेत्यन्यतरानर्थक्यम् । तस्मादन्यतरानर्थक्याद् नेदमुपपन्नम्, शिलापुत्रकशरीरवद् नानैकान्तिकतेति । किञ्चान्यत्, **अत्रापि शरीरावस्थाक्रियात्वा**दयुक्तम्, नन्वस्माभिरुपपादितम्–द्रव्यक्रियात्मकं सर्ववस्त्विति । तस्मादत्रापि शिलापुत्रकेण शीर्यते, शरारुत्वाच्छरीरमिति शरारु भवति, तेन शरारुणा भूयत इति द्रव्यक्रियाभिधानं नातिवर्तते । तथा च द्रव्यावस्था द्रव्यमवतिष्ठते द्रव्येणावस्थीयते इ[10]त्यवस्थानस्य क्रियात्वानतिवृत्तेस्ततोऽन्यत्वमेव । एवं तावदव्युत्पत्तौ ।

**व्युत्पत्तावपि** सामासिकपदत्वात् समासस्य च षष्ठीसमासत्वात् षष्ठ्याश्च कर्तरि विहितत्वात् **कर्तरि तु षष्ठीयं** 'द्रव्यस्यावस्था' इति द्रव्यमवतिष्ठत इत्यादि प्राग्वत् । **सा यद्विषय**मित्यादि यावत् **तदन्यगतिविचलनप्रतिबन्धात्मिकामवस्थां दर्शयति** । सा षष्ठी **यद्विषयं द्रव्यस्य कर्तृत्वं** यां क्रियां साधयत् साधनं कर्तृ भवति तद् द्रव्यं ततोऽर्थान्तरभूतां तामवस्थानक्रियां दर्शयतीति सम्भन्त्स्यते । किं कारणम्? **आत्मनोऽक्रियात्वात्** तस्य द्रव्यस्य स्वयमक्रियात्वात्, क्रियामन्तरेण कर्तुः २९१-२ कर्तृत्वाभावात् कर्तरि ष[11]ष्ठी न स्यात्, ततस्तस्माद् द्रव्या[12]दन्यत्र गतिरन्यस्य गतिर्द्रव्याद् **विचलनं**

---

१ °व्युत्पत्तौ वे° प्र० ॥ २ °व्युत्पत्तिर्वा प्र० ॥ ३ °दितिविष° प्र० ॥ ४ °षष्ठ्यविषयेणा° भा० । °षष्ठ्यविषयिणो° य० ॥ ५ इह द्विशेष° भा० । ( इह विशेष° ? इह तद्विशेष° ? ) ॥ ६ तेन विषतेन स्वामि° य० ॥ ७ ( स्वादिविषयेण ? ) ॥ ८ °गादान° भा० ॥ ९ °पुत्रकाच्छिलापुत्रकशरीरं शरीरमेव य० । °पुत्रकशरीरं शिलापुत्रक एव शरीरं शरीरमेव भा० ॥ १० इति वस्था° प्र० ॥ ११ षष्ठी स्यात् प्र० ॥ २२ °दन्यामन्यत्र य० ॥

**त्वन्मनोरथानुवृत्तेस्तु बलादेव अत्याज्याभिमततत्त्वद्रव्यशब्दार्थवशाद् द्रव्यादर्थान्तरभूताया गतिस्थित्यादिक्रियाया आपत्तिः, 'भवति भवनं वा द्रव्यम्' इति भव्यार्थत्वात् प्रकृतिप्रत्ययार्थव्युत्पत्तेर्द्रव्यक्रिययोः सिद्धिः कर्तृभावनानात्वात् ।**

**यत् पुनरेतदुक्तम् 'अविशिष्टदेशसंयोगा वा स्थितिः' इति तन्न युक्तं 'वा'शब्दवर्ज्यम्, द्वाभ्यामविरोधात् ।**

---

परिस्पन्द[1]परिणतिः पूर्वस्या औदासीन्यावस्थायाः प्रच्युतिः क्रियान्तरत्वावस्थातो वा । तयोरन्यगतिविचलनयोः प्रतिबन्ध आत्माऽस्या अवस्थानक्रियायाः सो[2]न्यगतिविचलनप्रतिबन्धात्मिका, तां दर्शयति षष्ठीति । अथवा तदन्यगतिरिति तस्मिंश्चान्यस्मिंश्च नियमेन गतिर्विचलनम्, शेषं पूर्ववत् । पूर्वस्मिन् व्याख्याने भेदोऽनयोः – गतिर्देशान्तरप्राप्तिः, चलनं स्वक्षेत्रेऽपि व्यापृततेति । इह पुनरभेद इति विशेषः । तस्माद् व्युत्पत्तावव्युत्पत्तौ च यदि द्रव्यं ततः 'अवस्था' इति विरुध्यते । अथावस्था ततः 'द्रव्यम्' इति विरुध्यते । **आदि**ग्रहणाद् लोके तथा दृष्टत्वात् प्रत्यक्षविरोधः । तथानुमेयत्वादनुमानविरोधः । तद्रूढेश्च रूढिविरोधः । एवं 'द्रव्यावस्थाविशेषः' इति क्रियालक्षणमभ्युपगमादिविरोधादयुक्तम् । का[4]लसाधनयोगी भाव इत्येतयोः क्रा[5]दिष्वव्याप्तेरलक्षणमिति तैरेव निराकृतमिति ।

**त्वन्मनोरथानुवृत्तेस्त्वि**त्यादि । 'द्रव्यस्यावस्थामात्रं क्रिया, नार्थान्तरम्' इत्येष **साङ्ख्यमतानुवर्तिनो भवतः** परप्रत्ययो मनोरथः स नोपपद्यते, सर्वत्र द्रव्यक्रियात्मकभावापत्तिभावादुक्तवत् । अथापि त्वन्मनोरथमनुवृत्य द्रव्यमात्रदर्शनाभिमुखीभूयापि अवस्थाशब्दं श्रूयमाणमपि उज्झित्वा यद्यपि त्वदुपर्यनुकम्पाद्रवीकृतचेतसो न किञ्चिद् ब्रूमः, तथापि **बलादेवो**पपत्तेरेव **अत्याज्याभिमततत्त्वद्रव्यशब्दार्थ-**
२९२-१ **वशात्**, अत्यागार्हमभिमतं तत्त्वं तव **साङ्ख्यस्य** च द्रव्यमेवार्थः, तदभिधायिनो द्रव्यशब्दस्य वशात् तदर्थवशाच्च पुनरपि सारं सारं **द्रव्यादर्थान्तरभूताया गतिस्थित्यादिक्रियाया आपत्तिः**, सा क्रियापन्ना, कस्मात्? **भवति भवनं वा द्रव्यमिति भव्यार्थत्वात्**, द्रव्यं च भव्ये [ पा० ५।३।१०४ ], भव्यशब्दश्च कर्तरि भावे वास्तु, तथा द्रव्यशब्दोऽपि । तत्र द्रव्यशब्दस्य भव्यार्थत्वात् प्रकृतिप्रत्ययार्थव्युत्पत्तिरवश्यम्भाविनी, ततश्च **प्रकृतिप्रत्ययार्थव्युत्पत्तेर्द्रव्यक्रिययोः सिद्धिः**, प्रकृत्यर्थस्य क्रियात्वात् प्रत्ययार्थस्य द्रव्यत्वात् । कथं व्युत्पत्तिरिति चेत्, उच्यते – साध्यसाधनभेदात्, यद् भूयते सा क्रिया, यद् भवति तद् द्रव्यम्, यत् तद् भवता वस्तुना भूयते स प्रकृत्यर्थो भावः, यत् तद् भवति तत् कर्तृ, तस्मात् **कर्तृभावनानात्वाद्** द्रव्यक्रियानानात्वात् स्यात्, नान्यथा । तस्माद् नयोत्थानप्रकृताद् द्रव्यशब्दार्थवशाद् भव्यभवत्यादिशब्दवशाच्च बलादेव द्वित्वसिद्धिरिति साधूक्तम् ।

**यत् पुनरेतदुक्तम् 'अविशिष्टदेशसंयोगा वा स्थितिः'** इति लक्षणं **तन्न युक्तं 'वा'शब्दवर्ज्यम्**[6], तत्रापि 'वा'शब्दस्यानर्थक्यं विकल्पार्थासम्भवात् । कस्मात् पुनस्तदयुक्तम्? **द्वाभ्याम-**

---

१ °न्दः प° प्र० । दृश्यतां पृ० ४०६ पं० ७ ॥ २ ( सा तदन्यगति° ? ) ॥ ३ दृश्यतां पृ० ४०९ पं० १ ॥ ४ 'भूतभविष्यद्वर्तमानादिकाल्योगी भावः, कर्तृकर्मादिसाधनयोगी भावः' इति लक्षणद्वयमत्र क्रियाया विवक्षितम् ॥ ५ **कादि**° प्र० ॥ ६ °**वर्च्यम्** य० । °**वर्जम्** भा० ॥

**यदपि च द्वितीयं विशेषग्रहणप्रयोजनमभिधीयते – सर्वदा सर्वभावानां प्रवृत्तिसमन्वयाद् 'देवदत्तः' इत्यपि नाप्रवृत्तिकं वस्तु, सर्वभेदसम्बन्धानुगुण्यात्तु नायं विशेषः तस्मान्न क्रिया इत्येवमर्थं विशेषग्रहणम्। इदमपि त्यक्तद्रव्यार्थोत्थानम्। यथा तत्र प्रवृत्तिसामान्यनिवृत्त्यर्थे विशेषग्रहणे तथेहापि देवदत्तादिधातुत्वनिवृत्त्यर्थे**

---

**विरोधात्,** 'क्रिया द्रव्यादर्थान्तरम्' इत्यनेन दर्शनेनाविरोधात्, उक्तिवस्तुक्रियालक्षणेन द्रव्यक्रियाश्रयेण च प्रागुक्तेन च न्यायेन चाविरोधादिति।

एवं तावत् प्रवृत्तिसामान्यक्रियात्वनिवृत्त्यर्थविशेषग्रहणप्रयोजने दोषाभिधानं कृतम्, अधुनेदमपि विशेषग्रहणप्रयोजनं दूष्यते – **यदपि च द्वितीयं विशेषग्रहणप्रयोजनमभिधीयते सर्वदे**त्यादि। २९२-२
'सर्वदा' इति प्रवृत्त्यनिवृत्तिं दर्शयति। **सर्वभावाना**मिति व्याप्तिः। कुतः? **प्रवृत्तिसमन्वया**द्धेतोः **देवदत्त इत्यपि नाप्रवृत्तिकं** नाक्रियं **वस्तु** तेन शब्देनाभिधीयते, किं तर्हि? सप्रवृत्तिकमेवोच्यते, यथा पचत्यादीनां क्रियावचनत्वमेवं देवदत्तादीनां द्रव्यवाचित्वाभिमतानामपि वाच्यस्यार्थस्य प्रवृत्त्या सत्तया गत्यादिसर्वभवनात्मिकया समन्वितत्वम्। ततः पचत्यादिवद् देवदत्तादयोऽपि शब्दाः क्रियावचनाः, तस्मात् **क्रियावचनो धातुः** [ पा० वा० १।३।१ ] इति धातुसंज्ञास्तेऽपि स्युः, विशेषग्रहणसामर्थ्यात् पुनर्विशेषो न भवतीति निवर्त्यते। कस्मात् पुनर्देवदत्तादयो विशेषा न भवन्तीत्युच्यते – **सर्वभेदसम्बन्धानुगुण्यात्[1] तु नायं विशेषः,** सर्वैर्हसिपठिगम्यादिभिर्भेदैर्देवदत्तभवनप्रवृत्तेः सम्बन्धेनानुगुणत्वात् प्रवृत्तिसामान्यमेवेदं भवनवत् सत्यपि भवद्भवनभावविशेषे **तु**शब्दस्य विशेषार्थत्वात्। **तस्माद् न क्रिये**ति देवदत्तादेरक्रियात्वमुपसंहरति **इति**शब्दस्य समाप्त्यर्थत्वात्, **एवमर्थं विशेषग्रहण**मिति प्रकृतोपसंहारः, प्रवृत्तिविशेषः क्रिया न प्रवृत्तिसामान्यमिति न भवनमात्रं नापि देवदत्त इत्युपसंहारार्थः। अस्यापि विशेषग्रहणस्य सदोषत्वमुच्यते – **इदमपि त्यक्तद्रव्यार्थोत्थानम्,** इदं हि विशेषग्रहणप्रयोजनव्याख्यानमुत्थान एव द्रव्यार्थत्यागं कुरुते। **अपि**शब्दात् प्रागुक्तभवनसामान्यक्रियात्वनिवृत्त्यर्थं विशेषग्रहणमन्ते क्रियामेव त्यजतीति स्मारयति[2]। **'सर्वदा सर्वभावानां प्रवृत्तिसमन्वयात्'** इति हेतुवचनेन **'देवदत्त इति नाप्रवृत्तिकम्'** इति नामवाच्यार्थस्वरूपवचनेन च प्रवृत्तिमात्रमेवेदं न द्रव्यं नामेति द्रव्यार्थस्य प्रागभ्युपगतस्य त्यागः कृतो भवति अनेनापि विशेषग्रहणप्रयोजनवचनेन द्वितीयेनेति।

२९३-१
न केवलं द्रव्यार्थत्याग एव दोषः, किं तर्हि? प्राग्व्याख्यात[3]विशेषग्रहणप्रयोजनतुल्यदोषानुबन्धं चेदम्। कथमिति चेत्, उच्यते – **यथा तत्रे**त्यादि ग्रन्थ उपसंहृते दोषासक्त्या चोद्यमेव उत्तरत्वेन समर्थयति। **भाष्यकारेण** कारकवत्याः फलोद्देशिन्याः क्रियात्वं प्रतिपाद्य उपसंहृतं त[4]स्मात् **प्रवृत्तिविशेषः क्रिया, न प्रवृत्तिसामान्यमिति,** तत्र दोष आस[5]ज्यते – यदि प्रवृत्तिविशेषः क्रिया 'प्रवर्तते, ईहते, चेष्टते' इत्यादीनां धातुसंज्ञा न प्राप्नोति, क्रियावचनानामेव धातुत्वात् तेषां [6]चाक्रियात्वात् प्रवृत्तिविशेषक्रियात्वादित्येष दोषो **यथा तत्र प्रवृत्तिसामान्यनिवृत्त्यर्थे विशेषग्रहणे तथेहापि देवदत्तादिधातुत्वनिवृत्त्यर्थे**

---

१ "सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः। तदर्थान्तरसंसर्गाद् भजते भेदरूपताम्॥" – **वाक्यप०** २।४४॥
२ °**यतीति** य०॥ ३ **प्रत्याख्यात**° य०॥ ४ दृश्यतां पृ० ४०० पं० ३॥ ५ °**संज्य**° प्र०॥ ६ **वाक्रियत्वात्** प्र०॥

विशेषग्रहणे वृतादीनां धातुसंज्ञा नैव प्राप्नोति अक्रियावचनत्वाद् देवदत्तवत्, अस्वशब्दोपादानसाध्यभावादिलक्षणवचनं चानर्थकं स्यात्। यथा च तत्रोच्यते— नैष दोषः, विशेष इति भवतः क्व सम्प्रत्ययः? य उपादीयमानोऽन्यं निवर्तयति। यद्येवं वृतादयोऽप्युपादीयमाना विशेषान् निवर्तयन्ति, तथा चोक्तम्— सामान्यमपि यथा विशेषस्तद्वत् [पा० म० भा० २।२।२४], ततश्चैषां सिद्धा धातुसंज्ञा। एवमिहापि प्रत्यु-

---

विशेषग्रहणे वृ[1]तादीनां धातुसंज्ञा नैव प्राप्नोति। किं कारणम्? अक्रियावचनत्वाद् देवदत्तवत्, तदर्थस्याक्रियात्वादक्रियावचनत्वम्, तदर्थस्याक्रियात्वं सर्वभेदसम्बन्धानुगुण्यात्। स वा देवदत्तः क्रिया स्यात् सर्वभेदसम्बन्धानुगुणत्वात् वृतादिवत्, अनिष्टं[2] चैतदिति। किञ्चान्यत्, प्रवृत्तिसामान्यनिवृत्त्यर्थे देवदत्तादिद्रव्यनिवृत्त्यर्थे च विशेषग्रहणे द्विधापि अस्वशब्दोपादानसाध्यभावादिलक्षण[3]वचनं चानर्थकं स्यात्। यदुक्तम् 'अस्व[4]शब्दोपादानसाध्यभावो भावः' इति भावलक्षणम्, भावादिग्रहणात 'स्व[5]शब्दोपादानसिद्धभावं सत्त्वम्' इति द्रव्यलक्षणमुक्तित एव पृथगिति, वस्तुतोऽपि लिङ्गसङ्ख्यादिमदलिङ्गसं[6]ख्यत्वं च द्वयोः पृथक्त्वं तथा त्रिकालात्रिकालविषयत्वं भूताभूतभेद इत्यादि पृथक्त्वलक्षणवचनमनर्थकं द्वयोरपि क्रियात्वादिति।

२९३-२ **यथा च तत्रोच्यते नैष दोष** इत्यादि। एवं दोषेऽभिहिते स्यान्मतं प्रवृत्तिसामान्यनिवृत्त्यर्थविशेषग्रहणप्रयोजनदोषं परिहरामीति **विशेष इति भवतः क्व सम्प्रत्यय** इति प्रश्नोपक्रमं दोषवादिनैव परिहारमभिधापयिष्यतस्ते, दोषवादी किल ब्रूयात्—**य उपादीयमानोऽन्यं निवर्तयती**ति। परो ब्रूयात्—**यद्येवं वृतादयोऽप्युपादीयमाना विशेषान् निवर्तयन्ती**ति, तर्हि गच्छत्यादयो विशेषा निवर्त्यन्ते न गच्छति न शेते न भुङ्क्ते वर्तत एव अस्ति भवति विद्यत एव केवलमिति। तस्मादुपादीयमाना गमनादीन् विशेषान् निवर्तयन्ति वृ[7]तादयः, तिष्ठत्यादिवत्। **तथा चोक्तं** भाष्यकारेण—**सामान्यमपि यथा विशेषस्तद्व**दिति ज्ञापकमिदम्, इति वर्तत्यादिर्विशेष एव उपादीयमानत्वे विशेषनिवृत्तिहेतुत्वात तिष्ठत्यादिनिवृत्तिहेतुगच्छत्यादिवत्। **ततश्चैषां सिद्धा धातुसंज्ञा** वृतादीनामिति यथैष सामान्यप्रवृत्तिनिवृत्त्यर्थे विशेषग्रहणे परिहार **एवमिहापि प्रत्युच्येत** द्रव्यनिवृत्त्यर्थेऽपि विशेषग्रहणे परिहार उ[8]च्येत प्रत्युच्येत। **सर्वदा सर्वभावानां प्र[9]वृत्तिसमन्वयाद्** 'देवदत्तः' इत्यपि नाप्रवृत्तिकं वस्तु, तस्मात् तन्निवृत्त्यर्थं **सर्वभेदसम्बन्धानुगुण्यात् तु नायं विशेषः** इत्येतदर्थेऽपि विशेषग्रहणे देवदत्तस्य क्रियात्वं स्यात्, वृतादीनां तद्वदक्रियत्वां[10]द्वा धातुसंज्ञा मा भूत्, स्वशब्दोपादानसिद्धतादिवचनानर्थक्यं [11]चे[त्या]दिदोषापादने कृते स एव परिहार उच्यते त्वया—**विशेष[12] इति भवतः क्व सम्प्रत्ययः?** इत्यादि यावत् **सिद्धा धातुसंज्ञा**।

---

१ **वृत्तादीनां** भा०। **वृत्तानांदी** य० ॥ २ °**ष्टश्चै**° प्र० ॥ ३ °**णमुक्तिवचनं** डे० रं० ॥ ४ दृश्यतां पृ० ३८३ पं० २ ॥ ५ दृश्यतां पृ० ३८४ पं० १ ॥ ६ °**सङ्ख्यत्वे च द्वयोः पृथक्त्वे** प्र० ॥ ७ **वृत्ता**° प्र० ॥ ८ °**च्यते** य० ॥ ९ दृश्यतां पृ० ४११ पं० २ ॥ १० °**त्वाद्वा संज्ञा** भा०। °**त्वा संज्ञा** य० ॥ ११ **चेदि दोषा**° प्र०। अत्र **चेति दोषा**° इत्यपि पाठः स्यात् ॥ १२ दृश्यतां पृ० ४१२ पं० ३ ॥

**च्येत। एवं चोच्यमाने नन्वसमद्धृदय एव दृष्टम्, नन्वस्माभिरप्यभिहितं प्रवृत्तिरेव प्रवृत्तिविशेष इति। [1]एवं च कृत्वा प्रवृत्तिमात्रस्य……अनर्थकमुभयोरपि व्याख्याविकल्पयोः। न चाफलमेव, अनिष्टकृदपि। एवं देवदत्तस्य क्रियात्वं स्यात्, अन्यनिवर्तनप्रवृत्तिविशेषत्वात्, पचादिवृतादिवत्। वृतादयोऽप्यक्रियाः, तच्छब्दानामधातुसंज्ञा च स्यात्, सर्वभेदसम्बन्धानुगुणविशेषत्वात्, देवदत्तवदेव।**

**यत् पुनरुच्यते न वयं वस्तुन्यसद्भावतां निवृत्तिं ब्रूमः, किं तर्हि? [2]पचति…**

---

एवं परिहारद्वयेऽपि [3]समानमुत्तरमिदमुच्यते—**एवं चोच्यमाने नन्वसमद्धृदय एव दृष्टम्।** 'ननु' इत्यनुज्ञापने, अनुज्ञातं त्वयैतद् यदस्मद्धृदयक्षेत्र उप्तस्य दर्शनबीजस्य त्वद्वचनसलिलसेकेन फलमभिव्यक्तम्। तद्विवृणोति स्मारयन्—**नन्वस्माभिरप्यभिहितं 'प्रवृत्तिरेव प्रवृत्तिविशेषः'** इति, यदुच्यते २९४-१
[4]वृतादिसामान्यमुपादीयमानं गमनादिविशेषं निवर्तयतीति तद्युज्येत यदि वृतादिसामान्यव्यतिरेकेण गमनादिविशेषः स्यात्, 'स तु सामान्यमेव' इत्युक्तम्। तस्माद् न सामान्यं विशेषाभावादुपादीयमानं विशेषान् निवर्तयितुमर्हति खपुष्पादिविशेषानिव। अतः प्रवृत्तिविशेषत्वाभावादुभयत्र परिहारे विशेषग्रह[5]णानर्थक्य-देवदत्तक्रियात्व-वृताद्यक्रियात्वदोषास्तदवस्था एवेति। तदुपसंहरति—**एवं च कृत्वा प्रवृत्तिमात्रस्ये**त्यादि गतार्थं यावद**नर्थकमुभयोरपि व्याख्याविकल्पयो**रिति।

एवं तावद् विशेषग्रहणमनर्थकम्, न केवलमनर्थकमेव, किं तर्हि? अनर्थार्थमपीत्यत आह—**न चाफलमेव, अनिष्टकृदपी**ति। तदनिष्टकृत्त्वं साधनेनैव भाव्यते—**एवं देवदत्तस्य क्रियात्वं स्यात्, अन्यनिवर्तनप्रवृत्तिविशेषत्वात् पचादिवृतादिव**दिति, प्रवृत्तिविशेषत्वमन्यत्वं तन्निवर्तनं चेति द्रव्यादन्यस्य प्रवृत्तिसामान्यव्यतिरिक्तस्यार्थस्याभा[6]वादेवायुक्तम्, अभ्युपगम्यापि दोषः—देवदत्तः क्रिया स्यात्, अन्यनिवर्तनत्वे सति विशेषप्रवृत्तित्वात्, स गच्छत्यादिविशेषनिवर्तनो यज्ञदत्तादिविशेषनिवर्तनश्च सामान्यत्वात्, उपादीयमानत्वे सति अन्यनिवर्तनत्वात् प्रवृत्तिविशेषश्च। ततश्च पचत्यादिवद् वर्तत्यादिवच्च क्रिया, क्रियात्वात् तद्वाचिनः शब्दस्य धातुसंज्ञा, पूर्वप्रक्रान्तन्यायक्रमेण पच्यादिवद् [7]वृत्यादयः, तद्वद् देवदत्तादय इति सर्वं क्रियैवेत्यापन्नम्। अनिष्टं चैतदावयोरिति। येऽप्यमी **वृतादयस्तेऽप्यक्रियाः, तच्छब्दानामधातुसंज्ञे**त्यादि, **सर्वभेदसम्बन्धानुगुणविशेषत्वाद् देवदत्तवदेव**। पचादीनां च गमनादिसर्वधात्वर्थ- २९४-२
व्यापित्वस्य प्रागुपपादितत्वात् सिद्धहेतुत्वात् साधीयः साधनमिदमपि, **च**शब्दसूचितत्वादनन्तरोदाहृतद्विविधक्रि[8]यावाचिशब्दप्रक्षतत्वाच्च सर्वनामशब्दता च स्यात्।

**[9]यत् पुन**रित्यादि याव**दयं च धर्मो वृतादीनामप्यविशिष्ट** इति। 'पचादिविशेषनिवर्तकत्वाद् वृतादयो धातुसंज्ञा भवन्ति' इत्युक्ते परस्याशङ्का स्यात् 'नैव निवर्तयन्ति पचादीन् वृतादयः, विरोधाभावश्च [10]वृताद्यन्तर्भावात् पचादीनाम्, अतो विशेषनिवर्तकत्वाभावाद् न धातुसंज्ञा वृतादयः स्युः' इत्या-

---

१ 'एवं च कृत्वा प्रवृत्तिमात्रस्य प्रवृत्तिविशेषत्वाद् विशेषग्रहणमनर्थकमुभयोरपि व्याख्याविकल्पयोः।' इत्याशयको मूलपाठोऽत्र स्यात्॥ २ 'पचति' इत्युक्ते पचतिशब्दः क्रियान्तरनिवृत्तिविज्ञानमादधाति, अयं च धर्मो वृतादीनामप्यविशिष्टः।' इत्याशयकोऽत्र मूलपाठः सम्भाव्यते॥ ३ **समानसिदमुत्तरसिद°** य०॥ ४ **वृत्तादि°** प्र०॥ ५ **°णार्थक्य°** प्र०॥ ६ **°वादेवेत्युक्तम्** प्र०॥ ७ (वृतादयः?)॥ ८ **°याकविशब्द°** प्र०॥ ९ **यत्र पुन°** प्र०॥ १० **वृताद्यंच**(द्यंश ?द्यंग ?)**भावात्** प्र०॥

**अयं च धर्मो वृतादीनामप्यविशिष्टः। अत्र ब्रूमः – वस्तुनः प्रवृत्तौ................ वैधर्म्येण।**

**एवमयं स उभयनयः। नैगमदेशत्वाद्द्रव्यार्थोऽयम्। द्रव्यमपि भावसाधनम्।**

---

शङ्क्य तत्प्रतिसमाधानं **पुनरुच्यते – न वयं वस्तुन्यसहभावतां निवृत्तिं ब्रूमः,** निवृत्तिरत्रास्माभिर्नार्थधर्मप्रकल्पिता विवक्षिता, किं तर्हि ? शब्दधर्मप्रकल्पिता विवक्षिता, अर्थगता हि निवृत्तिरसहभावजनिता घटपटादिवदेकत्रासम्भवात्, शब्दगता तु विज्ञानप्रवृत्तिनिवृत्तिमात्रकृता सा, देवदत्ते सन्निहितसत्ताद्रव्यत्वगतिस्थितिवृत्त्यवृत्त्यादिसर्वधर्मसम्बन्धिन्यपि 'गच्छति देवदत्तः' इत्युक्ते 'तिष्ठति आस्ते शेते' इत्यादिक्रियाकलापं निवर्त्य देवदत्तं 'गच्छति'शब्दो गमनेनैव सम्बन्धयति तद्विषयैकविज्ञानाधानहेतुत्वात्, न तथा वस्तुनि[2] निवृत्तिः सम्भवति सततसन्निहितसर्वधर्मात्मकत्वाद् देवदत्तस्य। तदुदाहरति – **किं तर्हि ? पचत्यादि** गतार्थम्, उदाहृतार्थसंवादी[3] दार्ष्टान्तिकोऽर्थः — **अयं च धर्मो वृतादीनामप्यविशिष्टः,** 'वर्तते, ईहते, चेष्टते' इत्यादयोऽपि शब्दाः क्रियान्तरनिवृत्तिविज्ञानाधानधर्मिणो न वस्तुगतान् धर्मान् निवर्तयितु-
२५५-१ मलम्, शब्दानां बुद्धिप्रवृत्तिनिवृत्तिक्रियायां प्रभुत्वाद् वस्तुप्रवृत्तिनिवृत्त्योरप्रवृत्तत्वादिति[4]।

**अत्र ब्रूमः — वस्तुनः प्रवृत्ता**वित्यादि यावद् **वैधर्म्येणे**ति। अवसितप्रयोजनमिदं वचः, त्वयैव वस्तुप्रवृत्तेः सर्वप्रवृत्तिविशेषसहिताया एवाभ्यनुज्ञातत्वाद्[5] भावितत्वाच्च, सम्भावनैव[6] हि न, वस्तुप्रवृत्तिः सर्वप्रवृत्तिविशेषात्मिकेत्यतीतविचारेषु विस्तरेण चरितार्थमेतत्। कथं ? विशेषवान् वाग्व्यवहारो विशेषान्तरप्रवृत्तिनिवृत्तिविषयो न वस्तुन्यत्यन्तनिर्भेदात्मके प्रभवति इति भावयता भवतैव सुभाषितत्वात् किमस्माभिर्वाच्यं वृतादीनां पचादीनां वा धातुसंज्ञा प्राप्नोति न प्राप्नोतीति ? सर्वेषां धातूनामस्मदभिमतप्रवृत्तिसामान्यक्रियावचनत्वानतिवृत्तेर्वस्तुव्यवहारे शब्दव्यवहारे वेति न किञ्चिद् न प्रसिध्यति। त्वया तु पुनरसदर्थविषयत्वाद् भ्रान्तिज्ञानं शब्दार्थविषयं व्यवस्थापितं वस्त्वसंस्पर्शादित्यलं प्रसङ्गेन।

प्रकृतमुच्यते – **एव↑मयं स उभयन↑यो**[7] योऽसौ मया आदावुद्दिष्टो विधिनियमात्मक[8] उभयनय इति, विधिश्च नियमश्च सर्वत्र द्रव्यं क्रिया चेति विधिनियमम्, द्वन्द्वैकवद्भावात्, स एष निर्दिष्टः प्रत्यक्षीकृतस्ते। कस्य पुनरयमार्षाभिहितानां नयानां भेद इत्यत्रोच्यते — **नैगमदेशत्वाद् द्रव्यार्थोऽयम्,** न पर्यायार्थः। द्रव्यपर्यायसङ्गृहीतानां बहुभेदानां मध्ये द्रव्यार्थभेदेषु नैगम-सङ्ग्रह-व्यवहारेषु यो नैगमोऽनेकभेदस्तस्यैकदेशोऽयं तद्भेद इत्यर्थः। **एक्केक्को य सतविधो सत्त णयसता हवंति[9] ते चेवं** [ आवनि० २२६ ][10] इति वचनात्।

---

१ सप्तम्यन्तोऽयं निर्देशः॥ २ **वस्तुनि विवृत्तिः** प्र०॥ ३ **°संभवादी** प्र०॥ ४ **°त्स्योत्तरप्र°** प्र०॥ ५ **°भ्यज्ञात°** प्र०॥ ६ **सभाव°** प्र०॥ ७ ↑ ↑ एतदन्तर्गतः पाठो य० प्रतिषु नास्ति॥ ८ **°मात्मनः उतनय** भा०। **°मात्मः उतनय** य०॥ ९ **हवंतेषं** य०। दृश्यतां पृ० ३७३ पं० ११॥ १० "इक्किको य सयविहो सत्त नयसया हवंति एमेव। अन्नो वि य आएसो पंचेव सया नयाणं तु॥ २२६॥" इति **आवश्यकनिर्युक्तौ** पाठः॥

**द्व्यर्थता उक्तवत् । पदार्थौ द्रव्यक्रिये । वाक्यमाख्यातशब्दः । तदर्थ उक्त उभय-भाक् । नयविनिर्गमसूत्रम्** – अत्थित्तं अत्थित्ते परिणमति [ [1]भगवतीसू० १।३।३२ ] **इति ।**

---

द्रव्यशब्दः किंसाधनोऽत्राभिप्रेत इति चेत्, उच्यते — **द्रव्यमपि भावसाधनम्,** यत् तद् २९५-२
द्रूयते केनापि यो द्रवति गच्छति सततं प्रवर्तते तस्य यद् द्रवणं गमनं सततप्रवृत्तिः स भावस्तद् भवनम्, तत्साधनो द्रव्यशब्दः, कर्तृसाधनाविनाभाविभावसाधनव्याख्यानस्य सोपपत्तिकस्य विस्तरेण कृतत्वात् सैव **द्व्यर्थता उक्तवत्,** द्रव्यक्रियात्[2]मैकद्व्यर्थता परस्पराविनाभाविनी करणादीनां तदव्यतिरिक्तस्वरूपत्वात् सर्वत्र घटपटादिबीजाङ्कुरादिषु च सर्वैकात्म्यस्य सुभावितत्वादिति । **पदार्थौ द्रव्यक्रिये** 'उक्तवत्' इति वर्तते । **वाक्यमाख्यातशब्द** इति, आख्यातं साव्ययकारकवाक्यमे[3]कमिति वाक्यम्, **तदर्थ उक्तः** वाक्यार्थ उक्तः **उभयभाक्** द्रव्यक्रियाद्व्यात्मकवस्तु भजते वाक्यार्थ इति विस्तरेणोक्तोऽनेन विधिनियम-भङ्गेन नैगमैकदेशद्रव्यार्थेन ।

**नयविनिर्गमसूत्रम् – अत्थित्तं अत्थित्ते परिणमतीति,** अस्तित्वं भावो भावेऽस्तित्वे परिणमति । भावो [4]भाव एव सततं वर्तते परितः समन्ताद् नमति परिणमति तं तं भावमापद्यते [5]सदा कर्तृ-[6]सहित एव ।

**इति उभयनयः पञ्चमोऽरः परिसमाप्तः ॥**

---

१ दृश्यतां पृ० २९६ टि० १ ॥ २ °त्मद्ध्य° य० ॥ ३ °कविति प्र० ॥ ४ सप्तम्यन्तोऽयं निर्देशः ॥ ५ तदा य० ॥ ६ °सहित वेति उभयनयः पञ्चमोऽरः परिसमाप्तः प्र० । दृश्यतां पं० ५ ॥



ॐ अर्हम्

# अथ षष्ठो विधिनियमविध्यरः ।

[1]नन्वेवमुभयमप्यवस्तु, अनुपपन्नस्वावस्थत्वात्, खपुष्पवत्। स्वा अवस्थाः स्थित्युत्पत्तिविनाशाः। ता यदि भावस्य ततो द्रव्यमनवस्थमिति द्रव्यप्रभेदासम्भवः। भाव एव तु स तथाभूत आपद्यते, तद्भेदस्य तदात्मकत्वात्, मृद्वत्। प्रवृत्तिभाववचनात् तु प्रवृत्तावेव व्यतिरेकसम्भवाद् भावादेव सर्वस्य कृतत्वाद्

---

एवं विधिनियमभङ्गारे द्रव्यक्रियात्मकवादे संहृते षष्ठनय आह – **नन्वेवमित्यादि** विचाराश्रयं दोषापादनसाधनम्। **उभयमपि** 'द्रव्यं क्रिया च' इत्यवस्तु **अनुपपन्नस्वावस्थत्वात्**, अनुपपन्नाः स्वा[2] अवस्था अस्य, तद्भावादनुपपन्नस्वावस्थत्वात् **खपुष्पवदिति**। कास्ताः स्वा अवस्थाः? उच्यते[3] – **स्वा अवस्थाः स्थित्युत्पत्तिविनाशाः**। ताश्च द्रव्यस्य वा स्युः क्रियाया वा? किञ्चातः? **ता यदि भावस्य** ताः स्थित्यादयः प्रागुक्ततथाभूतसन्निहितवस्तुत्वव्यक्तिलक्षणायाः क्रियाया ईष्यन्तेऽवस्था[4] इति **ततो द्रव्यमनवस्थं**
२९६-१ प्राप्तम्, अनवस्थालक्षणत्वादुभयोरन्यतरकल्पनावैयर्थ्यादवस्थाव्यतिरिक्तलक्षणाभावात्। भवतु द्रव्यमनवस्थम्, को दोष इति चेत्, उच्यते – **द्रव्यमनवस्थमिति द्रव्यप्रभेदासम्भवः** प्राप्तः, इतिशब्दस्य हेत्वर्थत्वादनवस्थत्वादित्यर्थः, द्रव्यप्रभेदा रूपादिगत्यादिविवर्ताः, ते न सम्भवन्ति अनव[5]स्थत्वादसत्त्वात् खपुष्पस्येव। ततश्च यदुक्तं द्रव्यस्य लक्षणं तस्य हानिः। कतमस्य इति चेत्, उच्यते, '[6]सर्वप्रभेदनिर्भेदं बीजम्' इत्यस्य। तस्मान्नास्ति द्रव्यम्, अनवस्थत्वात्, खपुष्पवत्।

ततः किं प्राप्तम्? **भाव एव तु स तथाभूत आपद्यते**, द्रव्यभूता क्रियैव आपद्यते, कस्मात्? **तद्भेदस्य तदात्मकत्वात्**, स्थित्युत्पत्तिविनाशा हि द्रव्यभेदाभिमता द्र[7]व्यस्यैव चेदात्मानो भवन्ति, तत एतदर्थादापन्नम् – क्रियाया आत्मेति, क्रियैव च द्रव्यं संज्ञामात्रभेदात्। **मृद्वदिति** दृष्टान्तः, यथा मृद्भेदाः पिण्डशिवकादयो मृदात्मकाः स[8]न्तो मृद्भूता एव तथा स्थित्यादयो द्रव्यभूतभावभेदा एवेति द्रव्याभावेऽर्था[9]पत्त्या स्थित्यादयः क्रियाया भेदा इत्यापन्नाः।

यदपि च क[10]ल्पितं प्रवृत्तिसामान्यव्यतिरेकेण कारकवत्या ओदनादिफलोद्देशिन्याः परिग्रहार्थं विशेषग्रहणं तदपि न कार्यम्। कस्मात्? **प्रवृत्तिभाववचनात् तु** मत्पक्षे **प्रवृत्तावेव** व्यतिरेकसम्भवः,

---

१ दृश्यतां पृ० ३०१–१॥ २ **स्वाऽवस्था** पा० डे० लीं० रं० ही०। **स्वावस्था** भा०॥ ३ **उच्यंते** भा० पा०॥ ४ **इष्यंते अवस्था** य०। **इष्यंता अवस्था** भा०॥ ५ °**वस्थात्वा**° प्र०॥ ६ दृश्यतां पृ० ३७८ पं० १॥ ७ **द्रव्यस्य वेदा**° य०। **द्रव्यस्यवे भेदा**° य०। (द्रव्यस्य भेदात्मानो?)॥ ८ **सन्ति** भा०॥ ९ °**र्थापत्त्या** प्र०॥ १० दृश्यतां पृ० ३९९ पं० ४॥

**द्रव्यभावत्यागाद् द्वयविभागवचनं व्यर्थम्, ततश्च तथाभवनविनाभूतसन्निधानमपि निर्मूलम्, सर्वनिर्मूलता चैवम्, अव्यक्तिरपि असन्निहितत्वात् खपुष्पवत् । अथोच्येत — सन्निहिततथाभूतवस्तुतत्त्वव्यक्ति द्रव्यमेव स्थित्यादिस्वावस्थमस्तु, एवं तर्हि सर्वप्रभेदनिर्भेदत्वमसत्यं द्रव्यस्य क्रियायाश्चाक्रियात्वम[1]व्यञ्जकत्वात् प्रागेव तथाभूतव्यक्तिव्यर्थत्वात् ।**

**अथैतच्चेदुभयं नेच्छति ततोऽविभागावस्थत्वाद् द्रव्यमविभागावस्थं तद्व्य-**

---

'प्रवृत्तिसामान्यमेव भावः' इत्युक्तत्वाद् विशेषास्तत्रैव सम्भव[2]न्ति । अतोऽस्य व्यतिरेकसम्भवाद् यदपि ओदनादि फलं तदपि प्रवृत्तिसामान्यमेव । तस्माद् **भावादेव** क्रियाया एव **सर्वस्ये[3]ष्टस्य कृतत्वाद्** 'द्रव्यं भावः' इत्येतत् त्यक्तम् । तत्त्यागाद् **द्वयविभागवचनं व्यर्थम्**, 'द्रव्यं क्रिया च वस्तु' इत्युभयाभ्युपगमो मूलत एव विघटते । **ततश्च तथाभवनेन** प्रवृत्तिलक्षणेन **विनाभूतस्य सन्निधानमपि निर्मूलम् ।** ततश्च यदि द्वे अपि द्रव्यक्रिये विभक्ते न स्तः ततस्तयोर्लक्षणमनुपपन्न[4]म्, अतश्च विभागेन लक्षणाभावात् तयोरभावः खपुष्पवत् । तदभावात् क्रिया कुतः तथाभवनक्रियासन्निधिलक्षणं द्रव्यं प्रवृत्तिसामान्यं वा कुतः तथाभवनविनाभूतत्वात् खपुष्पवदेवेति । **सर्वनिर्मूलता चैव**मिति सन्निधिनिर्मूलत्वात् क्रियायाँ[5] अव्यक्तिर्भेदानामव्यक्तिश्च तया विनेत्यत आह – **अव्यक्तिरपि असन्निहितत्वात् खपुष्पवत् ।** २९६-२

**अथोच्येते**त्यादि । स्यान्मतम् – भावस्य प्रागुक्तवत् स्थित्युत्पत्ति[6]लया अकल्पमानाः समनन्तरोक्तदोषदर्शनात्, **[7]सन्निहिततथाभूतवस्तुतत्त्वव्यक्ति द्रव्यमेव** उक्तवत् सम्मूर्च्छितसर्वप्रभेदं **स्थित्यादिस्वाव[8]स्थमस्तु,** ताश्च स्थित्याद्यवस्थाः क्रिययाभिव्यक्तिं नीयन्त इति । अत्रोच्यते – **एवं तर्हि सर्वप्रभेदनिर्भेदत्वमसत्यं द्रव्यस्य,** ते हि स्थित्यादिभेदा द्रव्यस्यैव संवृत्ता इति निर्भेदत्वोक्तिर्व्याहन्यते । किञ्चान्यत्, **क्रियायाश्चाक्रियात्वम्**, सन्निहिततथाभूतवस्तुतत्त्वव्यक्तिः क्रियेष्यते, ते हि भेदाः क्रिययाभिव्यज्यन्ते चेद् भेदाः प्रागपि क्रियाभिव्यक्तेः सन्ति, तथाभूतत्वात् क्रियाया व्यक्तिकरत्वाभावः । तस्माच्चाव्यञ्जनात् क्रिया द्रव्यवत् खरविषाणवद्वा न क्रियेति । ततश्च द्रव्यस्याद्रव्यत्वात् क्रियायाश्चाक्रियात्वादशेषपक्षध्वंसित्वम्, अनुपपन्नस्वावस्थत्वाद् द्रव्यस्य क्रियायाश्च खपुष्पवदभाव इति ।

**अथैतच्चेदुभयं** द्रव्यनिर्भेदासत्त्वादद्रव्यं सन्निहिततथाभूतवस्तुव्यक्त्यभावादक्रियात्वं च **नेच्छति** भवान् सर्ववस्तुत्यागभयात् **[9]ततोऽविभागे**त्यादि, **अविभागावस्थत्वात्**, विभागा भेदाः स्थित्याद्यवस्थाः, तदभावाद् द्रव्यमविभागमित्यसदापन्नम्, मा भूद् द्रव्यस्य भेदात्मकस्याद्रव्यत्वमिति क्रियायाश्चाक्रियात्वमव्यञ्जकत्वात् प्रागेव तथाभूतव्यक्तिव्यर्थत्वाद् मा भूदिति किमापन्नम्? **द्रव्यमविभागावस्थम् । तद्व्य-** २९७-१

---

१ दृशणतां पं० २५ ॥ २ °वंत्यततोऽस्य य० ॥ ३ °ष्टकृतत्वाद् प्र० ॥ ४ °न्नमतेतश्च प्र० ॥ ५ °या व्यक्ति° प्र० ॥ ६ °लयाः कल्पमानाः भा० । °लयाः कल्ममानाः य० । ( स्थित्युत्पत्तिलयकल्पनायां ? ) ॥ ७ °सन्निहितत्वात् खपुष्पवत् तथाभूतवस्तुतत्त्वव्यक्ति य० ॥ ८ °स्थस्तु प्र० ॥ ९ ऽतो° भा० । ( अतो ? ) ॥

**पुनरुक्तदोषाद् विशेषशब्दाप्रयोग एव स्यात् ।**

**... अत एव नियमार्था पुनः पुनः श्रुतिः, तदर्थत्वात् पूर्वश्रुतेः । नियमः स्वार्थव्यवस्थापनम् । सञ्चारि चैतत्, द्रव्यनय········। [1]युगपदयुगपत्········। यावच्च ·········तावत् सर्वमनेन शब्दनयशब्दार्थेन व्याप्तम् । एवमेव च विशेषप्रधानशब्दार्थव्यवस्थापनार्थमिदमपि—**

[2]न जातिशब्दो भेदानामानन्त्याद् व्यभिचारतः ।
वाचको नियमार्थोक्तेर्जातिमद्वदपोहवान् ॥

---

मित्यादि, **पुनरुक्तदोषात्** सामान्यशब्देनोक्तत्वाद् **विशेषशब्दाप्रयोग एव स्यात्**, उक्तार्थानामप्रयोगः [पा० म० भा० २।१।१] इति न्यायात् ।

४०४-२ **अत एवे**त्यादि । सत्यवृत्त्या नोक्तो विशेषः, उपाधिवृत्त्योक्तोऽप्यनुक्त एव । **नियमार्था पुनः पुनः श्रुति**र्वि[3]वक्षितार्था, कस्मात् ? **तदर्थत्वाद्** विशेषार्थत्वाद् विशेषणार्थत्वात् **पूर्वश्रुतेः** सामान्यश्रुतेः ब्राह्मणादेः । तस्माच्छ्रवणकालक्रमेण पुनः श्रुतिरिति विशेषशब्द उच्यते । कोऽसौ नियमो नाम ? इत्युच्यते–**नियमः स्वार्थव्यवस्थापनं** विवक्षितेऽर्थेऽवधारणम् । **सञ्चारि चैत**दिति, न पुनस्तत् सामान्यशब्देन उक्तवदुक्तं वस्तु व्यवस्थितमेव, किं तर्हि ? **सञ्चारि** विशेषपरम्परया । तत्र कारणं सञ्चरणे **द्रव्यनये**त्यादि, एवंसमवस्थस्यार्थस्य सत्त्वात् ।

किं पुनः सत्यमिति चेत्, **[4]युगपदयुगप**दित्यादि । तस्य विशेषस्य प्रधानस्य [5]प्रत्याय्यस्य प्रत्यायकत्वेन उपसर्जनमात्रप्रवृत्तिरसत्योपाधिरर्थः, तद्दर्शयति–**यावच्चे**त्यादि गतार्थम् **तावत् सर्वमनेन** [6]**शब्दनयशब्दार्थेन व्याप्त**मिति ।

**एवमेव चे**त्यादि एतन्न्याये व्याप्तिप्रदर्शनद्वारेण दर्शनान्तरं निराचिकीर्षुराह । **विशेषप्रधानशब्दार्थव्यवस्थापनार्थमिदमपी**ति तद्विचारवस्तुसूत्रम्—

**[7]न जातिशब्दो भेदानामानन्त्याद् व्यभिचारतः ।**
**वाचको नियमार्थोक्तेर्जातिमद्वदपोहवान् ॥** इति ।

जातिशब्दो विशेषार्थनियमोक्तेर्भेदानामवाचकः, व्यभिचारादानन्त्याच्च । जातिमतो वाचकत्वे च ये दोषास्तेऽन्यापोहाभिधानेऽपीति प्रतिज्ञा ।

---

१ 'युगपदयुगपत्तत्त्वस्य विशेषस्य प्रधानस्य उपसर्जनमात्रप्रवृत्तिरसत्योपाधिरर्थः' ईदृशमपि मूलमत्र स्यात् ॥ २ "**न जातिशब्दो भेदानामानन्त्याद् व्यभिचारतः । वाचको योगजात्योर्वा भेदार्थैरपृथक्श्रुतेः** ॥" [प्र० समु० ५।२] इति दिङ्नागेन यदुक्तं दूषणं तद् **दिङ्नाग**स्याप्यपोहपक्षे समानमेवेति प्रतिपादनार्थमिदं प्रतिवचनं **मल्ल**वादिनोक्तम् ॥ २ **°वक्षतार्था** प्र० ॥ ४ **युगपदित्यादि** य० ॥ ५ **प्रत्ययोस्य** य० ॥ ६ **शब्देनय°** प्र० ॥ ७ इत आरभ्य 'अन्यापोहः शब्दार्थः' इति बौद्धाचार्य**दिङ्नाग**स्य मतं निराक्रियते । तत्रेदमवधेयम्—**दिङ्नागे**नापोहवादोऽनेकेषु ग्रन्थेषु सिद्धान्तितः । तत्र दिङ्नागस्य कं ग्रन्थं लक्ष्यीकृत्य उभयनियमनयेनापोहवादोऽत्र प्रतिविहित इति निश्चेतुं न पार्यते तथापि पृ० ४१७-१ इत्यत्र '**सामान्यपरीक्षाकार**लिखित एवात्रापि' इति वक्ष्यमाणोल्लेखदर्शनात् **सामान्यपरीक्षा**न्तर्गतोऽपोहवादोप्यऽत्राभिप्रेतः स्यादिति सम्भाव्यते । दिङ्नागेन बहवो ग्रन्था: संस्कृतभाषायां रचिताः, ते च प्रायः सर्वेऽपि नष्टाः ।

[1]सर्वेषां स्वग्रन्थानां विषयसंग्रहाय यः **प्रमाणसमुच्चयो** वृत्त्या सह **दिङ्नागेन** रचितस्तत्र पञ्चमेऽपोहपरिच्छेदे विस्तरेणापोहनिरूपणं वर्तते । अतः सवृत्तिकस्य प्रमाणसमुच्चयस्य **'विशालामलवती'**टीकायाश्च भोटभाषानुवादान् मुहुः पर्यालोच्यापोहपरिच्छेदादत्यन्तमुपयोगी अंशो भोटभाषानुवादतः संस्कृतभाषायां परिवर्त्य इहोपन्यस्यते इति नयचक्रेऽपोहचचार्यां सर्वत्र यथास्थानं सोऽनुसन्धेयः ।

## [ प्रमाणसमुच्चयान्तर्गतोऽपोहवादः ]

उक्तं प्रमाणद्वयम् । केचिच्छाब्दमपि प्रमाणान्तरं मन्यन्ते । तत्र—

**न प्रमाणान्तरं शाब्दमनुमानात् तथाहि तत् ।**
**कृतकत्वादिवत् स्वार्थमन्यापोहेन भाषते ॥ १ ॥**

यस्मिन् विषये शब्दः प्रयुज्यते तस्य येनाङ्गेनाविनाभावितया सम्बद्धस्तत्[2] कृतकत्वादिवदर्थान्तरव्यवच्छेदेन द्योतयति । ततोऽनुमानान्न भिद्यते । ये तु 'जातिशब्दः स्वभेदान् सर्वानेवाभिधत्ते । उक्तेषु नियमार्थं भेदशब्दः' इत्याहुस्तत्रोच्यते—

**न जातिशब्दो भेदानामानन्त्याद् व्यभिचारतः ।**
**वाचको योगजात्योर्वा भेदार्थैरपृथक्श्रुतेः ॥ २ ॥**

**न जातिशब्दो भेदानां** *[3]वाचक इति वक्ष्यति । जातिशब्दस्तावत् सदादिः द्रव्यादीनां न * वाचक **आनन्त्यात्** । आनन्त्ये हि भेदानामशक्यः शब्देन सम्बन्धः कर्तुम् । न चाकृतसम्बन्धे शब्देऽर्थाभिधानं युक्तम् , स्वरूपमात्रप्रतीतेः । किञ्चान्यत्, **व्यभिचारतः** । सच्छब्दो हि यथा द्रव्ये वर्तते तथा गुणादिष्वपीति व्यभिचारात् संशयः स्यात् , नाभिधानम् । येऽपि मन्यन्ते 'जातिमात्रस्य तद्योगस्य वा वाचकः सम्बन्धसौकर्यादव्यभिचाराच्च' इति तदयुक्तम्, **वाचको योगजात्योर्वा भेदार्थैरपृथक्श्रुतेः** । तथाहि–'सद् द्रव्यम्, सन् गुणः, सत् कर्म' इति भेदार्थैर्द्रव्यादिशब्दैः सामानाधिकरण्यं न स्यात् । तच्च दृष्टम् । न हि सत्ता योगो वा द्रव्यं गुणो वा भवति, किं तर्हि? द्रव्यस्य गुणस्य वा । *[3]उक्तं च—

विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः । सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः ॥* [ वाक्यप० ३।१४।८ ]

**सम्बन्धोऽप्यत्र सम्बन्धिधर्मवाच्योऽभिधीयते ।**
**तथा भावीकृत्योच्यते भावोऽप्यन्येन युज्यते ॥ ३ ॥**

[4]सम्बन्धनेन सम्बन्धः । स रागादिवदन्यसम्बद्धः । तस्मात् सम्बन्धिधर्मेण सम्बन्धस्याभिधेयत्वात् स्वधर्मेण सम्बन्धवाचिशब्दाभाव इति अस्य जातिशब्दाभिधेयत्वं नोपपद्यते ।

ये तु विशेषशब्दैः सामानाधिकरण्यात् सम्बन्धसौकर्यादव्यभिचाराच्च जातिमन्मात्रं विवक्षितमित्याहुः तत्र—

**[5]तद्वतो नास्वतन्त्रत्वादुपचारादसम्भवात् ।**

**तद्वतो नास्वतन्त्रत्वात्** । तथापि [6]सच्छब्दो जातिस्वरूपपात्रोपसर्जनं द्रव्यमाह, न साक्षात्, इति तद्गतघटादिभेदानाक्षेपादतद्भेदत्वे सामानाधिकरण्याभावः । [7]न ह्यसत्यां व्याप्तौ सामानाधिकरण्यम् । यथा शुक्लशब्दः स्वाभिधेयगुणमात्रविशिष्टद्रव्याभिधानाद् द्रव्ये सतोऽपि मधुरादीन् नाक्षिपति ततोऽतद्भेदत्वमेवमत्रापि प्रसज्यते । किञ्चान्यत्, **उपचारात्** । [8]सच्छब्दो हि भूतार्थेन स्वरूपं जातिं वाह । तत्र प्रवृत्तस्तद्वति उपचर्यते । न हि यो यत्रोपचर्यते स तमर्थं भूतार्थेनाह । सारूप्यस्यापि **असम्भवात्** । तद्वति च गुणसारूप्यं न प्रत्ययसंक्रान्तितो नापि गुणोपकारात् सम्भवति । कथं न प्रत्ययसंक्रान्तित इति चेत्, उपचारे—

**भिन्नत्वाद् बुद्धिरूपस्य भृत्ये राजोपचारवत् ॥ ४ ॥**

1 दृश्यतां टिप्प० ९५ ॥ 2 दृश्यतां **तत्त्वसंग्रहपञ्जिका.** पृ० ४४१ ॥ 3 * * एतदन्तर्गतः पाठः PSV[2] मध्ये नास्ति ॥ 4 PSV[1] मध्येऽत्रान्यादृशोऽनुवादः ॥ 5 'तद्वतो नास्वतन्त्रत्वाद् भेदाज्जातेरजातितः । अर्थाक्षेपेऽप्यनेकान्तस्तेनान्यापोहकृच्छ्रुतिः' ॥ इति दिङ्नागस्य ग्रन्थान्तरस्थायाः कारिकायास्तु नयचक्रे खण्डनं दृश्यत इति ध्येयम् ॥ 6 तुलना–**तत्त्वसंग्रहपञ्जिका.** पृ० ३१० ॥ 7 "न ह्यसत्यां व्याप्ताविव्यादि । व्याप्तिराक्षेपः । यथा रूपशब्देन मधुरादीनामनाक्षेपोऽतद्भेदत्वात् तैः शब्दैः सामानाधिकरण्यं न भवति 'रूपमाम्लम्' इति । व्याप्तौ तु भवति 'रूपं नीलम्, इति ।"—**विशाला**०पृ० २४३ A ॥ 8 तुलना–"यः पुनरस्मिन्नेव पक्षेऽपरो दोषोऽभिहितः–सच्छब्दोऽपि भूतार्थेन स्वरूपं जातिं वाह । तत्र प्रवृत्तस्तद्वत्युपचर्यमाणो गौणः स्यात्—इति सोऽपि समानः ।"–**मी० श्लो० वा० शर्करिका** पृ० ६१ ॥

[1]यथा 'यो भृत्यः स स्वामी' इति भृत्ये स्वामिशब्दाभिधाने राज्ञि भृत्ये च समाना बुद्धिर्न भवति । उपचारश्च जातिशब्दस्य तद्वति ।

**क्रमेणानभिधानाच्च कुन्दशुक्त्यादिशौक्ल्यवत् ।**

यत्र समाना प्रतीतिस्तत्र क्रमेणाभिधानं दृष्टम्, यथा कुन्दस्य कुमुदस्य शुक्तेश्च शौक्ल्यमिति । जातितद्वतोर्युगपच्छब्दप्रयोगान्न प्रत्ययसंक्रान्तितः सारूप्यम् ।

**[2]गुणोपकारात् ताद्रूप्ये प्रकर्षः स्याद् विना धिया ॥ ५ ॥**

यदि स्फटिकवद् गुणोपकारात् तद्वान् गुणस्वरूपः स्यात् तथा सति गुणप्रकर्षबुद्धिनिरपेक्षा द्रव्ये प्रकर्षबुद्धिः स्यात् । न हि स्फटिके रक्तबुद्धेर्भात्र उपधानबुद्धिमपेक्षते, [3]अविमलेषु भेदबुद्ध्यभावात् । किञ्चान्यत्—

**संसर्गरूपात् सर्वत्र मिथ्याज्ञानं प्रसज्यते ।**

सर्वो हि शाब्दः प्रत्ययोऽर्थेषु संसर्गरूपेण व्यवच्छिन्नस्ततः [4]स्फटिकप्रत्ययवदयथार्थः स्यात् । किञ्चान्यत्—

**सामान्यादिबहुत्वे च युगपच्च ग्रहीतृषु ॥ ६ ॥**
**उपकारो विरुध्येत [5]सर्वैर्मेचकदर्शनम् ।**

**सामान्यादिबहुत्वे च युगपच्च ग्रहीतृषु उपकारो विरुध्येत ।** यदा च बहवो ग्रहीतारो भवन्ति गुणवतः शुक्लादेः तद्यथा–घटः पार्थिवो द्रव्यं सन् शुक्लो मधुरः सुरभिरित्येवमादि तदा गुणोपकारो विरुध्यते । न हि शक्यं तदा द्रव्येण एकगुणरूपेण स्थातुम्, अविशिष्टत्वात् । नाप्येकदेशेन गुणरूपमनुभवितुं शक्यम्, कृत्स्नस्य घटादिरूपप्रतीतेः । **सर्वैर्मेचकदर्शनम् ।** अथ पुनः सर्वैर्घटत्वादिभिर्युगपदुपकारः कृत्स्नस्य क्रियते ततः सर्वेषां प्रत्येकं घटादिरूपग्रहणाभावाद् मेचकदर्शनं युगपत् [6]सर्वरूपापत्तेः स्यात् । – PSV[1] C. ed. पृ० ६६–६८, N. ed. पृ० ७३ B–७५ B, PSV[2] N. ed. पृ० १५७ B—१५९ A, P. ed. पृ० १५६–१५७ [ VT. D. ed. पृ० २३७ B–२४८ A ] ।

तुलना—" व्यक्त्याकृतिजातयस्तु पदार्थः ॥ २।२।६६ ॥..................न व्यक्त्याकृतिजातयः पदार्थ इति केचित् । कुतः ? विकल्पानुपपत्तेः । सदित्येतदेव व्यापकत्वादुपादाय चिन्त्यते । सदित्यनेन पदेन पुनर्जातिरभिधीयते पिण्डो वा सम्बन्धो वा जातिमान् वा पदार्थः । तत्र न तावज्जातिरभिधीयते भेदार्थैरभिन्नविभक्तिकत्वात् । यद्ययं जातिवाचकः सच्छब्दो भवति 'सद् द्रव्यम्' इति भेदवाचिना द्रव्यशब्देन सह सामानाधिकरण्यं न प्राप्नोति । न हि भिन्नार्थवाचकानां सामानाधिकरण्यं पश्यामः । न हि गवाश्वमिति सामानाधिकरण्यं दृष्टम् । अथ द्रव्यादिवृत्तित्वात् सत्ताया एव द्रव्यादिशब्दैः सह सामानाधिकरण्यम्, तथापि पारतन्त्र्यात् सत्ताया गुणत्वम्, गुणगुण्यभिधायिनोश्च शब्दयोः सामानाधिकरण्यं न दृष्टमिति यथा शङ्खस्य शौक्ल्यमिति । एतेन सम्बन्धो व्याख्यातः । सच्छब्दः पिण्डानां वाचको भविष्यतीति न युक्तं पिण्डानामानन्त्यात् । न ह्येकस्य शब्दस्यानेकद्रव्यगुणप्रपञ्चेन सम्बन्ध आख्यातुं शक्यः । न चानाख्याते शब्दार्थसम्बन्धे शब्दादर्थप्रतिपत्तिर्युक्ता स्वरूपमात्रप्रतीतेः व्यभिचाराच्च । सच्छब्दश्रवणाच्च द्रव्यगुणकर्माणीति परिप्लवमाना बुद्धिरवतिष्ठते । न च यस्मादभिधानात् परिप्लवते बुद्धिस्तदभिधानमिति युक्तं वक्तुम् । तस्मात् सच्छब्दो भेदानां न वाचक इति । जातिमन्मात्राभिधायकोऽपि सच्छब्दो न भवति । कस्मात् ? अस्वतन्त्रत्वात् । न हि सच्छब्दात् तद्भेदा घटादयो गम्यन्त इति तद्वद्घटादिभेदानाक्षेपात् सामानाधिकरण्याभावः । अथवा अस्वतन्त्रत्वादिति सच्छब्दः प्राधान्येन सत्तायां वर्तते । तत्र वर्तमानः तद्वत्युपचर्यते । यच्च यत्र वर्तमानमन्यत्रोपचर्यते न तत् तस्याभिधायकं मञ्चशब्दवदिति । उक्तं चात्र । किमुक्तम् ? तद्वतामानन्त्यात् न सच्छब्देनाभिधानं युक्तमिति । तद्वति च न गुणसारूप्यात् प्रत्ययसंक्रान्तिः यथा स्वामिशब्दस्य भृत्ये । न गुणोपरागात् यथा नीलः स्फटिक इति क्रमवृत्त्यभावाद् युगपदसम्भवाच्च अयथार्थज्ञानोत्पत्तिप्रसङ्गाच्च । तस्मान्न जातिमन्मात्राभिधायकोऽपि । असाधारणविशेषणविशेष्याभिधायको भविष्यतीति न युक्तम्, अन्यत्र प्रत्ययाभावप्रसंगात् । न चान्या गतिरस्ति । तस्मादन्यार्थापोहकृच्छ्रुतिरिति अन्यशब्दार्थान्तरापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यत इति ।"—**न्यायवार्तिक** २।२।६६ ॥

1 यथा यः स्वामी स भृत्य इत्यत्र राज्ञि भृत्ये च PSV[2] ॥ 2 "अत्र भिक्षुणोक्तम्—किञ्चित् कुत्रचिद् वर्तमानमुपकारमासजद्वर्तते यथा लाक्षा स्फटिकेऽनुरञ्जनोपकारेण वर्तते । वर्तते चेज्जातिर्द्रव्ये तया तस्यानुरञ्जनाद्युपकारः कर्तव्यः। ततश्च जातिबुद्ध्या विनैव तदुपकृतद्रव्यमात्रप्रतीत्या भवितव्यम् । न हि लाक्षानुरक्ते स्फटिके गृह्यमाणे तद्ग्रहणमपरमपेक्षते । न चैवमत्रास्ति तेन नास्ति उपकारको(तो) द्रव्ये वृत्तिः—इति । तदुक्तम्—गुणोपकारतो द्रव्ये प्रकर्षः स्याद्विना धिया ।—इति ।"—**मी० श्लो० वा० शर्करिका.** पृ० ६५–६६ ॥ 3 अविमले VT. ॥ 4 स्फटिकवत् सर्वं ज्ञानमयथार्थं स्यात् PSV[1] ॥ 5 सर्वमेचकदर्शनम् (?) ॥ 6 सर्वरूपप्रतीतेः VT. ॥

**कथम्? [1]अन्यापोहकृच्छ्रुतिः। शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते इत्युच्यते [　　]। अर्थौ च स्वसामान्यलक्षणावुक्तौ, तृतीयार्थासम्भवात्। स्वार्थ एव तावदवधार्यः—कः स्वार्थः? स्वार्थः स्वलक्षणोऽनन्यः प्रत्यक्षविषयः। स इह सविकल्पार्थे न सम्भवति स्वार्थः प्रत्यक्षविषयः। न च ततोऽन्यः स्वार्थः। शब्दान्तरार्थापोहश्च न स्वार्थः। तद्द्वयातिरिक्तश्च तृतीयो न कश्चिदन्योऽस्ति। तिष्ठतु तावत् स्वार्थः।**

**तथा च [3]जाति-सम्बन्ध-जातिमदभिधानानामसम्भवादन्यापोहकृच्छ्रुतिः [　　]**

---

**कथम्**? इत्युपपत्तिप्रश्नः। भेद-जातिमदभिधानपक्षेषु दोषदृष्टेरर्थादापन्नम् **'अन्यापोहकृच्छ्रुतिः'** इत्यन्यापोहं वर्णयति "[4]**शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिः 'अभिधत्ते' इत्युच्यते'** इत्यन्यापोह- ४०५-१ वादिनोक्तम्, **अर्थौ च स्वसामान्यलक्षणावुक्तौ**, नातोऽन्यत् प्रमेयमस्ति इति ततोऽन्य**तृतीयार्थासम्भवात् स्वार्थ एव तावदवधार्यः**, तावच्छब्दस्य क्रमार्थत्वादर्थान्तरस्याप्यवधारयिष्यमाणत्वात्, शब्दान्तरार्थापोहमात्रोक्तौ [6]दोषोऽसत्त्वप्राप्तिः, तस्मात् तावताऽपरितोषात् 'स्वार्थे कुर्वती' इत्युक्तः **कः स्वार्थः?** उच्यते—**स्वार्थः स्वलक्षणः**, अन्यतोऽन्यः स्वः, **अनन्यः** स एवेत्यर्थः प्रमाणयोरपि नियतविषयावधृतेः **प्रत्यक्षविषयः** स स्वार्थ इति। **स इहे**त्यादि। **इह** शब्दार्थे **सविकल्पार्थे** सामान्यतः सविकल्परूपेऽध्यारोपापवादात्मनि **स न सम्भवति स्वार्थः प्रत्यक्षविषयः, 'स्वलक्षणमनिर्देश्यम्'** [[8]प्र० समु० १।५, २।२?] इत्युक्तत्वात् प्रत्यक्षविषयस्य। स्यान्मतम्—प्रत्यक्षादर्थादन्योऽस्ति स्वार्थ इति चेत्, तन्न **च ततोऽन्यः** प्रत्यक्षार्थात् **स्वार्थः। शब्दान्तरार्थे**त्यादि। अन्यापोहः स्वार्थो न भवति, तद्द्वयातिरिक्तश्च तृतीयो न कश्चिदन्योऽस्ति, लक्ष्यद्वित्वावधारणात् ततश्च प्रमाणद्वित्वावधारणात्। तस्मात् तृतीयोऽर्थोऽपि नास्ति, कुतः स्वार्थः? इत्यत आह—**तिष्ठतु तावत् स्वार्थः** असत्त्वादविचार्य इत्यर्थः।

**तथा चे**त्यादि। एवं च कृत्वा शब्दवाच्यविचारे प्रस्तुते **जाति-सम्बन्ध-जातिमदभिधाना-**

---

१ **'अर्थाक्षेपेऽप्यनेकान्तस्तेनान्यापोहकृच्छ्रुतिः।'** इति प्रमाणसमुच्चयस्य पञ्चमेऽपोहपरिच्छेदे द्वादश्यां कारिकायां दृश्यते, किन्तु तस्य **दि**ङ्नागविरचितायां वृत्तौ **'शब्दान्तरार्थापोहं हि'** इत्यादिव्याख्याया अदर्शनादिदं दिङ्नागस्यान्यस्माद् ग्रन्थादत्रोद्धृतं भाति॥ २ दृश्यतां पृ० ४१६–१॥ ३ "उक्तं प्रमाणद्वयम्। केचित् शाब्दमपि प्रमाणान्तरं मन्यन्ते। [तत्र PSV[1]] **न प्रमाणान्तरं शाब्दमनुमानात् तथाहि तत्। कृतकत्वादिवत् स्वार्थमन्यापोहेन भाषते॥ ५।१॥** शब्दो यस्मिन् विषये प्रयुज्यते तस्य येनाङ्गेनाविनाभावितया सम्बद्धस्तत् कृतकत्वादिवदर्थान्तरव्यवच्छेदेन द्योतयति ततोऽनुमानान्न भिद्यते। [पृ० १५७ B]·········यस्माज्जातिशब्दः कथञ्चिदपि भेद-सामान्य-सम्बन्ध-जातिमद्वाचको न युज्यते **तेनान्यापोहकृच्छ्रुतिः** [प्र० समु० ५।१२]। तस्मात् **'कृतकत्वादिवत् स्वार्थमन्यापोहेन भाषते'** इति यद् [उक्तं] तदेव स्थितम् [पृ० १६०]।" इति **प्रमाणसमुच्चयवृत्तौ** पञ्चमेऽपोहपरिच्छेदे दिङ्नागेनोक्तम्। PSV[1] पृ० ७३ B–७६ B॥ ४ दृश्यतां पृ० ५४७–५४८। तुलना—"वाक्स्वभावोऽन्यवागर्थप्रतिषेधनिरङ्कुशः। आह च स्वार्थसामान्यं तादृग् वाच्यं खपुष्पवत्॥ १११॥" इति **स**मन्तभद्ररचितायाम् **आ**प्तमीमांसायाम्॥ ५ **प्रमाणसमुच्चयवृत्त्यादौ** दिङ्नागेनोक्तौ। दृश्यतां टिप्पृ० १०० पं० १ टि० १॥ ६ **दोषो सत्वाप्राप्तिः** प्र०। (दोषः सत्त्वाप्राप्तिः?)॥ ७ °**ऽपरतोषात्** भा०। °**परतोषात्** य०॥ ८ दृश्यतां टिप्पृ० १०४ पं० १३। **प्र**माणसमुच्चयस्य प्रथमपरिच्छेदे 'स्वसंवेद्यमनिर्देश्यं रूपमिन्द्रियगोचरः' इति कारिका दृश्यते। 'स्वलक्षणमनिर्देश्यं रूपमिन्द्रियगोचरः' इति तु पाठभेदेन नयचक्रवृत्तौ अष्टमेऽरे पृ० ४३७–२ इत्यत्र उद्धृता, अत इयं कारिका दिङ्नागस्य ग्रन्थान्तरादत्रोद्धृता प्रतीयते। **प्रमाण**समुच्चयस्य द्वितीयपरिच्छेदस्य द्वितीयश्लोके तु **'स्वलक्षणमनिर्देश्यं ग्राह्यभेदात् तदन्यथा'** इति पाठो भाति॥

इत्युक्तं त्वया न प्रत्यक्षविषयस्वार्थत्वेन । अनुमानविषयोऽपि नैवास्य स्वार्थः, अपोहार्थस्वरूपत्वात् । अग्निरनग्निर्न …… । भेदोपादाने वाऽस्वार्थत्वमपोहार्थादन्यत्वात् परप्रत्यायनादित्वभिन्नार्थत्वाच्च ।

अथ कचिददृष्टोऽपि 'अन्यापोहः' इत्यस्मादेव शब्दादवगन्तव्यः स्वार्थः, यस्मिन्नन्योऽपोह्यते स स्वार्थः । तदपि न, 'स्वार्थे' इत्याधाराधेयादर्शनात् स्वरूपविधिविनाभूतत्वात् कस्मिन् स्वार्थेऽपोह्यते ? अन्यशब्दशब्दान्तरार्थयोरस्थितरूपत्वात् को ह्यसावन्यो यस्य यस्माद् वाऽपोहः क्रियेत ?

---

नामसम्भवात्[1] 'अन्यापोहकृच्छ्रुतिः' इति भेदपक्षस्य जातिमत्[2]पक्षाविशिष्टत्वेष्टेः शब्दार्थाववधृत्य उक्तं त्वया, न प्रत्यक्षविषयस्वार्थत्वेनेति त्वद्वचनमेव ज्ञापकम् ।

४०५-२ स्यान्मतम्—अनुमानविषयः स्वार्थ इति । तच्चानुमानविषयोऽपि नैवास्य शब्दस्य स्वार्थः, अपोहा[3]र्थस्वरूपत्वात् । तद्दर्शयति—अग्निरनग्निर्नेत्यादि, तस्यापि चापोहार्थस्याख्येयत्वात्, न चाख्यातोऽसौ 'ईदृशः स्वार्थः' इति विशेष्य । स्यान्मतम्—अग्निमत्त्वविशिष्टदेशादिः स्वार्थो भिन्नस्तत्सम्बन्धीति चेत् । एवं तर्हि भेदोपादाने वा अस्वार्थत्वमपोहार्थादन्यत्वात्, अपोहार्थस्यैव त्वयानुमानत्वेष्टेः । किञ्चान्यत्, परप्रत्यायनादित्वभिन्नार्थत्वाच्च, सचानुमानविषयः स्वार्थः आ[4]त्मनः प्रत्यायने लिङ्गादिवस्तुरूपः, परप्रत्यायने शब्दवाच्यो ज्ञानरूपो ज्ञा[5]नार्थत्वाच्छब्दप्रयोगस्येत्ययुक्तमस्य स्वार्थस्य द्वैरूप्यम् । एवं न प्रत्यक्षविषयो नानुमानविषयः स्वार्थो घटते शब्दस्य त्वन्मतादेव ।

अथ कचिदित्यादि । शब्दार्थविचारे प्र[6]त्यक्षानुमानविषयत्वविचारोऽसं[7]म्बद्ध इति चेत्, तन्न, 'तृ[8]तीयार्थासम्भवात्' इत्यादेः प्रदर्शितत्वात् । तथापि त्वदनुवृत्त्या यद्यपि प्रत्यक्षानुमान[9]विषययोरदृष्टोऽपि 'अन्यापोहः' इत्यस्मादेव शब्दादवगन्तव्यः स्वार्थः, अ[10]न्यस्यापोहो न स्वस्यार्थस्य, स्वार्थे चान्यस्यापोहो न निराश्रय उ[11]क्तदोषात् । तस्मात् यस्मिन्नन्योऽपोह्यते स स्वार्थ इति 'घटः' इत्युक्ते 'अघटो न भवति पटादिः' इति घटे पटाद्यपोहाद् घटः स्वार्थ इति शब्दविषय एव स्वार्थो निश्चित इति मतम् । तथापि तदपि न स्वार्थ इ[12]त्याधाराधेयादर्शनात्, स एवाधाराभिमतः स्वार्थ आधेयाभिमतश्च शब्दो न दृ[13]श्येते तौ स्वरूपविधिविनाभूतत्वात्, यस्मिन् 'अन्यस्य शब्दान्तरार्थस्यापोहं

४०६-१ करोति' इत्युच्यते स एवाधारोऽर्थो न विधीयते शब्दश्चाधेयः । तस्मात् तयोरदर्शनात् कस्मिन् स्वार्थेऽपोह्यते इत्यभिसम्भन्त्स्यते, न चेद् विधीयते अ[14]न्यस्यार्थस्य सूत्रोक्तस्य भाष्योक्तस्य शब्दान्त[15]रार्थस्य

---

१ °वा न्यापोह° प्र० ॥ २ °मत्प्रक्षाविशिष्टत्वेष्टः य० । °मत्प्रत्यक्षाविशिष्टत्वेष्टेः भा० ॥ ३ °हार्थः स्वरू° य० ॥ ४ आत्मान प्र० । अत्र 'आत्मने' इति पाठोऽपि समीचीनो भाति, 'स्वस्मै इदं स्वार्थम्, परस्मै इदं परार्थम्' इत्याशयेन 'आत्मने' इत्यपि पाठोऽत्राभिप्रेतो भवेत् ॥ ५ ज्ञानात् नानार्थत्वा° य० । ज्ञानात् नानानार्थत्वा° भा० । अत्र ज्ञानाधानार्थत्वा° इत्यपि पाठो भवेत् ॥ ६ स्त्यक्षा° प्र० ॥ ७ °संबंध प्र० ॥ ८ पृ० ६०९ पं० २ ॥ ९ °नविषयो° प्र० ॥ १० अनस्यपोहे प्र० ॥ ११ दृश्यतां पृ० ६०९ पं० ११ ॥ १२ इइत्या° भा० १३ दृश्यते प्र० ॥ १४ अन्यार्थस्य भा० । अयं भा०प्रतिपाठोऽपि समीचीन एव । 'तेनान्यापोहकृच्छ्रुतिः' इति दिङ्नागप्रणीते सूत्रे योऽन्यार्थ उक्तः 'शब्दान्तरार्थापोहं हि' इत्यादि भाष्ये च यः शब्दान्तरार्थ उक्तस्तस्य स्वरूपानवस्थानमित्याशयः ॥ १५ °रार्थं च प्र० ॥

**योऽनन्यो न भवतीति चेत्, ननु स एव विधेरनन्यः प्रत्यक्षः[1]। इतरथा अन्यो न भवति अनन्य इति व्यावृत्तिमात्रस्थितित्वादप्रतिष्ठितस्वार्थयोस्तदतयोर्ग्रहणाभावात् कुतः कोऽन्यः? इतरेतराश्रयभावदोषश्च 'तस्मादन्यः, अन्यस्मात् सः' इति।**

**अथान्यापोहलक्षणवाक्यानुवृत्त्या व्यावृत्तिमान् स्वार्थो गृह्यते, न व्यावृत्तिमात्रं 'न सदसत्' इति।** [2]हिशब्दो यस्मादर्थे, यस्माद् वृक्षशब्दोऽवृक्षशब्दनिवृत्तिं स्वार्थे कुर्वन् स्वार्थे वृक्षलक्षणं प्रत्याययति एवं निवृत्तिविशिष्टं वस्तु शब्दार्थः द्रव्यादि सन्, न निवृत्तिमात्रम्।

---

च स्वरूपानवस्थानम्, विधीयमानस्वार्थानव[3]स्थानात्। तस्मिंस्तु विधेयेऽवस्थिते 'शब्दान्तरमन्यः शब्दस्तदर्थश्च' इति वक्तुं युज्येत अत आह—**अन्यशब्दशब्दान्तरार्थयोरस्थितरूपत्वात् को ह्यसावन्यो यस्य यस्माद् वापोहः [4]क्रियेत** स्वरूपविधिविनाभूत इति, न सम्भवत्येषोऽर्थ इत्यर्थः।

**योऽन[5]न्यो न भवतीति चेत्,** स्यान्मतम्—यथैव स्वार्थः '[6]अन्यो न भवति' इत्यन्यस्यापोहेन प्रतीयते तथैवान्योऽपि 'अनन्यो [न] भवति' इति तदपोहेन प्रतीयते इति चेद् मन्यसे, अत्र ब्रूमः—**ननु स एव विधे**रित्यादि, [7]स्वेन विधेयेनोपलक्षितस्य अनन्यस्य प्राणादन्यप्रतीतेरनन्यः स एव स्वार्थो विधेयः, तस्याग्रहणे 'अनन्यः' इति बुद्धेरभावात्[8] **'अनन्यः स्वार्थो विधेः'** इत्यापन्नम्। **इतरथा अन्यो ने**त्यादि यावद् **ग्रहणाभावात्,** यथा 'घटादन्यः पटः' इत्युक्ते स न भवति, एवं पटादन्यो घटः सोऽपि न भवत्येव, द्वयोरपि व्यावृत्तिमात्रस्थितित्वात्। ततश्चाप्रतिष्ठितस्वार्थयोस्त[यो][9]रयं स्वः अन्यः स इति तदतयोर्ग्रहणाभावः। ततश्च कुतः कोऽन्यः? कुतः कस्यापोहः? इत्यपोहशब्दार्थाभावः। किञ्चान्यत्, **इतरेतरा[श्र]यभावदोषः।** कथमिति चेत्, उच्यते—**तस्मादन्यः, अन्यस्मात् स इति।** [10]इति हेत्वर्थे, यस्मादन्यबलात् स प्रसिध्यति तद्बलादन्यः, [11]इतरेतराश्रयाणि च न प्रकल्पन्त इत्युक्तम्। एवं लौकिकान्यापोहशब्दार्थमात्रानुसारेण परीक्ष्यमाणे[12]ऽन्यापोहे न घटते स्वार्थः। ४०६-२

**अथान्यापोहे**त्यादि यावद् **न सदसदिति** अन्यापोहलक्षणवाक्यानुसारेण परीक्षामाह—अन्यापोहलक्षणवाक्यं तेना[13]न्यापोहकृच्छ्रुतिः [ ] इति, तस्य व्याख्या—शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यते [ ] इति, तदनुवृत्त्या व्यावृत्तिर्यस्मिन् विद्यते स्वार्थे स गृह्यते न व्यावृत्तिमात्रम्, हिशब्दस्य हेत्वर्थत्वात्। तद्दर्शयति—**'हि'शब्दो यस्मादर्थे,** तन्निरूपयति लौकिकोदाहरणेन—**[14]यस्माद् वृक्षशब्द** इत्यादि यावत् **प्रत्याययति** इति। **एवं निवृत्तिविशिष्टं वस्तु शब्द**वाच्यार्थः, कतमोऽसौ? **द्रव्यादि सन्** द्रव्य-पृथिवी-मृद्-घटत्वादि, **न निवृत्ति-**

---

१ दृश्यतां पृ० ४१६-१ ॥ २ दृश्यतां पृ० ५४८ पं० १२-१४॥ ३ °**वस्थानात् तस्मिंस्तु विधेये वस्थानात् तस्मिंस्तु विधेय** इति द्विर्भूतः पाठः प्रतिषु ॥ ४ **क्रियते** य० ॥ ५ °**नन्यो भव**° य० ॥ ६ **अन्योन्य भवति** य० । **अन्योन्यान्य भवति** भा० ॥ ७ **ष्वेन विधियेनोपालक्षितस्य** प्र० ॥ ८ °**ग्रहणेइत्यति बुद्धे**° य० ॥ ९ °**स्तरयं श्वः अन्यः** प्र० ॥ १० **इति हेत्वर्थौ** भा० । ( इतिर्हेत्वर्थे ? ) ॥ ११ दृश्यतां पृ० ३४ टि० ४ ॥ १२ **माणो** य० ॥ १३ दृश्यतां पृ० ६०९ टि० १ ॥ १४ **यस्मा वृक्ष**° भा० । **यस्मादवृक्ष** य० । दृश्यतां पृ० ५४८ पं० १२-१४ । सिद्धसेनगणिविरचितायां तत्त्वार्थवृत्तावुद्धृतेऽस्मिन् दिङ्नागवचने **"हिशब्दो यस्मादर्थे, यथा वृक्षशब्दोऽवृक्षशब्दनिवृत्तिं स्वार्थे कुर्वन् स्वार्थे वृक्षलक्षणं प्रत्याययतीत्युच्यते एवं च निवृत्तिविशिष्टं वस्तु शब्दार्थः न निवृत्तिमात्रम्"** [ तत्त्वार्थवृ० ५।२४ पृ० ३५७ ] इति पाठदर्शनादत्र **यथा वृक्ष**° इत्यपि पाठः स्यात् ॥

**यथा कृ[1]तकत्वस्य अनित्यत्वविशिष्टः शब्दोऽनुमेय एवं शब्दोऽपि स्वमभिधेयमर्थान्तरव्यवच्छेदविशिष्टं द्योतयति प्रमाणत्वात् ।**

**अत्रापि विधिरेवाङ्गीकृतः, अव्यावृत्तस्वार्थार्थत्वात् 'देवदत्त ! गामभ्याज शुक्लाम्' इति गवानयनविधायकवाक्यवत् । व्यावृत्तिव्यतिरिक्तस्य स्वार्थस्य विधानं त्वयैवोक्तम्,** शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यते, हिशब्दो यस्मादर्थे, यस्माद् वृक्षशब्दोऽवृक्षनिवृत्तिं स्वार्थे कुर्वन् स्वार्थं वृक्षलक्षणं प्रत्याययति [ ] **इति त्वद्वचनादेव स्वार्थविधानस्य प्रदर्शनात् ।** निवृत्तिविशिष्टं वस्तु शब्दार्थो द्रव्यादि सन् [ ] **इत्यादिग्रन्थेनापि स्वार्थविधानमेव प्रदर्शितम् । अन्यथा सर्वत्रैव व्यावृत्तिमात्रम्, न स्वार्थो नाम कश्चिदस्तीति** स्वार्थे कुर्वती श्रुति**रित्यनर्थकं स्यात् ।**

---

**मात्रं** खपुष्पतुल्यमिति दृष्टान्तः । अथवा 'अनुमानानुमेयसम्बन्ध एव वाच्यवाचकसम्बन्धः' इति मन्यमानो **यथा कृतकत्वस्ये**त्यादि [2]सेतत्स्वरूपव्याख्यानमुदाहृत्यानुमानम् **एवं शब्दोऽपी**त्यादि दार्ष्टान्तिकं च सतत्स्वरूपव्याख्यानं निगमयति **'प्रमाणत्वात्'** इति हेतुधर्मं च[3] तयोस्तुल्यम् । शेषं गतार्थम् । उभयोरन्यापोहविशिष्टार्थप्रत्यायनतुल्यत्वादिति पिण्डार्थः । यथा वक्ष्यति निदर्शनम्–[4]**न प्रमाणान्तरं शाब्दमनुमानात्** [ प्र० समु० ५।१ ] इति ।

अत्र ब्रूमः–**अत्रापी**त्यादि । त्वयैवं ब्रुवतापि अपोहातिरिक्तः स्वार्थ उक्तः, अतो **विधिरेवाङ्गीकृतः ।** कस्मात् ? **अव्यावृत्तस्वार्थार्थत्वात्,** अव्यावृत्तस्वार्थोऽर्थोऽस्येत्यव्यावृत्तस्वार्थार्थमेतद् '[5]व्यावृत्तिमान् स्वार्थो गृह्यते' इत्यादि वाक्यम् । यस्याव्यावृत्तस्वार्थार्थत्वं तद् वाक्यं विधिमङ्गीकुर्वद्
४०७-१ **दृष्टम्,** यथा 'देवदत्त गामभ्याज शुक्लाम्' इति गवानयनविधायकं वाक्यमगवादिदोहादिव्यावृत्तिमद्देवदत्तकर्तृकशुक्लगवकर्मानयन[6]क्रियास्वार्थम्, तथा 'घटः पटो न भवति' इत्यन्यापोहोपलक्षितस्वार्थवाक्यमिति त्वयैवोक्तम् । तद्यथा–**व्यावृत्तिव्यतिरिक्तस्ये**त्यादि परवाक्यप्रत्युच्चारणम् । तद्विवरणं च **हिशब्दो यस्मादर्थे** इत्याद्युपक्रम्य हेत्वर्थभावनोदाहरणं **वृक्षशब्दः** सव्याख्यादण्डकः सोत्त[र]पूर्वपक्षप्रत्युच्चारणं सव्याख्यानं यावत् **प्रदर्शना**दिति त्वद्वचनादेव स्वार्थस्य विधानं स्फुटीकृतम् ।

किञ्चान्यत्, **निवृत्तिविशिष्ट**मित्यादि । ए[7]वं निवृत्तिविशिष्टं वस्तु शब्दार्थो द्रव्यादि सन् इत्यादिना ग्रन्थेन कृतकत्वस्यानित्यत्वविशिष्टशब्दानुमेयत्वदृष्टान्तेन सं[8]भावनेन एवं शब्दोऽपि स्वमभिधेयमित्यादिना स्वार्थविधानमेव प्रदर्शितम् । **अन्यथे**त्यादि । एवमनिच्छतस्ते दोषः–यथा वृक्षशब्दप्रयोगे प[9]टाद्यवृक्षान्यशब्दार्थव्यावृत्तिरपि प्राप्ता, ततः सर्वत्रैव व्यावृत्तिमात्रम्, न स्वार्थो नाम कश्चिदस्ति, अतः 'स्वार्थे कुर्वती श्रुतिः' इत्यनर्थकं स्यात् ।

---

१ दृश्यतां पृ० ६०७ पं० ९ ॥ २ तत्स्वरूपव्याख्यानेन सहितं सतत्स्वरूपमित्यर्थः ॥ ३ **चातयो°** भा० । (चानयो° ?)। ४ **"न प्रमाणान्तरं शाब्दमनुमानात् तथाहि तत् । कृतकत्वादिवत् स्वार्थमन्यापोहेन भाषते ॥"** इति सम्पूर्णा कारिका **प्रमाणसमुच्चयस्य** पञ्चमेऽपोहपरिच्छेदे, दृश्यतां पृ० ६०७ पं० ७ । **तत्त्वसंग्रहपञ्जिकाया**मप्युद्धृतेयं कारिका पृ० ४४१ ॥ ५ दृश्यतां पृ० ६११ पं० ४ ॥ ६ °**क्रियस्वा**° प्र० ॥ ७ दृश्यतां पृ० ६११ पं० ६ ॥ ८ **सहावनेन** प्र० ॥ ९ **पट्टाद्य°** प्र० ॥

**यदपि च तत् सदित्यसन्न भवतीति तदप्यतिपरिश्लथम् । [1]ननु युगपद्भूतपटाद्यभवनेनैव घटभवनं दृष्टम्, युगपद्भूतरसाद्यभवनेनैव च रूपभवनं दृष्टम् । अन्यथा तद्भवने घटो न भवेत् त्वन्मतवदुक्तवच्च । अयुगपद्भाविष्वपि [अ]युगपद्भूतपिण्डादिशिवकादिपूर्वोत्तरभवनाभवनेन च भवति 'सन्' इति, अन्यथानुपपत्तेः ।**

**[3]यदि तु सदसन्न भवेत् ततोऽन्यापोहो निर्विषय एव भवेत् । ततश्च**

**[4]भेदो भेदान्तरार्थं तु विरोधित्वादपोहते [ प्र० समु० ५।२८ ]**

---

अत्राह—स्यादेतदेवं यदि [अ]वृक्षनिवृत्त्या गम्यते स्वार्थः कश्चिदिति, किं तर्हि ? वृक्षः सन्नित्यसन्न भवतीति तस्यापि वृक्षसत्त्वस्यावृक्षासत्त्वमात्रार्थत्वादन्यापोहमेव शब्दार्थमभ्युपगच्छामीति । अत्र ब्रूमः—**यदपि च तत् सदित्यसन्न भवतीति** सच्छब्दोऽसच्छब्दार्थं निवर्तयतीति ततः 'सत्' इत्युक्ते ४०७-२
'असन्न भवति' इत्ययमर्थो गम्यते ततोऽन्यापोह एवेति भवतोक्तं **तदप्यतिपरिश्लथम्**, दुर्बद्धदारुभारकवद् विशीर्यत इत्यर्थः । कस्मात् ? [ **युगपद्**]**युगपद्भा**विनोऽर्थस्यासत्त्वाविनाभाविन एव सत्त्वात् । तत्र तावत् [5]**ननु युगपद्भूतपटाद्यभवनेनैव घटभवनं दृष्टं युगपद्भूतरसाद्यभवनेनैव च रूपभवनं दृष्टम्**, यद् घटस्य सत्त्वं तत् पटस्यासत्त्वम्, रसस्यासत्त्वं रूपस्य सत्त्वम् । तस्मात् [6]सदित्यसन्न न भवति, असद् भवत्येव । **अन्यथा तद्भवने घटो न भवेत्**, [7]पटस्य सतो घटे भवने घट एव न भवेत्, पटसत्त्वे[8]नावष्टब्धत्वे घटावकाशाभावात् । किमिव ? **त्वन्मतवत्**, [9]तवैव हि '**शब्दान्तरार्थापोहं स्वार्थे कुर्वती श्रुतिरभिधत्ते**' इति मतमितरेतराभावात्मकं च तत्त्वमिति । किञ्चान्यत्, **उक्तवच्च**, अनन्तरातीतनये '[10]**भावाभाव**[11]**भावनायाम्**' इत्युपक्रम्य बहुधोक्तम् । तस्मान्न युक्तं '**सदित्यसन्न भवति**' इति । तथा रूपरसादियुगपद्भाविषु योज्यम् । एवं तावद् युगपद्भाविषूक्तम् । **अयुगपद्भाविष्वपि [अ]युगपद्भूते**त्यादि । पिण्डो यदि न भवेत् कोशक-स्थासक-कुशूलकादिर्वा यदि न भवेत् ततः शिवको भवेत् । एवं कोशकादिष्वपि पूर्वोत्तरभावाभावे वर्तमानभावो भवेत्, न भावे । तथा कपाल-शकल-शर्करकादिभावेषु योज्यं बाल-कुमार-युव-मध्यम-स्थविरेषु च तथैव प्रागनेकधा भावितम् 'अभवन्नेव भवति' इति ।

अथैवं नेच्छसि [12]**यदि तु सदसन्न भवेत्** तव **ततोऽन्यापोहो निर्विषय एव भवेत्** । तद्यथा—'घटः' इत्यघटो न भवतीति नैव स्यात्, घट इत्युक्ते[ऽ]घट एव स्यात् [13]घटश्च न भवेत्, अघटासत्त्वाभावात् घटसत्त्वाभावाच्च । किं कारणम् ? सदसन्न भवति इति घटस्याघटत्वेनात्मासद्रूपेणापि पटादिना भवनात् । ततः को दोषः ? **ततश्च** इदं दोषजातमनिष्टमापद्यते—**भेदो भेदान्तरे**त्यादि यावदित्यादि **'आदि'**ग्रहणात् **सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः** [ प्र० समु० ५।२८ ] इति वा ४०८-१

---

१ पृ० ६१५ पं० १८ ॥　२ पृ० ६१५ पं० १८ ॥　३ पृ० ६१५ पं० १९ ॥　४ "भेदो भेदान्तरार्थं तु विरोधित्वादपोहते । सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः ॥" इति सम्पूर्णा कारिका । दृश्यतां पृ० ४२६-१ ॥ ५ दृश्यतां पृ० ६१५ पं० १९ ॥　६ **सदित्यन्न न भवति** प्र० ॥　७ **पटस्यासतो** भा० । अयं भा०पाठोऽपि कथञ्चित् सङ्गच्छेत ॥　८ **°नाचष्टत्वत्वे** प्र० ॥　९ **तत्रैव** प्र० ॥　१० दृश्यतां पृ० ५५३ पं० २ ॥ ११ **°भावतायाम्** भा० ॥ १२ दृश्यतां पृ० ६१५ पं० १९ ॥　१३ **घटस्य न** य० ॥

**इत्यादि यथार्थं न भवति। नापोहेताप्येवं विरोध्यविरोधित्वात्।**

**अथ युगपदयुगपद्भाविसर्वभावभेदभवनस्य भवननियमो घटाद्यसद्व्युदासेनेति। तदपि न, विदितभवनानुवादत्वात् सदभ्युपगमादसत्सत्त्वात्। नैव चैवं स्वार्थविशेषगतिः स्यात्, प्रतिपक्षापक्षेपणक्षीणशक्तित्वात्, [1]साध्यनिर्देशः प्रतिज्ञा**

---

**यथार्थं** यथा त्वयाभिवाञ्छितं तथा **न भवति,** अनृतं तदित्यर्थः। अत्र प्रयोगः–**नापोहेताप्येवम्,** त्वदुक्तेन विधिना '[2]सन्नसन् न भवति' इति **विरोधित्वात्** अस्मन्मतेन 'सन्नसन् भवति' इत्यविरोधित्वात् द्विधापि पक्षधर्मसिद्धेः **विरोध्यविरोधित्वा**दिति। [3]यथा सदित्यसदेव अनपोहात् विरोधित्वेऽपि सति अविरोधित्वात् तथा 'वृक्षः शिंशपा' इति अवृक्षाशिंशपादि नापोहेतेत्यन्यापोहाभावः।

**अथ युगपदयुगप**दित्यादि यावद् **व्युदासेनेति।** स्यान्म[4]तम्-नाहं ब्रवीमि युगपद्भाविनां घटादिरूपादीनां भावानां शिवकादिबालादीनां [5]वाऽयुगपद्भाविनां भेदभवनेऽन्यस्याभवनं नास्तीति, किं तर्हि? संवृतिसत्त्वाद् घट एवासन् सन्तानपतिताश्च रूपादय एवासन्तः क्षणिकत्वाद् घटरूपादिसंवृति[6]सतीं मुष्टिपङ्क्त्यादिवदसत्त्वात् सन्नसन्न भवतीति। तस्माद् **युगपदयुगपद्भाविसर्वभावभेदभवनस्य भवननियमः** '[7]सन्नेव तत्व(त्त ?)द् भवति' इत्युच्यते **घटाद्यसद्व्युदासेनेति।** इति हेत्वर्थे, अस्मान्न्यायादप्यदोष इति।

अत्रोच्यते–**तदपि न, विदितभवनानुवादत्वात्,** एवंवादिनस्ते घटादिरूपाद्यसत्त्वात् तदप्रसिद्धौ घटो रूपादिर्वा भवति न भवति अपोह्यते नापोह्यते वा स्वार्थो न स्वार्थ इत्याद्यनुवादायुक्तिः, प्रसिद्धविदितार्थविषयत्वादनुवादस्य। अनुवदता च त्वया घटो रूपादि च 'सत्' इत्यभ्युपगतम्, ततः **सदभ्युपगमात्** सुतरा[8]मसत्सत्त्वमापन्नम्, अतोऽसत्सत्त्वादुक्तदोषाविमोक्षस्तदवस्थ एव।

४०८-२ **नैव चैव**मित्यादि। रूपादिव्यतिरिक्तघटाद्यसत्त्वाभ्युपगमे अनिर्देश्यपरमनिरुद्धक्षणिकसन्तानिव्यतिरिक्तसन्तानरूपाद्यसत्त्वाभ्युपगमे च घटादिविशेषः स्वार्थ इति वचनमगतिकम्, नैव 'घटोऽयम्' इति **स्वार्थविशेषगतिः स्यात्** 'अघटो न भवति' इत्यर्थगतेरभ्युपगमे। कस्मात्? **प्रतिपक्षापक्षेपणक्षीणशक्तित्वात्,** 'असन्न भवति' इति प्रतिपक्षस्यापक्षेपणे क्षीणा शक्तिरस्य घटशब्दस्य, यत्र च शब्दे प्रतिपक्षापक्षेपणक्षीणशक्तित्वं तस्य स्वार्थविशेषवचनगतिर्नास्ति, यथा **अक्षपाद**पक्षलक्षणे **'साध्यनिर्देशः प्रतिज्ञा'**

---

१ दिङ्नागवचनेनैव दिङ्नागमतमत्र निराक्रियते। तथाहि दिङ्नागेनोक्तमक्षपादं प्रति—"**साध्यनिर्देश इत्यत्र सिद्ध्यभावे कृतार्थता। तथा चासिद्धदृष्टान्तहेतुवादः प्रसज्यते ॥ ३।३ ॥** नैयायिकास्तु 'साध्यनिर्देशः' [न्या० सू० १।१।३३] इति। अत्र सिद्ध्यभावे कृतार्थता। 'साध्य'वचनं ह्यत्र सिद्धिनिवृत्तौ चरितार्थत्वात् साध्यविशेषे नावतिष्ठते। तथा चासिद्धदृष्टान्तहेतुवादः प्रसज्यते। यथा शब्दो नित्यः, अस्पर्शत्वात्, बुद्धिवत् [इति PSV[1]]। एवं चाक्षुषत्वादनित्य इति। इदमपि साध्यनिर्देशात् प्रतिज्ञा प्रसज्यते।"—**प्र० समु० वृ०** ३।३। PSV[1] C. ed. पृ० ४१, N. ed. पृ० ४५ A.। PSV[2] N. ed. पृ० १२७ A, P. ed. पृ० १२५ B। दृश्यतां पृ० ४३६-१। **प्र० वार्तिकालं०** पृ० ५५९, ५६३। **प्र० वा० म०** पृ० ४७०॥ २ **सदसन्** य०॥ ३ **यप्दा** भा०॥ ४ °**तंम नाहं** प्र०॥ ५ (**चायुग**° ?)॥ ६ °**सती** प्र०॥ ७ 'सन्नेव **न त्वसन्** भवति' इति 'सन्नेव **न त्वसद्** भवति' इति 'सन्नेव **तद्** भवति' इति वा पाठोऽप्यत्र सम्भाव्यते॥ ८ °**मसत्त्वमा**° य०॥

[न्या० सू० १।१।३३] इति वाक्ये [1]साध्यविशेषागतिवत् । घटादिसंवृत्त्यर्थासत्त्वादगतिरेव सामान्यार्थस्यापि, असत्त्वेनाभ्युपगतत्वात् । [2]अर्थविशेषश्च तवावाच्य एव ।

**अस्मन्मतेन तु यदा तदाऽनेनैव विषयेण भवितव्यम्, उक्तवत् । तथा चान्यापोह उपेक्ष्यः ।**

**ननु चात्राप्यपोहो देशकालभेदानां परस्परतः । अत एवोपेक्ष्यः । भवतु वा**

---

[न्यायसू० १।१।३३] इत्यस्मिन् वाक्ये साध्यहेतुदृष्टान्ताभासयोरपि असाध्यत्वनिवृत्तिलक्षितयोः साध्यत्वात् साध्यविशेषस्वार्थागतिः [3]तथा[ऽ]घटो न भवतीति [4]ऽघटनिवृत्तौ चरितार्थत्वाद् घटस्वार्थविशेषागतिः स्यात् ।

स्यान्मतम्—साध्यसामान्यगतिवद् घटसामान्यगतिः स्यादिति । तन्न, **घटादिसर्वसंवृत्त्यर्थासत्त्वा-[5]दगतिरेव सामान्यार्थस्याप्यसत्त्वेनाभ्युपगतत्वात्** त्वयैव, अत एव चास्माभिरे[6]वमिति शि(विशे)षितमनन्तरातीतासद्वस्तु आम्नानात् असत्योपाधिसत्यशब्दार्थवादिनोऽस्य नयस्य मतेनापि सामान्यार्थावाच्यत्वाद् नास्ति शब्दस्य स्वार्थः । इतश्च नास्ति; यस्मात् **अर्थविशेषश्च तवावाच्य एव,** यथोक्तम्—

नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते ।
तस्य पूर्वमदृष्टत्वात् सामान्यं तूपदेक्ष्यते ॥ [  ] इति ।

सामान्यस्यासत्त्वाद् विशेषस्यावाच्यत्वात् कतमोऽन्यः स्वार्थ इति, नास्ति त्वन्मतेनैव ।

अस्मन्मतेन तु अभिधेयो विधिनैवावश्यम्, यस्मादस्य च वाक्यस्य **यदा तदाऽनेनैव विषयेण भवितव्यम्,** शब्दाभिधेयेनार्थेन चेत् कार्यं सुदूरमपि विचाराध्वना गत्वा यस्मिन् कस्मिंश्चित् काले ४०९-१ विशेषस्यैव वस्तुत्वादन्यस्यार्थस्याभावादनेन विशेषेणैव विषयेण भवितव्यम्, नान्येन । किमिव ? **उक्तवत् ।** [7]**ननु युगपद्भूतपटाद्यभवनेनैव** इत्यादि यावद् **भवनाभवनेन च भवति 'सन्' इति, अन्यथाऽनुपपत्तेः ।** **यदि तु सदसन्न भवेत्** इत्यादिना यावत् [8]**साध्यविशेषागतिवत्** इत्येतदवधिना ग्रन्थेन असत्त्वस्यापादितत्वात् । **तथा चान्यापोह उपेक्ष्यः,** यस्मादन्या[न]पोहरूप एव भावस्तस्मादन्यस्यापोहो नास्तीत्युपेक्ष्योऽन्यापोहः ।

आह—**ननु चात्राप्यपोहो देशकालभेदानां परस्परतः ।** देशतः 'पटो घटो न भवति, घटोऽपि पटो न भवति' इति परस्परतोऽपोहः सिद्धः, तथा 'रूपं रसो न भवति रसोऽपि रूपं न भवति' इति । कालतः पूर्वक्षण उत्तरक्षणभाव्यर्थो नास्ति, उत्तरः पूर्वो न भवति' इति परस्परापोहसिद्धिरेवेति । अत्रोच्यते—**अत एवोपेक्ष्यः,** यस्मात् 'परस्परता विधिरूपैव' इत्यनेकधा प्रूरूपितं तस्माद् '[9]विधेरेव विशेषविषयस्य सत्त्वात् ततोऽन्यस्य शब्दार्थस्याभावात् पारस्पर्यस्य विशिष्टार्थविषयत्वाद् विधेरेव व्यावृत्तिरूपत्वाच्चोपेक्ष्योऽन्यापोह इति सुष्टूक्तम् ।

---

१ दृश्यतां पृ० ६१५ पं० १९ ॥ २ तुलना—"सामान्यार्था गिरोऽन्येषां विशेषो नाभिलप्यते । सामान्याभावतस्तेषां मृषैव सकला गिरः ॥ ३१ ॥"—आप्तमीमांसा ॥ ३ **तथा घटो** य० । **तथा टो** भा० ॥ ४ **ऽघट°** य० । **घट°** भा० ॥ ५ **°त्वागतिरेव** प्र० ॥ ६ **°मिह विशेषित°** इत्यपि पाठोऽत्र सम्भाव्यते । तथा चानेन शब्दनयेन सामान्यस्याभ्युपगतत्वादसंगतिपरिहाराय टीकाकृद्भिः **'त्वयैव'** इति विशेषितमित्याशयो भवेत् ॥ ७ दृश्यतां पृ० ६१३ पं० १ ॥ ८ दृश्यतां पृ० ६१५ पं० १ ॥ ९ **विधिरेव** प्र० ॥

**तत्रापोहः, तथापि सर्वविशेषयुक्तस्यैव स्वार्थस्य गमनमुपलक्ष्यते। न च पूर्वदृष्टस्य, अज्ञातज्ञानार्थत्वाच्छ्रोतुः। एवं च—**

**अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते।**
**तस्य पूर्वमदृष्टत्वे सामान्यादुपसर्जनात्॥**

**अतद्भेदत्वे सामानाधिकरण्याभावः, असदसच्छब्दाभिधेयवस्त्वविशेषत्वे साक्षादनुक्तेः सतः।**

---

अभ्युपेत्यापि त्वदुक्तन्यायेनाऽन्यापोहमस्मदिष्टविधिरूपाभिधानमेव ब्रूमः—**भवतु वा तत्रापोहः**
४०९-२ **तथापि सर्वविशेषयुक्तस्यैव स्वार्थस्य गमनमुपलक्ष्यते,** स्वरूपविधिविनाभूतस्यासम्भवादपोहस्य[1] विशेषाणामेव सद्भावादित्युद्ग्राहितार्थवद्[2] विधिरूपेणैवेति।

यदप्युक्तम्—पूर्वदृष्टसामान्येन धूमेनाग्न्यनुमानवदभिधानं सामान्यस्य शब्देन न विशेषस्य पूर्वमदृष्टत्वादिति; तद् **न च पूर्वदृष्टस्य,** न हि लोके पूर्वप्रतिपादनाय शब्दः प्रयुज्यते प्रकाशितप्रकाशनवैयर्थ्यवत्। क्षणिकत्वाच्च पूर्वदृष्टश्चिरनष्टः क्वासौ? कथं वा शब्देनोच्यते? ननूक्तम् 'पूर्वदृष्टसामान्येन' इति, उक्तमिदम्, अयुक्तमुक्तम्, सामान्यस्य संवृत्याख्यस्यापोहाख्यस्य चासत्त्वात्। अतो न पूर्वदृष्टस्य गतिः शब्देन, अत आह—**न च पूर्वदृष्टस्य,** न हि स पूर्वदृष्टः, नापि पूर्वदृष्टेनार्थः, किं कारणम्? **अज्ञातज्ञानार्थत्वाच्छ्रोतुः** श्रोता ह्यज्ञातार्थज्ञानेनाऽर्थी[3], तस्य ज्ञानाधानार्थः शब्दः प्रयुज्यते वक्त्रा न दृष्टज्ञानार्थम्, उक्तार्थानामप्रयोगात्।

**एवं चार्थशब्दविशेषस्येत्यादि** श्लोकः। एवं च कृत्वाऽज्ञातार्थत्वाद्[4] विशेषार्थस्यैव सत्त्वादित्थमस्माभिः पठ्यते—

**अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते।**
**तस्य पूर्वमदृष्टत्वे[5] सामान्यादुपसर्जनात्॥** इति।

यथासङ्ख्यमर्थविशेषस्य वाच्यता शब्दविशेषस्यैव वाचकतास्माभिरिष्यतेऽनयोरेव सत्त्वात्, न सामान्यार्थशब्दयोरसत्त्वात्। **तस्य** विशेषस्य **पूर्वमदृष्टत्वात्** स एवाज्ञातत्वाज्ज्ञाप्यते, केनोपायेन चेत्, उच्यते—**सामान्यादुपसर्जनात्।**

**अतद्भेदत्वे सामानाधिकरण्याभावः** 'अतद्भेदत्वे' इति किमुक्तं भवतीति तद् व्याचष्टे—**अस-**
४१०-१ **दसदित्यादि,** 'सत्' इत्युक्तेऽसदपोह्यते 'असन्न भवति' इति तदसदसत्, तदेवासदसच्छब्देनाभिधेयं वस्तु असद्व्यावृत्तिसामान्यम्, तस्य विशेषा भेदा न भवन्ति घटादयः सत्वन्तः, तेषा**मसदसच्छब्दाभिधेयवस्त्वविशेषत्वे साक्षादनुक्तेः सतः** सामानाधिकरण्याभाव इति वर्तते।

---

१ **स्वरूपविधिनाभूतस्या°** य०। **स्वरूपविधिनाऽभूतस्या°** भा०। दृश्यतां पृ० ६१० पं० ६॥ २ °**दित्युद्युद्ग्राहि°** प्र०। अत्र °**दित्याद्युद्ग्राहि°** इति पाठः सम्भाव्यते॥ ३ °**तार्थज्ञानेनार्थं** य०। °**तार्थज्ञानेनार्थी** भा०॥ ४ '**ऽज्ञातज्ञानार्थत्वाद्**' इति पाठः सम्यग् भाति॥ ५ पृ० ४६०-२ इत्यत्रापि °**दृष्टत्वे** इत्येव पाठः। नवमारे तु °**दृष्टत्वात्** इति पाठो निर्दिष्ट इति ध्येयम्॥

**कथं साक्षान्न ब्रवीति सत् ? यस्मादन्यापोहेऽपि तावत् साक्षात् प्रवर्तमानस्तद्गतं [1]नित्यत्वादिभेदं नाक्षिपति किमङ्ग पुनरन्यापोहेन व्यवहिते तद्गतान् भेदान् घटादीनाक्षेप्स्यति ? एतदर्थव्यक्तीकरणार्थं 'सदित्यसन्न भवति' इत्यवश्यं भवतिशब्दप्रयोगाद् 'भवति' इत्यर्थो मुख्यः श्रयणीयोऽव्याहतः। भेदे तु भवत्यर्थसम्भेदनं स्यात् । असत्त्वविविक्तसत्त्वप्राप्तावेवात्ययस्ते, कुत एव तदन्यापोहः । भवत्यसम्भेदेऽविविक्तैकसत्त्वप्राप्तौ तवान्यापोहयत्नवैयर्थ्यमेव, घटस्य पटभावादपि ।**

एतद् भावयितुकामः प्रश्नयति—**कथं साक्षान्न ब्रवीति सदि**ति । तस्य भावनार्थं व्याकरणं जातिमत्पक्षतुल्यदोषत्वापादनाय च—**यस्मादन्यापोहेऽपी**त्यादि यावत् **तद्गतान् भेदान् घटादीनाक्षेप्स्यती**ति, जातिमतीवापोहेऽपि तावदसद्व्यावृत्तिमात्रे साक्षात् प्रवर्तमानोऽन्यापोहसामान्यगतं नित्यत्वादिभेदं नाक्षिपति अन्यापोहेऽपक्षीणशक्तित्वात्, **किमङ्ग पुनरन्यापोहेन व्यवहिते** 'सदित्यसन्न भवति' इत्यसदसत्त्वेनावच्छिन्नेऽभिधेयभागेऽपोहवति **गतान् घटादीन् भेदानाक्षेप्स्यती**ति सम्भावनास्ति ? इति पिण्डार्थः । [2]वक्ष्यत्यस्यार्थस्य तदुक्तमेव सभावनं दृष्टान्तम् । सच्छब्दाभिप्रायस्यैवोपवर्णनेनान्यापोहवादिनं तावदुद्घट्टयन्निदमाह—**एतदर्थे**त्यादि यावत् **कुत एव [3]तदन्यापोहः ?** एतस्यान्यापोहार्थस्य व्यक्तीकरणार्थं 'सदित्यसन्न भवति' इति वाक्यमवश्यमुपादेयम्, सच्छब्दमात्रादनभिव्यक्तेः । तत्र चावश्यं 'भवति'शब्दः प्रयोक्तव्यः, क्रियापदमन्तरेण सच्छब्देन सह प्रयुक्तनञोरर्थाभावात् भवतिशब्दसहितयोः साफल्यात् । यथोक्तम्—**[4]यत्राप्यन्यत् क्रियापदं न श्रूयते तत्राप्यस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति गम्यते** [पा० म० भा० २।३।१] इति । तस्माद् भवतीत्य[5]र्थः स एव मुख्यः श्रयणीयः, ४१०-२
कोऽसौ ? सदर्थ एव । स च **अव्याहतः** क्वचिदव्यावृत्तो [6]भावे सर्वत्रैवैष्टव्यः । भेदे तु घटे वर्तमानं सत्त्वं पटादिषु न वर्तते [इ]त्यसदपि स्यात्, एवं च भवत्यर्थसम्भेदनं स्यात्, मा भूदेष दोष इति तद्भयादसम्भेदाय भेदानाक्षेप एव, गमिष्यमाणघटादिद्रव्यप्रभेदस्य तिरस्कृत[7]पटाद्यपेक्षा सत्त्वस्य प्राप्तिर्मनोरथैरपि न लभ्येत, **असत्त्वविविक्तसत्त्वप्राप्तावेवाऽत्ययस्ते, कुतस्ततोऽन्यस्यापोहः ?** [8]असदसत्वत

१ नित्यत्वादयो जातिधर्मा अपोहे संगच्छन्त इति दिङ्नागस्याभिप्रायमत्र निराकरोति । उक्तं हि दिङ्नागेन—"**जातिधर्मव्यवस्थितिः** ॥ ५।३६ ॥ जातिधर्माश्चैकत्व-नित्यत्व-प्रत्येकपरिसमाप्तिलक्षणा अत्रैव तिष्ठन्ति, अभेदादाश्रयानुच्छेदात् कृत्स्नार्थपरिसमाप्तेश्च । एवं दोषाभावाद् गुणोत्कर्षाच्च शब्दोऽर्थान्तरनिवृत्तिविशिष्टानेव भावानाह ।"—**प्र० समु० वृ०** ५।३६ ॥ PSV[1] c. ed. पृ० ७५, N. ed. पृ० ८३ B. । PSV[2] N. ed. पृ० १६७ B. । दृश्यतां **तत्त्वसं पं०** पृ० ३१६ । तुलना—"अत्र भिक्षुणापोहपक्षे जातिपक्षतुल्यत्वमतिदिष्टम्, यथाह—'जातिधर्मव्यवस्थितिः'—इति । 'जातिधर्माश्चैकत्वनित्यत्वप्रत्येकपरिसमाप्तिलक्षणा अत्रैव तिष्ठन्ति' इत्यर्थः । ते इमे वस्तुधर्मा अवस्तुन्यतिदिश्यमाना असूत्रपटकारित्वं सूचयन्तीत्याह—अपि चैकत्वनित्यत्वप्रत्येकसमवायिताः । निरुपाख्येष्वपोहेषु कुर्वतोऽसूत्रकः पटः ॥ १६३ ॥ इति ।"—**मी० श्लो० वा० शर्करिका** पृ० ७४ ॥ २ दृश्यतां पृ० ६१९ पं० ३ ॥ ३ **तदसन्यापोहः** य० ॥ ४ दृश्यतां पृ० २६१ पं० ५ ॥ ५ **°त्यर्थ स एव** प्र० ॥ ६ **भावे त्तैवैष्टव्यः** य० । **भावे न्नैवैष्टव्यः** भा० । दृश्यतां पृ० ६१८ पं० ७ । **'भावे सन्नेवैष्टव्यः'** इत्यपि पाठोऽत्र भवेत् ॥ ७ **°नापेक्ष** य० ॥ ८ **असत्वत** भा० ॥

**[1]अयं तु गुणधर्म एव स्वतोऽन्यान्……[2]सामानाधिकरण्याभावः। स्यादेवम्—अनाक्षिप्तैरव्याप्तैरपि सामानाधिकरण्यं भविष्यति विवक्षावशात्। [3]न ह्यसत्यां व्याप्तौ सामानाधिकरण्यम्, रूपशब्देन मधुरादीनामनाक्षिप्तत्वादव्याप्तत्वात् तच्छब्दैः सामानाधिकरण्यं न भवति, व्याप्तौ तु भवति, यथा रूपमाम्लं रूपं नीलमिति।**

---

एवाभिधाने शक्त्यभावः दूरत एवान्यापोह इति न स्वार्थाभिधानं नान्यापोहं वा कुर्यात् सच्छब्दः। तस्मादप्रतिपत्तिरेव शब्दार्थ[स्य] स्यादिति।

अथ मा भूद् भवत्यर्थस्य सम्भेदनं पटाद्यसत्त्वेनेति सर्वत्र भवत्यर्थ एव चेदिष्यते ततः **भवत्यसं[4]म्भेदेऽविविक्तैकसत्त्वप्राप्तौ तवान्यापोहयत्नवैयर्थ्यमेव** प्राप्तम्। किं कारणम्? **घटस्य पटभावादपि,** यदि सन् घट इत्युक्ते पटादिरपि सन्नेवेति सर्वस्य सत्त्वेनैवाक्रान्त[5]त्वे च 'सन्नसन्न भवति' इति किंविषयोऽन्यापोहः स्यात्, असन्नामकार्थस्यात्यन्तमभावात्? इत्यलमत्युद्धट्टनेन, प्रस्तुतमस्तु।

**अयं तु गुणधर्म** एवेत्यादि। विशेषणं गुणः, तस्य धर्म एषः, **स्वतोऽन्या**नित्यादि गतार्थं यावत् **सामानाधिकरण्याभावः।** सच्छब्दो [6]गुणः विशेषणात् [7]नीलादिवदिति पिण्डार्थः। विशेषणमनुग्राहकमनु[8]ग्राह्यं विशेष्यं प्रधानम्।

**स्यादेन(व)**मित्यादि। टीकायां चोदितम्–**अनाक्षिप्तैरव्याप्तैरपि सामानाधिकरण्यं भविष्यति विवक्षावशात्** 'इदं विशेष्यमिदं विशेषणम्' [ ] इति। अत्र **भाष्येण** पर एवोत्तरमाह–
४११-१ **न ह्यसत्यां व्याप्ता**वित्यादि साधर्म्यवैधर्म्याभ्यां यावद् **[9]रूपमाम्लं रूपं नील**मिति। **अनाक्षिप्तत्वादव्याप्तत्वा**दिति हेतवः।

---

१ 'अयं तु गुणधर्म एव स्वतोऽन्यान् भेदानाक्षेप्तुमसमर्थत्वाद् नीलादिवत्। अतो घटादिभेदानामनाक्षिप्तत्वादतद्भेदत्वे सामानाधिकरण्याभावः' इति 'अयं तु गुणधर्म एव स्वतोऽन्यान् व्यावर्त्य सत्वद्रव्याभिधानात्, नीलादिवत्। ततश्च घटादिभेदानामनाक्षिप्तत्वादतद्भेदत्वे सामानाधिकरण्याभावः' इति वा कश्चिदाशयोऽत्र सम्भाव्यते। तुलना–पृ० ६०७ पं० २६॥ २ तुलना–"एवमपोहमात्राभिधाने दोषसाम्यमुक्त्वा जातिमदभिधानेऽपि 'तद्वतो नास्वतन्त्रत्वात्' [ ] इत्यादिना सामानाधिकरण्याभावादि यद् **भिक्षुणो**क्तं तदपोहवदभिधानेऽपि समानमित्युपपादयिष्यन् पक्षपरिग्रहं तावत् करोति—'अथान्यापोहवद्वस्तु वाच्यमित्यभिधीयते'। इति अत्र **भिक्षु**राह–'जातिशब्दः सदादिस्तद्विशिष्टमेव द्रव्यमभिदधन्न तद्गतमेव घटादिविशेषरूपमाक्षिपति। परतन्त्रो ह्यसौ सत्तां निमित्तीकृत्य द्रव्ये वर्तते, न तु स्वतन्त्रः सर्वविशेषणविशिष्टं द्रव्यं वक्ति। ततश्च घटादेस्तेन सच्छब्देनानाक्षेपान्नास्ति तद्वाचिना सामानाधिकरण्यम्। न ह्येकोपाधिविशिष्टे द्रव्येऽभिहिते परोपाधिना सामानाधिकरण्यं भवति। यथा मधुरशब्देन माधुर्योपाधिविशिष्टं खण्डद्रव्यमभिदधता तद्गतापरशुक्लाद्यनाक्षेपात् तेन न सामानाधिकरण्यं यथैतन्मधुरं श्वेतमिति तथैतेनापि न भाव्यं 'सन् घटः' इति' [ ] इति। तदेतत् सर्वमस्मिन्नपि पक्षे समानमित्याह—'तत्रापि परतन्त्रत्वाद् व्याप्तिः शब्देन दुर्लभा॥ १२०॥' इति। तत्रापि ह्यसदपोहविशिष्टद्रव्यं प्रतिपादयन् सच्छब्दः परतन्त्रो वर्तते नासौ तद्गतमपरमघटादिव्यावृत्तं सदाक्षेप्तुं समर्थ इत्यभिप्रायः। अतश्च तथैव खण्डादिद्रव्ये मधुरादिभिः शब्दैरात्मीयामधुराशुक्लादिव्यावृत्तिमात्रप्रवृत्तेः परस्परं शुक्लमधुरत्वादिव्याप्त्यसम्भवेनाक्षेपो नास्ति। अतश्च मधुरं शुक्लमिति विशेषणं न भवत्येव। सच्छब्देनाप्यसद्व्यावृत्तिमात्रविशिष्टद्रव्याभिधायिना अपरा तद्गताघटादिव्यावृत्तिराक्षेप्तुं न शक्यते तत कथमत्रापि 'सन् घटः' इति सामानाधिकरण्यम्।"–**मी० श्लो० वा० शर्करिका.** पृ० ६०॥ ३ तुलना पृ० ६०७ पं० २७॥ ४ °**सम्भेदे विवि** प्र०॥ ५ °**न्तत्वे व य**°। (°**न्तत्वेन**??)॥ ६ **गुण विशे**° प्र०॥ ७ **नीलावदिवदिति** य०॥ ८ °**ग्राह्यं विशेष्यं प्रधान** भा०। °**ग्राह्य प्रधान** य०॥ ९ **रूपमंलंरूपं नीलमिति** य०। **रूपं नीलमिति** भा०॥

**श्रुतगुणगतभेदाभेदत्वादनाक्षेपः। यथा [ शुक्लशब्देन मधुरादीनाम् । अत्र च स्वरूपापोहगुणा गुणत्वेनोच्यन्तेऽनुग्राहकत्वापेक्षया, अपोह-गुण-द्रव्याणि च द्रव्यत्वेन अनुग्राह्यत्वापेक्षया। शुक्लशब्दो**[1] **हि स्वाभिधेयगुणमात्रविशिष्टं द्रव्यमभिदधद् द्रव्ये सतोऽपि मधुरादीन् नैवाक्षिपति, ततश्चातद्भेदत्वम्, एवमिहापि सच्छब्दो हि पूर्वमसन्न भवतीत्यसत्त्वादवच्छिन्नमंशमात्रमभिधाय सत्वद् द्रव्यमभिदधद् नैवाक्षिपति तद्विशेषं तद्विशेषान् वा यत्तत्तद्वत् ] सत्वन्मात्रवदिति सच्छब्दवाच्यार्थाभेदत्वं द्रव्यादीनां घटादीनां वा।**

---

वक्ष्यमाणशुक्लदृष्टान्तभावनार्थमाह–**श्रुतगुणगतभेदाभेदत्वादनाक्षेपः** । श्रुतो गुणो विशेषणं शुक्लसदादि, तद्गता भेदाः शुक्लतरादयो [ द्रव्यादयो ? ] वा, तेषामभेदत्वं तद्वति, अनुवृत्तिपक्षेऽन्यापोहपक्षे वा जातिस्वरूपोपसर्जनमात्रत्वाद् गुणभूतत्वादन्यापोहमात्रोपसर्जनत्वाद् गुणभूतत्वाच्चा[2]तद्भेदत्वादनाक्षेपः । कस्य ? ततो जातेरन्यस्यापोहाद्वान्यस्य तद्वत इति । दृष्टान्तः–**यथे**त्यादि उद्ग्राहितार्थभावनार्थमुदाहरणं पक्षद्वयसाम्यापादनम् । सत्वत्पक्षे शब्दस्वरूपं गुण एव, जाति-गुणौ गुणो द्रव्यं च, द्रव्यं तु द्रव्यमेव, उपकारी गुणः प्रधानं द्रव्यमित्यर्थः । विवक्षावशात्तु प्रतिपाद्यार्थस्य । अपोहपक्षे शब्दस्वरूपं गुण एव, अपोह-गुणौ गुणो द्रव्यं च, द्रव्यं च द्रव्यमेवेति पक्षद्वयेऽपि विशेषणविशेष्यत्वविभागक्रमेण तुल्यदोषत्वापादनेन च सामानाधिकरण्याभावोत्कीर्तनो ग्रन्थो यावत् **स**[3]**त्वन्मात्रव**दिति प्रायो गतार्थः । विशेषस्तु विव्रियते–अत्र च स्वरूप-जाति-गुणा गुणत्वेनोच्यन्ते जाति-गुण-द्रव्याणि च द्रव्यत्वेनेति परेणोक्तत्वान्नोच्यते । **अत्र च स्वरूपापोहे**त्यादि यावद**नुग्राह्यत्वापेक्षये**ति तैत्समानार्थोक्तेः सोऽपि द्रष्टव्यः । एतस्यार्थस्य भावना–**शुक्लशब्दो ही**त्यादि यावत् **ततश्चातद्भेदत्वं** शुक्लाभेदत्वमिति सत्वदभिधानपक्षे दोषोत्कीर्तनं निदर्शनत्वेन गतार्थम् । **एवमिहापि सच्छब्दो हि पूर्वमसन्न भव**तीत्यादि दार्ष्टान्तिकत्वेन ४११-२
सैव परिपाटी तुल्या यावत् **सत्वद्द्रव्यमभिद**[6]**ध**दिति नयेनेत्यतः प्रभृति उदकादिना द्रव्यभेदेन सत्वद् गुणरूपादिगुणभेदेन कर्मगमनादिकर्मभेदेन वा सत्वदिति । **तं विशेष**मिति एकं वापोहवन्तं द्रव्यादिभेदानामन्यतमं **तान् विशेषान्** वेति सर्वान् भेदान् वा '**नैवाक्षिपति**' इति व[7]र्तते । **व(?)यत्तत्तद्व**दिति, '[8]तिष्ठन्तु तावद् विशेषाणामन्यतमः सर्वे वा, किं तर्हि ? विवक्षितमेकं घटादि वा गुणादिविरहितं [9]तद्वस्तु नैवाक्षिपति नाप्यारातीयं ततो द्रव्यादि वा तद्वद्वस्तु तं विशेषं तद्विशेषान् वा, नारातीयाँ[10]नामपि विशेषाणामवि(भि?)धातेति । **सत्वन्मात्रव**दिति, यथा स[11]त्वान्निराक्रियते सत्वन्मात्र[12]पक्षेऽनाक्षेपस्तथा त्वदिष्टेऽन्यापोहवत्पक्षेऽपि । **इति सच्छब्दवाच्यार्थाभेदत्वं द्रव्यादीनां घटादीनां** वेति भावितार्थानुसारेणोपसंहारः ।

---

१ तुलना पृ० ६०७ पं २७ ॥ २ °**च्चतद्भेदत्वादनापेक्षः** प्र० ॥ ३ **सत्वमात्र°** प्र० । दृश्यतां पृ० ६१९ पं० २५ ॥ ४ °**जातिगुण गुणत्वेनोच्यते** य० । °**जातिगुणत्वेनोच्यन्ते** भा० ॥ ५ **तत्समानोर्थोक्तेः** प्र० । 'तत्समानोऽर्थोक्तेः' इत्यपि पाठोत्र भवेत् ॥ ६ °**दवदिति** प्र० ॥ ७ ( वर्ततेऽत्र यत्तत्तद्वदिति ? ) ॥ ८ ( तिष्ठतु ? ) ॥ ९ ( तद्वद्वस्तु ? ) ॥ १० °**याणमपि विशे**° य० । °**याणाम विशे**° भा० ॥ ११ **यथा त्वनिराक्रियते** प्र० । 'यथा सत्वान्निराक्रियते' इति पाठोऽत्र सम्भाव्यते । सदस्ति अस्येति सत्वान्, यथा स निराक्रियते त्वया सत्वन्मात्रपक्षेऽनाक्षेपात् तथाऽन्यापोहवत्पक्षेऽपीत्याशयो भाति ॥ ११ अत्र '°**पक्षेऽनाक्षेपा**त्तथा' इत्यपि पाठः स्यात् ॥

**सच्छब्दो हि असत्त्वादवच्छिन्नं धर्मिणोंऽशमात्रमभिधत्ते, तत्स(त्स्व)रूपजातिविशिष्टद्रव्याभिधायित्वात्, शुक्लश्रुतिवत्। द्रव्यशब्दश्च अद्रव्यापोहमात्रमभिधत्ते न तद्विशेषम्। इत्थं तयोरवच्छिन्नभागमात्रविषयत्वादभेदवत्त्वान्निर्विषयत्वात् कुत एकार्थता? इत्यसदसद्रूपेऽपि अतद्भेदत्वादनाक्षिप्तत्वादसामानाधिकरण्यम्। अत्रापि सच्छब्देन असद्व्यावृत्तिमात्रविशिष्टद्रव्याभिधानात् सतोऽपि द्रव्यादीनामनाक्षेपः, ततश्च तदभेदत्वम्।**

**ननु च तत्र दृष्टं सामानाधिकरण्यम्—शुक्लं खण्डम्, तच्च मधुरम्, शुक्लतरः**

---

**सच्छब्दो** ह्रीत्यादि कारणभावना। 'सदित्यसन्न भवति' इति **असत्वादवच्छिन्नं धर्मिणोंऽशमात्रं सच्छब्दोऽभिधत्ते** न तस्यान्यं कञ्चित्, अपोहनित्यत्वाद्यंशवत्। मा मंस्थाः–[1]नैवं संभवतीति, अत आह–**तत्स(त्स्व)रूपजातिविशिष्टद्रव्याभिधायित्वात्**, [2]व्याख्यातार्थ एवायं हेतुः, दृष्टान्तानुगुण्येन तु पक्षद्वयप्रसिद्ध्यापादनार्थं **तद्व**दिति सामान्येनोक्तः। **शुक्लश्रुतिव**दिति, अशुक्लनिवृत्तिमात्रं धर्म्यंशं शुक्लशब्दोऽभि[द]धत्तस्यैवांशान्तरं नाभिधत्ते यथा तथा सच्छब्दोऽसन्निवृत्ति[3]मात्रमुक्त्वा नान्यत् किञ्चिदिति।

४१२-१ '[4]तदुपसर्जनं द्रव्यमाह' [ ] इत्यत्र **द्रव्यशब्दश्च** 'अद्रव्यं न भवति' इत्येताव**दद्रव्यापोहमात्रमभिधत्ते** तेनैव न्यायेन, [न] **तद्विशेषं** न द्रव्यविशेषम्। ततः किमिति चेत्, **इत्थं तयोः** सद्द्रव्यशब्दयो**रवच्छिन्नभागमात्रविषयत्वा**दभेदवत्त्वम्, **अभेदवत्त्वाद्** निर्विषयत्वम्, **निर्विषयत्वात् कुत एकार्थता** सच्छब्दद्रव्यशब्दयोः? [5]इत्यतः **असदसद्रूपेऽपि** असद्व्यावृत्तिरूपे सत्यपि न सतो भेदा द्रव्यादयः, न द्रव्यस्य घटादयः, न सच्छब्दस्य द्रव्यादिशब्दाः, तस्मादतद्भेदत्वमनाक्षिप्तत्वात्, [6]अतोऽसामानाधिकरण्यम्। अतद्भेदत्वानाक्षिप्तत्वापादनाय परदूषितपक्षसमानदोषापादनग्रन्थोऽयम् **अत्रापि सच्छब्देने**त्यादिरक्षरविपर्यासेनान्यापोहपक्षेऽपि यावत् **तदभेदत्व**मिति समानः। दृष्टमिष्टं च सामानाधिकरण्यं सत्वदभिधानेऽपोहवदभिधाने [7]चेत्थं न प्राप्नोतीति।

अत्राह–**ननु च तत्र दृष्ट**मित्यादि। अनाक्षिप्तत्वमतद्भेदत्वं चानैकान्तिकं **शुक्लखण्डादिसामानाधिकरण्यदर्शनात्।** अथवा दृष्टविरुद्धं त्वयोच्यते शुक्लशब्दस्वरूप-जाति-गुणानां खण्डद्रव्यस्य [8]वात्यन्तभिन्नार्थत्वात् जातिमत्पक्षेऽपोहवत्पक्षे चेति। पुनः **'तच्च खण्डं मधुरम्'** इति रूपरसयोर्भेदात् द्रव्यस्य रूपरसाभ्यां च भेदादसम्बद्धमेवेदम्। तथा 'शुक्लतरः शुक्लतमः' इति गुणजातिगतप्रकर्षभेदस्य द्रव्येणासम्बन्धः। तथा '[9]शुक्लशङ्खस्य जातिर्नित्या' इति शङ्ख[10]द्रव्य-शुक्लगुण-जाति-तन्नित्यत्वानामत्यन्तं भेदादसम्बन्धः। स च दृष्टः।

---

१ **नैवं न भवतीति** प्र०॥ २ **व्याख्यार्थ एवायं हेतु दृष्टान्तोनुगुण्येनतु** भा०। **व्याख्यार्थ एवायं हेतु दृष्टान्तो तु** य०॥ ३ °**मात्रं मुक्त्वा** इति रम्यं भाति॥ ४ दृश्यतां पृ० ६०७ पं० २६॥ ५ **इत्यत असद**° प्र०॥ ६ **असतो**° य०॥ ७ **वेत्थं न प्रा**° भा०। **चेत्थं प्रा**° य०॥ ८ **वात्यन्त**° प्र०॥ ९ **शुक्ला**° प्र०॥ १० °**द्रव्य**° प्र०॥

शुक्लतमः, शुक्लशङ्खस्य जातिर्नित्येति । इह वा किं न दृष्टम्-सद्द्रव्यं सद्गुणः सत्कर्मेति ? एतदेव तु न प्राप्नोतीत्युच्यते ।

यथा चैते जातिमत्पक्षे सच्छब्दप्रयोगे घटाद्यनाक्षेपोऽतद्भेदत्वमसामानाधिकरण्यं च दोषास्तथान्यापोहेऽपि, असाक्षाद्वचनत्वात् ।

भवत्साक्षाद्वचने च रूपनीलत्ववद् गुणपर्यायलक्षणं विशिष्टं भवदेव सद्यो वस्त्वभिधीयते प्राधान्येनेति नास्वतन्त्रविशिष्टं भवद्वस्तु । तच्च सदसदुपसर्जनं जात्युपसर्जनं वा ।

यथा चाहुः—सच्छब्देन सह भेदशब्दा असमानाधिकरणाः, तदभिधानेऽना-

---

अत्र दोषस्तादवस्थ्यादेवमुच्यते-इह वा किं न दृष्टं 'सद्द्रव्यं सद्गुणः[1] सत्कर्म' इति ? न हि दृष्टाद् गरिष्ठं प्रमाणमस्ति, तस्यानतिक्रमणीयत्वात् । किं तर्हि ? एतदेव तु दृष्टं सामानाधिकरण्यं गुणशब्दत्वे विशेषणद्वारेण शब्दस्वरूप-[2]जात्युपसर्जने तद्वति वाच्येऽपोहवति वा न प्राप्नोतीति उच्यते परं प्रति दोषः । ४१२-२

एतदुभयं तुल्यदोषमित्यापादयति-यथा चैते जातिमदित्यादि । यथा परपक्षे सच्छब्दप्रयोगे घटाद्यनाक्षेपोऽतद्भेदत्वमसामानाधिकरण्यं च दोषाः शुक्लशब्दमधुरा[3]नाक्षेपादिदृष्टान्तास्तथा अन्यापोहपक्षे सच्छब्देऽपि [4]जातिमत्सच्छब्दघटाद्यनाक्षेपादिदृष्टान्ताः । उभयत्र तुल्यो हेतुः-असाक्षाद्वचनत्वादिति ।

तच्चैतत् सर्वं दोषजातमसत्योपाधिसामान्यसोपानारोहिसत्यभवदर्थविशेषसाक्षाद्वचनपक्षे नास्ति सामानाधिकरण्यं चोपपद्यते इति तत्प्रदर्शनार्थमाह-भवत्साक्षाद्वचने चेत्यादि यावज्जात्युपसर्जनं [5]वेति । रूपनीलत्ववदिति रूपजातिसामान्यासत्योपाध्यनुगतिद्वारेण नीलविशेषस्य सद्यो भवतः सत एवार्थस्य गतिररूपानीलत्वनिवृत्त्यसत्योपाधिद्वारेण वा यथा भवति तथेहास्मदिष्टगुणपर्यायलक्षणं विशिष्टं भवदेव सद्यो वस्तु अभिधीयते प्राधान्येन मुख्ययैव वृत्त्या साक्षाद् । यत्तत्र द्रव्यघटपटादि भेदजातं गुण-कर्म-सामान्य-विशेषादि वा परिकल्पितं तदसत्, संवृतिसत्त्वात् । गुण-पर्यायलक्षणो हि विशेष एव सन्, न[6] अङ्गुलिव्यतिरिक्तमुष्टिवद् बलाकादिव्यतिरिक्तपङ्क्त्यादिवच्चेति द्रव्याद्यपि तदेव इति एतस्माद्धेतोः नास्वतन्त्रविशिष्टं भवद्वस्तु । तच्चोक्तविधिनाऽपोह[7]वत्पक्षापेक्षमसदसदुपसर्जनं जातिमत्पक्षापेक्षं जात्युपसर्जनं वा, द्विधापि न दोष इति । ४१३-१

[8]यथा चाहुरित्यादि । टीकाकारैर्यानि साधनान्युक्तानि जातिमत्पक्षदोषप्रदर्शनार्थानि तान्येवापोहवत्पक्षेऽपि तद्दोषप्रदर्शनार्थानि । तत्र सच्छब्देनेति प्रथमे साधने भेदशब्दानां सामान्यशब्देन सह सामानाधिकरण्याभावः पक्षीक्रियते । द्वितीये भेदैः सह सामान्यस्य । तदभिधानं गुणभूतेनान्यापोहेना[9]पोहवतोऽभ्युपगतम्, लक्षणवाक्ये शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते [ ]

---

१ सद्गुणं प्र० । (सन् गुणः ?) ॥ २ °जातिउप° प्र० ॥ ३ °नाक्षेपत्वादिदृष्टान्ता° प्र० ॥ ४ जातिम[त्पक्षव]त् सच्छब्द° इत्यपि संभवेत् पाठः ॥ ५ चेति प्र० ॥ ६ दृश्यतां पृ० ९३ पं० ८ ॥ ७ °पोहावपेक्षापेक्षत्वमसदुपसर्जनं य० । °पोहावपक्षत्वमसदसदुपसर्जनं य० ॥ ८ यथा बाहुरित्यादि प्र० । (यथा वाहुरित्यादि ?) ॥ ९ °पोटवतो° भा० । °पोटगतो° य० ॥

**क्षिप्तत्वाद् भेदानाम्, शुक्लाभिधानानाक्षिप्तमधुरादिवत्। सच्छब्दो भेदैः सहासमानाधिकरणः, सामान्यानभिधायित्वात्, शुक्लशब्द इव मधुरादिभिः सहासामान्यवाची। द्रव्यादिशब्दो वा सच्छब्देन सहासमानाधिकरणः, अतद्विशेषसम्बन्धित्वात्, मधुरशब्द इव शुक्लशब्देन। सच्छब्दो वा असद्व्यावृत्तिमन्तं नाभिधत्ते, घटादिशब्दैः सहासमानाधिकरणत्वात्, अनित्यशब्दवत्। यथा चाह–**

> विद्यमानाः प्रधानेषु न सर्वे भेदहेतवः।
> विशेषशब्दैरुच्यन्ते व्यावृत्तार्थाभिधायिभिः॥ [ वाक्यप० ३।५।४ ]

---

इति वचनात्। भेदानाक्षेपश्चान्यापोहे चरितार्थत्वादिष्टः। अतः सिद्धो हेतुः–**तदभिधानेऽनाक्षिप्तत्वाद् भेदानाम्,** तेषामेव च पक्षीकृतत्वात्। **शुक्लाभिधानानाक्षिप्तमधुरादिव**[1]**दिति** दृष्टान्तोऽपि भावितार्थः।

द्वितीयेऽपि साधने **सच्छब्दे** पक्षीकृते भेदानाक्षेपात् कस्य तत् सामान्यमपोहवद्वस्तु? इति **सामान्यानभिधायित्वं** सिद्धं तस्य। दृष्टान्तः–**शुक्लशब्दो मधुरादिभिः स**[2]**हासामान्यवाची**ति। पूर्वत्र शुक्लशब्दसहयोगावधिका भेदशब्दा एव साध्याः दृष्टान्ताश्च, इह तु भेदशब्दावधिकाः सामान्यशब्दा इति विशेषः।

तृतीये **द्रव्यादिशब्दो वे**ति साक्षाद् विशेषशब्द एव तद्द्वारेण विशेषार्थ एव वा साक्षात् पक्षः। **अतद्विशेषत्वम्,** असदसतः सामान्यस्य न विशेषा द्रव्यादयः, अनाक्षिप्तत्वादुक्तन्यायेन। न च[3] तत् सामान्यं तेषां सम्बन्धि ते वा तस्येति सिद्धमतद्विशेषसम्बन्धित्वम्। **'तद्विशेषासम्बन्धित्वात्, अतद्विशेषसम्बन्धित्वात्'** इति वा पाठान्तरे। **मधुरशब्द इव शुक्लशब्देने**ति गतार्थो दृष्टान्तः।

४१३-२ **सच्छब्दो वाऽसद्व्यावृत्तिमन्तं नाभिधत्ते,** अपोहवतः स्वार्थाभिमतस्याभिधान[4]मेव वा निराकुर्महे। **घटादिशब्दैः सहासमानाधिकरणत्वात्**[5]**,** सच्छब्दस्य घटादिशब्दैः सहासमानाधिकरणत्वं भेदानाक्षेपात् सिद्धम्। **अनित्यशब्दवत्,** 'अनित्यः शब्दः' इत्युक्ते 'नित्यो न भवति' इति नित्यत्वव्यावृत्तिमन्तं ब्रूते नासद्व्यावृत्तिमन्तम्, 'शब्द'शब्देनैव च समानाधिकरणोऽनित्यशब्दो न घटादिशब्दैः। अतः साध्यसाधनधर्मद्वयं दृष्टान्ते दार्ष्टान्तिके च सिद्धमिति।

**य**[6]**था चाहे**ति ज्ञापकं सम्प्रतिपन्नवाद्यन्त[7]रमतप्रदर्शनं तस्यार्थस्य दृढीकरणार्थम्। **प्रधानेषु** विशेष्येषु **विद्यमाना** अपि **भेदहेतवो धर्माः सर्वे नो**च्यन्ते, कश्चिदेव विशिष्टो विवक्षितः केनचिद् [8]विशेषणेन तद्वाचिना विशेषशब्देनोच्यतेऽर्थो विशेषान्त[9]राव्यापारेण, तत्रैव चरितार्थत्वात् तस्य गुणभूतत्वात्। अत एव च ते 'विशेषशब्दाः' इत्युच्यन्ते **व्यावृत्तार्थाभिधायि**त्वादिति। एतेनैव यत्नेन त्वदीयेन च विधिप्रधानसत्वदभिधानपक्षदोषोक्तियत्नेन कृतप्रयोजनत्वान्न पृथग् दूष्यते।

---

१ °वदि दृष्टा° प्र०॥ २ सह सामान्य° प्र०॥ ३ च सामान्यं य०॥ ४ °नामवधा निरा° प्र०॥
५ °त्वात् च्छब्दस्य भा०। °त्वात् शब्दस्य य०॥ ६ यथा वाह प्र०॥ ७ °रतमप्र° य०। °रमप्र° भा०॥
८ विशेषेणन य०॥ ९ °न्तरव्यापा° प्र०॥

**नन्‌ चासदसच्छ्रुतेः सामान्यश्रुतित्वादयमप्रसङ्गः। केन तस्याः सामान्यश्रुतित्वम्? यदा सा स्व[1][रूप]गुणमात्रविशिष्टं द्रव्यमाह तदा भेदानामनाक्षेपात् कस्य तत् सामान्यं यदभिदधतीति 'सामान्यश्रुतिः' इत्युच्येत। न सच्छ्रुतिः...।**

**अ[2]थवा सच्छब्दो मुख्यया वृत्त्या भूतार्थेन स्वरूपेण प्रकाश्यमानः संवृतिसद्वस्तु स्वरूपव्यवहितमाह स तत्र वृत्तः स्वरूपव्यवहितेऽर्थे सति असद्व्यावृत्तिं न**

---

अत्राह–**नन्‌ चा[3]सदसच्छ्रुतेः सामान्यश्रुतित्वादयमप्रसङ्गः।** सच्छब्दे[4]निवर्तितासदपोहः सर्वत्र वृ[5]त्तेः समानः, तद्वाचित्वाच्चासौ सामान्यशब्दः, भेदाश्च घटादयोऽसद्व्यावृत्त्या व्याप्तत्वादाक्षिप्तास्तद्भेदा एव। अतः सर्वोऽयं वाग्व्यायामो विफलः–'सामानाधिकरण्यं नास्ति, भेदा न भवन्ति, सामान्यं न भवति, अनाक्षेपात्' इत्यादिरप्रसक्त एव विचार इति।

अत्र ब्रूमः–त्वद्वचनानुवृत्त्यैव त्वमिदं प्रष्टव्योऽसि–**केन तस्याः सामान्यश्रुतित्वम्?** केन हेतुना तस्या असद्व्यावृत्त्य[6]र्थायाः सच्छ्रुतेः सामान्यश्रुतित्वम्? नास्त्येव हेतुरित्यभिप्रायः। त्वन्मतेनैव **यदा सा** ४१४-१ **स्व[रूप]गुणमात्रविशिष्टं द्रव्यमाह,** स्वरूपं गुणो विशेषणम्, तत् परिमाणमस्य तत् स्वरूपगुणमात्रम्, तेनैव विशिष्टं नाधिकेन, लक्षणवाक्येऽपि शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती [ ] इति वचनात् द्रव्यमसद्व्यावृत्तिगुणप्रमाणविशेषणमित्यर्थः। गुणधर्मत्वं च स[7]त्त्वपक्षवद् भावितमेव। **तदा भेदानामनाक्षेपात् कस्य तत् सामान्यं यदभि[8]दधतीति 'सामान्यश्रुतिः' इत्युच्येते**ति। अत्र प्रयोगः **'न सच्छ्रुतिः'** इत्यादिर्गतार्थः। तस्मात् तदवस्थः प्रयोगो भेदानाक्षेपादिस्त्वन्मतादेवेति।

**अथवे**त्यादि **यावदपोहशब्दो द्रव्येषु वर्तते।** व्याख्यानविकल्पान्तरं 'त[9]द्वतो नास्वतन्त्रत्वात्, [ ] इत्यस्य। **सच्छब्दो मुख्यया वृत्त्या भूतार्थेन स्वरूपेण प्रकाश्यमान** इति शब्दस्व[10]रूपमात्रेण बुद्ध्या गृह्यमाणः **सं[11]वृतिसद्वस्तु स्वरूपव्यवहितमाह। स तत्र वृत्तः स्वरूपव्यवहितेऽर्थे** सति व्यावृत्तेरसतः 'सन् असन्न भवति' इति प्रसज्यप्रतिषेधासम्भवात् प्रतिषेधसमाश्रयोऽर्थः स[12]त्तु[ल्य]-एव स्यात् 'असन्' इति, **'नञिवयुक्तमन्यसदृशाधिकरणे'** [पाँ[13]० वा० ३।१।१२] इति परिभाषितत्वात्। 'अब्राह्म[14]णो ब्राह्मणवदधीते' इति ब्राह्मणसदृशे पुरुष एव प्रत्ययो नाश्वे न गवीति यथा न तु तथा किञ्चिदसत् स[15]त्तुल्यमस्ति, स[16]तोनस्यासत्त्वादसतोनत्वाभावात्। तस्मादयुक्तमेवैतत् 'सदित्यसन्न भवति' इति।

---

१ तुलना—पृ० ६०७ पं० २६-२७॥ २ तुलना–पृ० ६०७ पं० २९॥ ३ **वासद**° प्र०॥ ४ **निवृत्तितास**° य०॥ ५ **वृत्ते** प्र०॥ ६ °**त्तार्था**° प्र०॥ ७ **सत्यपक्ष**° य०॥ ८ °**दवतीति** प्र०। स्त्रीलिङ्गत्वात् सामान्यश्रुतेः 'अभिदधती' इति शतृप्रत्ययान्तोऽयं प्रयोग इति ध्येयम्॥ ९ "तद्वतो नास्वतन्त्रत्वाद् भेदाज्जातेरजातितः। अर्थाक्षेपेऽप्यनेकान्तस्तेनान्यापोहकृच्छ्रुतिः॥" इति सम्पूर्णः श्लोकः प्रतिभाति। श्लोकोऽयं न **प्रमाणसमुच्चया**दपि तु **दिङ्नागस्यैव** ग्रन्थान्तरादुद्धृतोऽत्रेति प्रतीयते। अतोऽस्य पूर्वार्द्धं पृ० ४७३-२, ४७५-१ इत्यत्र यथा वक्ष्यते तथात्रास्माभिर्योजितम्। **प्रमाणसमुच्चये** तु यथायं श्लोकस्तथा पृ० ६०७ इत्यत्र दर्शितमस्माभिः॥ १० °**स्वरूपेण बुद्ध्या** भा०॥ ११ **संप्रतिसद्वस्तु** प्र०॥ १२ **सतु एव** य०॥ १३ दृश्यतां पृ० २३२ टि० ७॥ १४ °**ह्मणौ ब्रा**° भा०। °**ह्मणै ब्रा**° य०॥ १५ **तत्तु**° य०॥ १६ सता ऊनस्य असत्त्वादसता ऊनत्वाभावादित्याशयो भाति। अत्रारुचौ तु 'सतोऽ**न्य**स्यासत्त्वादसतोऽ**न्य**त्वाभावात्' इति पाठः कल्पनीयः॥

**करोति भूतार्थेन, उपचारादसदसद् ब्रवीति । सोऽपोहेऽपि तावददृष्टत्वात् तद्वति अप्रधानत्वादस्वतन्त्रः । न हि यो यत्रोपचर्यते स तमर्थं भूतार्थेनाह । तथा चोक्तम्—**

मञ्चशब्दो[1] यथाधेयं मञ्चेष्वेव व्यवस्थितः ।
तत्त्वेनाह तथापोहशब्दो द्रव्येषु वर्तते ॥

**स्वरूपेऽन्यापोहे च मुख्यया वृत्त्या वर्तित्वापोहशब्दस्तद्वति वर्तते, न मुख्यया वृत्त्या, उपचारात् । सच्छब्दो हि..........मञ्चशब्दवत् ।**

**सोऽप्युपचारो न घटते । न[2] तावत् प्रत्ययसंक्रान्तितः सारूप्यादुपचारः संभवति, सारूप्यासम्भवे प्रत्ययसंक्रान्त्यभावात् क्रमेणानभिधानाच्च । नापि गुणोप-**

---

इत्थं सच्छब्दोऽसद्व्यावृत्तिं **न करोति भूतार्थेन,** किं तर्हि ? **उपचारादसदसद् ब्रवीति,** अन्यस्यापोहं गौण्या वृत्त्या ब्रूते, **स** सच्छब्दो**ऽपोहेऽपि तावददृष्टत्वात् तद्वति** अपोहवति दूरत एवादृष्टत्वा-
४१४-२ दप्रधानः, **अप्रधानत्वादस्वतन्त्रः न हि यो यत्रोपचर्यते स तमर्थं भूतार्थेनाहे**ति सौ[3]ध्येन मुख्यानभिधानेन हेतोरुपचाराप्रधानास्वातन्त्र्यानुगमं दर्शयति । **तथा चोक्तम्—मञ्चशब्द** इत्यादि तन्निदर्शनम् । मञ्चशब्दो मञ्चस्थान् मञ्चस्वरूपापन्नानेव ब्रूते न पुरुषत्वापन्नानिति । तथापोहार्थः शब्दोऽपोह एव व्यवस्थितोऽपोहवत्सु द्रव्येषु वर्तत इति दार्ष्टान्तिकम् । पूर्वत्र विशेषणत्वादस्वातन्त्र्यम्, इहाभिधानवृत्तेरेवोपचारादस्वातन्त्र्यदोष इति विशेषः । इत्थमस्माभिरुत्प्रेक्षितो दोषविकल्पः ।

त्वदुक्तस[4]त्त्वत्पक्षदूषणानुसारेणाप्येष दोष उच्यते । एतदनभ्युपगमेऽपि अयमन्योऽर्थोऽन्यापोहवत्पक्षदूषणः—**स्वरूपेऽन्यापोहे चे**त्यादि । स्वरूपमन्यरूपनिवृत्त्यात्मकमर्थान्तरनिवृत्त्यात्मकं च स्वार्थं मुख्यया वृत्त्या अभिदधानस्तद्वति उपचारेण वर्तते ना[5]भिधानेना[पो]हशब्द इति स[6]मो न्यायः । **उपचारा**दिति हेतुः । **सच्छब्दो ही**त्यादिरुपनयः । **मञ्चशब्दव**दिति दृष्टान्तः 'तद्वति न वर्तते मुख्यया वृत्त्या' इति साध्ये । एवमुपचारमभ्युपेत्य दूषणमुक्तम् ।

**सोऽप्युपचारो न घटत** इति ब्रूमः । द्वयी हि उपचारस्य गतिः—सारूप्यात्, यथा यमलयोरन्यतरस्मिन् 'स एवायम्' इति प्रत्ययसङ्क्रान्तेः, राज्ञो भृत्येऽमात्यादौ 'राजा' इति वा प्रत्ययः । गुणोपकाराद्वा उपधानानु[रा]गादिव स्फटिके रक्तत्वादिबुद्धिः । त[7]त्र **न तावत् प्रत्ययसङ्क्रान्तितः सारूप्या-**
४१५-१ **दुपचारः सम्भवति सारूप्यासम्भवे प्रत्ययसङ्क्रान्त्यभावात्** स्वामिभृत्ययोर्भिन्नत्वात्, यदि सैव बुद्धिः सङ्क्रान्ता स्यादभिन्ना स्वामिनि भृत्ये च स्वाम्यनुज्ञातर्मु[8]क्तावलीव स्यात्, न तु भवति,

---

१ 'मञ्चशब्दो यथाधेयं मञ्चेष्वेव व्यवस्थितः । तत्त्वेनाह तथा जातिशब्दो द्रव्येषु वर्तते ॥' [ वाक्यप० ३।१४।३५१ ] इति **भर्तृहरेः** कारिकात्र परिवर्त्योद्धृता ग्रन्थकारेण । "मञ्चाः क्रोशन्ति' इति क्रियासम्बन्धस्याधेये मञ्चस्थे प्राणिन्युपपत्तेराधाररूपाभेदेनाधारवचनोऽपि मञ्चशब्दस्तदाधेयवचन इति निश्चीयते एवम् 'आनीयन्तां गावः' इति क्रियासम्बन्धस्य जातावनुपपत्तेस्तदभेदापन्ना व्यक्तयः क्रियासमन्वयसमर्था जातिनिबन्धनेन शब्देनोपादीयन्त इत्यवगमः ।" इति **हेलाराज**कृतायां वाक्यपदीयटीकायां वृत्तिसमुद्देशे ३।१४।३५१ ॥ २ तुलना–पृ० ६०७ पं० ३० ॥ ३ **साप्येन** प्र० ॥ ४ °**सत्वपक्ष**° य० ॥ ५ **नाभिधानेनाह शब्द** प्र० । 'नाभिधानेनाऽऽह शब्दः' इत्यपि स्यादत्र पाठः ॥ ६ **सामान्योयः** य० ॥ ७ **तव न** प्र० ॥ ८ °**मुक्तावलीय स्यात्** भा० । °**मुक्तावलीय सात्** य० ॥

**कारात्, स्फटिकवद् विशेषणप्रकर्षमगृहीत्वा विशेष्ये प्रत्ययप्रसङ्गात्, अयथार्थज्ञानोत्पत्तेः, युगपदसम्भवाच्च ।**

**स्वशब्दार्थप्रवृत्ति..........।**

मञ्चशब्दो[1] यथाधेयं मञ्चेष्वेव व्यवस्थितः ।
तत्त्वेनाह तथा भावशब्दो द्रव्येषु वर्तते ॥

**विशेष एव वस्तु परमार्थतोऽस्ति, न द्रव्यार्थः सामान्यम् । तस्यासत्त्वाद् विशेष एव स्वतन्त्रः कल्पितसामान्योपसर्जनः, मञ्चशब्दवत् ।**

**इतश्च त्वन्मतिवद् भेदात् तद्वतो न वाचकः । भिन्ना हि व्यावृत्तिमन्तः**

---

किं तर्हि ? 'राजवदमात्यः' इति भिन्नैवाभेदोपचारा भवति । तस्मान्न प्रत्ययसङ्क्रान्तिर्न च सारूप्यमपोहापोहवतोः । अतो नोपचारो निमित्ताभावात् । किञ्च, **क्रमवृत्त्यभावाच्च**[2], न हि क्रमेण सकृदुच्चरितः शब्दः क्षणिकत्वादसदपोहे वर्तित्वा तद्वति वर्तते राज-भृत्यबुद्धिवत् । तस्मादपि नास्ति प्रत्ययसङ्क्रान्तिसारूप्यासम्भवादुपचारः । स्यान्मतम्–गुणोपकारादिति । तन्नापि **गुणोपकारात्, स्फटिकवद् विशेष[ण]प्रकर्षमगृहीत्वा विशेष्ये प्रत्ययप्रसङ्गात्**, यथा स्फटिके रक्तत्वादिप्रत्यय उपधानप्रकर्षमगृहीत्वा भवति तथा विशेषणप्रकर्षमगृहीत्वा विशेष्ये प्रत्ययः स्यात्, न तु भवति । किञ्च, **अयथार्थज्ञानोत्पत्तेः**, यथा स्फटिके रक्तत्वादिप्रत्ययो मिथ्याप्रत्ययस्तथा विशेषणसरूपप्रत्ययो विशेष्ये स्यात् । किञ्च, **युगपदसम्भवाच्च**, *[3]यदा च बहवो ग्रहीतारो भवन्ति गुणवतः शुक्लादेः तद्यथा–'घटः पार्थिवो द्रव्यं सञ्छुक्लो मधुरः सुरभिः' इत्येवमादिविशेषैस्तदा गुणोपकारो विरुध्यते । न हि शक्यं तदा द्रव्येण एकगुणरूपेण स्थातुम्, अनेकात्मकस्याविशिष्टत्वात् । नाप्येकदेशेन[4] गुणरूपमनुभवितुं शक्यम्, कृत्स्नस्य घटादिरूपप्रतीतेः । अथ पुनः सर्वैर्घटत्वादिभिरुपकारो युगपत् कृत्स्नस्य क्रियते ततः सर्वेषां प्रत्येकं ग्रहीतॄणां घटादिरूपग्रहणाभावात् सर्वगुणसङ्करेण मेचकदर्शनम् युगपत् सर्वरूपापत्तेः स्यात्* स्फटिकवदेव, न तु भवति । ४१५-२
तस्मादयुक्तस्ताद्रूप्यात् प्रत्ययसङ्क्रान्तेरुपचारः, यमलादिवत्; नापि गुणोपकारात् स्फटिकवदिति ।

**स्वशब्दार्थप्रवृत्ती**त्यादि । अथवायमन्योऽर्थोऽस्य विकल्पस्यैव । **मञ्चशब्द** इति श्लोकस्यान्त्यपादे पाठान्तरं **तथा भावशब्दो द्रव्येषु वर्तते** इति । तस्य व्याख्या–**विशेष एव वस्तु परमार्थतोऽस्ति, न द्रव्यार्थः सामान्यं** जातिर्घटादिष्वेकं भवत्[5] किञ्चिदस्ति । **तस्य** सामान्यस्य **असत्त्वाद् विशेष एव स्वतन्त्रः कल्पितसामान्योपसर्जनो** यथा प्राक् प्रक्रान्तः । किमिव ? **मञ्चशब्दवत्**, सैव व्याख्या गतार्था भावशब्दस्य गुणपर्यायवाचित्वात् ।

**इतश्च त्वन्मतिव**दित्यादि । हेत्वन्तरमपि **भेदा**दिति । जातिमत्पक्षदूषणवदसदसत्वपक्षदूषणं त्वयैव कृतम्–**तद्वतो न वाचक** इति । **भिन्ना हि व्यावृत्तिमन्तः** सत्वन्त इवार्था **घटादय** इति हेतु-

---

१ दृश्यतां पृ० ६२४ पं० ४ ॥ २ °**वाच** प्र० ॥ ३ * * एतदन्तर्गतः पाठः **प्रमाणसमुच्चयवृत्तौ** प्राय इदृश एवोपलभ्यते । दृश्यतां पृ० ६०८ पं० १३ ॥ ४ °**त्वाप्येकदेशेन** य० ॥ ५ °**ष्टेकुंभवत्** य० ॥

**सत्वन्त इवार्था घटादयः। भेदानां चानन्त्ये सम्बन्धाशक्यत्वाद् व्यभिचाराच्चावाचक इत्युक्तं प्राक् त्वयैव।**

**[1]ननु चायं घटादिषु·········।**

**यस्याभिधाता सोऽर्थोऽसदसन्मात्राख्यो भेदवत् सत्त्वं वा स्यात् सत्तामात्रं वा सत्तासम्बन्धो वा सत्वन्मात्रं वा? तत्र—**

[2]नापोहशब्दो भेदानामानन्त्याद् व्यभिचारतः।
वाचको योगजात्योर्वा भेदार्थैरपृथक्श्रुतेः॥
[3]तद्वतो नास्वतन्त्रत्वाद् भेदाद् जातेरजातितः।
अर्थाक्षेपेऽप्यनेकान्तः सत्ताद्यर्थोऽप्यतो न सः॥

**एवं सन्मात्रसत्ताद्यापादनवदिहापि··········आरभ्यते—**

---

व्याख्या त्वन्मतवदेव। के ते व्यावृत्तिमन्त इति चेत्, उच्यते—असदसन्तोऽर्था घटादयः। **भेदानां चानन्त्ये सम्बन्धाशक्यत्वाद् व्यभिचाराच्चावाचक इत्युक्तं प्राक्,** केन? त्वयैव।

अत्राह—**ननु चायं घटादिष्वि**त्यादि। सत्वन्मात्रपक्षे पूर्वमेव हि द्रव्यादिभेदानभिधानेनानन्त्यव्यभिचारदोषौ परिहृतौ तथेहापि असदसत्वन्मात्रपक्षे भेदानभिधानेन तद्दोषपरिहार इति तद्दर्शयति।

[4]अत्र ब्रूमः—**यस्याभिधाते**त्यादि। यस्यार्थस्य शब्दो वाचक इ[5]ष्यते **सोऽर्थोऽसदसन्मात्राख्यो भेदवत् सत्त्वं वा स्यात्**, भेदवती स[6]भेदा सत्ता जातिरित्यर्थः, किं तदसदसन्मात्रमुच्यते, **सत्तामात्रं**
४१६-१ **वा** भेदनिरपेक्षा सत्तैव वा, **सत्तासम्बन्धो वा, सत्वन्मात्रं वा**? सदनुवृत्त्यभिधानपक्षवदेते चत्वारो विकल्पाः असदसत्वति व्यावृत्तिमत्यपि पक्षे सम्भवेयुर्गत्यन्तराभावात्। स्या[7]न्मतम्—'असदसत्' इत्यभावपक्षोऽपि स[8]म्भवतीति। तन्न, अभावस्य प्रतिषिद्धत्वात्, **'शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते'** इति त्वयैव स्वार्थवचनेन उक्तत्वादस्माभिः **स्वार्थ** ए[9]वं [ताव]न्निर्धार्यते इत्यादिना यावद् अ[10]नन्यः **प्रत्यक्ष** इति ग्रन्थेन विचार्य भा[11]ष्ये प्रतिषिद्धत्वात्। परिशेषादेतावन्त एव विकल्पा भवन्तो भवेयुः 'असदसन्मात्रम्' इति शब्दार्थस्य। त[12]च्चासदसन्मात्रम्। विधिवादिमतवदपोहवादिमतेऽपि चतुष्टये स्थिते समान एवात्रापि विचारो ग्रन्थश्चेति तथैवाह**—नापोहशब्दो भेदाना**मित्यादि श्लोकद्वयम्। अन्त्ये पादे तूपसंहारे विशेषः**—सत्ताद्यर्थोऽप्यतो न स** इति, 'मा[13]त्र'शब्दलभ्यार्थैतावत्त्वात्। एतच्छ्लोकद्वयं व्याख्यातुकामः सम्बन्धयति—**एवं सन्मात्रसत्ताद्यापादनवदिहापी**ति तुल्यदोषत्वविवक्षा भवन्तमन्यांश्च प्रतीति

---

१ 'ननु चायं घटादिषु द्रव्यादिभेदानभिधानेन परिहृतो दोषः। न ह्यत्र भेदा अभिधीयन्ते, किं तर्हि? तेषामसदसन्मात्रं सामान्यरूपम्। तस्यैकत्वात् सुकरः सम्बन्धः। व्यभिचारोऽपि नास्ति, तदभावे शब्दस्याप्रवृत्तेः' इत्याशयो भाति। तुलना पृ० ६०७ पं० २४॥ २ **दिङ्नाग**स्यैव 'न जातिशब्दः' इत्यादि कारिकाद्वयं किञ्चित् परिवर्त्य **दिङ्नाग**मतं प्रतिविधातुमत्र ग्रन्थकृतोपन्यस्यते। तुलना–पृ० ६०७ पं० ११॥ ३ दृश्यतां पृ० ६०७ पं० २०॥ ४ **तत्र** भा०॥ ५ **इष्यते सार्थासद्°** य०। **इष्यते सद्°** भा०। (इष्यतेऽसावर्थोऽसद्°?)॥ ६ **सभेदाशत्वाज्जाति°** भा०। **सभेदांशत्वाज्जाति°** य०। भेदेन सहिता **सभेदा** इत्यर्थः॥ ७ **स्यान्मतं मसदसत्** प्र०॥ ८ **सम्भवीति** य०॥ ९ **एवं निर्धार्यते** य०। दृश्यतां पृ० ६०९ पं० २॥ १० दृश्यतां पृ० ६११ पं० १॥ ११ **भास्य** य०॥ **भांस्य** भा०। **'चास्य'** इत्यपि पाठोऽत्र भवेत्॥ १२ **तच्चासदसन्मात्र** य०। **'तत्रा**सदसन्मात्रे' इत्यपि पाठोऽत्र स्यात्॥ १३ दृश्यतां पृ० ६२६ पं० ४॥

न[1] जातिशब्दो भेदानामानन्त्याद् व्यभिचारतः ।
वाचको योगजात्योर्वा भेदार्थैरपृथक्श्रुतेः ॥
तद्वतो नास्वतन्त्रत्वाद् भेदाज्जातेरजातितः ।
अर्थाक्षेपेऽप्यनेकान्तः सत्ताद्यर्थोऽप्यतो न सः ॥

**जातिशब्दस्तावत् सदादिः । कस्मान्न वाचकः ? आनन्त्याद् भेदानाम् । आनन्त्ये हि भेदानामशक्यः शब्देन सम्बन्धः कर्तुम् ।** न चाकृतसम्बन्धे शब्देऽर्थाभिधानं न्याय्यम्, स्वरूपमात्रप्रतीते**रित्यादि यावद् न, गुणत्वादिव्यभिचारात् ।**

---

गतार्थं यावदारभ्यते । **न जातिशब्द** इत्यादि तदारम्भः । पूर्वमपोहशब्देन सम्पन्नत्वाद् विश्रब्धं परवाचोयुक्त्यैव 'न[2] जातिशब्दः' इत्यादि परग्रन्थमेव उददिक्षत्, [अ]सदसद्विशिष्टसन्मात्र-भेद-सत्ता-सम्बन्ध-सत्वत्पक्षाणां त्वदिष्टानां विधिरूपाणां च परेष्टानामविशेषादिति । तद्यथा—**न जातिशब्दो भेदानां** 'वाचकः' इति वक्ष्यति । **जातिशब्दस्तावत् सदादि**रिति[3], यस्मात् सच्छब्दो जातिसम्बन्धिनो जातिमुपादायात्मरूपेण द्रव्यादीनभेदोपचारादाह तस्मादभेदोपचारहेतुना व्यपदिश्यते जातिशब्द इति । यथा 'सिंहो ४१६-२
माणवकः' इति सिंहशब्दो माणवकगुणानुपादायाभेदोपचारप्रवृत्तेरभेदोपचारहेतुना व्यपदिश्यते गुणशब्द इति । **कस्मान्न वाचक** इति हेतुपरिप्रश्नः, यस्माद् वाङ्मात्रेण न श्रद्धीयते । उच्यते—**आनन्त्यादि**ति हेतुः । कस्यानन्त्यात्? **भेदानाम्**, यस्मात् ते पूर्वं प्रकृता न चान्यः श्रूयते । **आनन्त्ये हि भेदानामशक्यः शब्देन सम्बन्धः कर्तुम्**, न हि पाटलिपुत्रादिस्था द्रव्यादय इहस्थेन सच्छब्देन सहाख्यातुं शक्याः । **कर्तुम्** आख्यातुम्, करोतेरनेकार्थत्वात् । आनन्त्याद्वा द्रव्यादीनाम्, तथाहि—ते घट-पट-रथादिभेदेनानन्ताः । एवं तावत् सम्बन्धिभेदाद्[4] भेदमभ्युपगम्येदमुच्यते, न तु तस्य वस्तुनः स्वगतो भेदोऽस्ति । तत्रेदमेव कारणम्—यत् सम्बन्धान्तरविशिष्टाभिधायी शब्दः सम्बन्धान्तरविशिष्टशब्दवाच्यमसमर्थो वक्तुम्, गवाश्वादिवत् । तस्माद् भेदानामवाचकः ।

**न चाकृतसम्बन्ध**[5] इत्यनाख्यातसम्बन्धे **शब्द** इति द्विष्ठत्वेऽपि सम्बन्धस्य शब्दस्यैवाविनाभावित्वादर्थप्रत्यायकत्वं दर्शयति । अत्र चानन्त्यं[6] पारम्पर्येणानभिधानहेतुः—ततो हि सम्बन्धाशक्यता[7], सम्बन्धाव्युत्पत्तेरनभिधानं **स्वरूपमात्रप्रतीते**रिति यत्र शब्दस्यार्थेन सम्बन्धोऽव्युत्पन्नो[8] यथा म्लेच्छशब्दानां तत्र

---

१ दृश्यतां पृ० ६०७ पं० ११, २५ ॥ २ पृ० ६०७ पं० १३ ॥ **३ तिभेदाना°** प्र० । दृश्यतां पृ० **४६०-१** ॥ ४ तुलना—"सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥ [ वाक्यप० ३।१।३३ ], वक्ष्यमाणैराश्रयादिभिः स्वसम्बन्धिभिर्भिद्यमानोपचरितभेदा गवाश्वादिषु सत्तैव महासामान्यमेव जातिर्गोत्वाश्वत्वादिका अपरसामान्यं, नान्या परमार्थभिन्ना सा विद्यते । तथा गोः सत्ता गोत्वं नापरमन्वयि प्रतिभासते एवमश्वस्य सत्ता अश्वत्वमित्यादि वाच्यम् । तस्यामेव च गवादिभेदभिन्नायां सत्ताख्यायां जातौ सर्वे गवादयो डित्थादय आकाशादयश्च शब्दा वाचकत्वेन व्यवस्थिता इत्यसांकर्येण नियतोपाधिवशाज्जात्यभिधायिनः सिद्धाः ।" इति **वाक्यपदीयस्य हेलाराजरचितटीका**याम् ॥ ५ **°संबंधः इत्य°** प्र० ॥ ६ **चात्यंतं पारंपर्येणाभिधानहेतुः** य० ॥ ७ **°शक्यता ना संबंधान्युत्पत्तेरन°** य० । **°शक्यता ता संबंधान्यत्तेरन°** भा० । ८ **ऽव्युत्पत्तौ** भा० । **व्युत्पत्तौ** य० ॥

[1]एतावच्च..................स्वाधारो वा। न चास्ति सम्भवः। मात्रशब्दापादितसत्ताद्यर्थोऽप्यतो न सः। अलमतिप्रसङ्गेन।

अथवा भेदादिति यस्माद् व्यावृत्तिमानसदसत्वान्.......स एव दोषः, तेन सहाभूतसामान्यत्वात्, यथा सत्वदर्थसच्छब्दस्य घटादिभेदार्थत्वाभावात् तेन सहासामानाधिकरण्यं तथा तवापि असदसदर्थसच्छब्दस्य घटादिभेदार्थत्वाभावात् सामानाधिकरण्याभावः।

---

शब्दमात्रमेव प्रतीयते नार्थ इत्यादिः सह टीकया भाष्यग्रन्थो द्रष्टव्यो यावद्[3] न गुणत्वादिव्यभि-
४१७-१ चारादित्यवधिराचार्येण यावत्कारितः सव्याख्यानः [4]सामान्यपरीक्षाकारलिखित एवात्रापीति न लिख्यते।

तदुपसंहारः—एतावच्चेत्यादि यावत् स्वाधारो वा। न[5] चास्ति सम्भव इति यथा विचारितमिति मात्रशब्दापादितसत्ताद्यर्थोऽप्यतो न स इत्युपसंहारः। अलमतिप्रसङ्गेनेति, [6]'भेदात्' इत्येतत्प्रसङ्गागतसाक्षाद्विधिवादिमतदूषणमिदं [7] [स]प्रसङ्गमुक्तम्–सत्ताद्यर्थोऽप्यतो न स इति, [8]मात्रग्रहणस्य एतावद्विषयसम्भवानतिवर्तित्वात्।

अधुना भवन्तं प्रति मात्रग्रहणात् तत्सम्भविनो विकल्पास्त एवेति तान् दूषयिष्यामः। तद्यथा–अथवा भेदादिति यस्माद्व्यावृत्तिमानित्यादि, 'भेदात्' इत्ययं हेतुर्व्यावृत्तिमत्पक्षे दोषमापादयितुमित्थं व्याख्यायते। यस्माद् व्यावृत्तिमानसदसत्वानिति पूर्वेभ्यः पक्षेभ्यो विशेषं दर्शयति। शेषं तुल्यं यावत् स एव अतद्भेदत्वे सामानाधिकरण्याभाव एव दोषः प्रतिज्ञातस्त्वां प्रत्यापाद्यते। कस्मात्? *[9]तेन सहाभूतसामान्यत्वात्। 'घटः' इत्युक्ते यस्मिन्नसदसत्त्वं घटे स घटोऽन्यत्र घटान्तरे पटादौ च न वर्तते, अतो भिन्नः, भिन्नत्वाच्चातद्भेदा घटादयः, तस्मात् * तेन सहाभूतसामान्यत्वं सिद्धम्। यो येन सहाभूतसामान्यस्तस्य तेन सामानाधिकरण्यं न भवति। यथा सत्वदर्थेत्यादिनिदर्शनदण्डकः, सत्वानर्थोऽस्य सच्छब्दस्य सोऽयं सच्छब्दः सत्वदर्थः, तस्य घटादिभेदार्थत्वं नास्ति त्वन्मतेन, तदभावात् तेन सहासामानाधिकरण्यम्,
४१७-२ साक्षाद्विधिवादिमत इव तवापि सच्छब्दो[ऽसद]सदर्थो घटादिभेदार्थो न भवति, अतस्तद्वदेव सामानाधिकरण्याभाव इति।

---

१ 'एतावच्चात्र भवेत्–भेदा वा, सत्तामात्रं वा, सत्तासम्बन्धो वा, सत्तायाः स्वाधारो वा।' इत्याशयोऽत्र भाति। तुलना–पृ० ६२६ पं० ४ ॥ २ 'यस्माद् व्यावृत्तिमानसदसत्वानर्थोऽन्यत्र न वर्तते ततो भिन्नः। भिन्नत्वाच्चातद्भेदत्वे स एव दोषः' इत्याशयः सम्भाव्यते ॥ ३ यावन गुण° भा०। यावद्गुण° य०। दृश्यतां पृ० ४१९–२ ॥ ४ दिङ्नागरचिते सामान्यपरीक्षाग्रन्थे 'न जातिशब्दो भेदानामानन्त्याद् व्यभिचारतः। वाचको योगजात्योर्वा भेदार्थैरपृथक् श्रुतेः ॥ तद्वतो नास्वतन्त्रत्वाद् भेदाज्जातेरजातितः। अर्थाक्षेपेऽप्यनेकान्तस्तेनान्यापोहकृच्छ्रुतिः ॥' इति श्लोकद्वयं तद्व्याख्या च विस्तरेण सम्भाव्यते ॥ ५ नवास्ति प्र०। दृश्यतां पृ० ४१९–२ ॥ ६ दृश्यतां पृ० ६२५ पं० ८ ॥ ७ °द्रूषण° भा०। °द्रेषण° य० ॥ ८ दृश्यतां पृ० ६२६ पं० ४ ॥ ९ * * एतच्चिह्नान्तर्गतः पाठो य० प्रतौ नास्ति ॥ १० दिङ्नागेन सवृत्तिके प्रमाणसमुच्चये पञ्चमेऽपोहपरिच्छेदे यदभिहितं तस्य प्रारम्भिकोंऽश इह पृ० ६०७–६०८ इत्यत्रास्माभिर्भोटभाषानुवादात् संस्कृते परिवर्त्य प्रदर्शितः। ततोऽग्रेतनोंऽश इहोपन्यस्यते। स चात्रापोहपरीक्षायां यत्र

यत्र यथा यथोपयुज्यते तथा तथानुसन्धेयः । **प्रमाणसमुच्चयान्तर्गतोऽपोहवादः—**

**[1]"भेदेषु जातौ तद्योगे दोषस्तुल्यो हि तेष्वपि ॥ ७ ॥**

**[2]यतो जातिः स्वरूपं [3]च तद्वद्रूपं न युज्यते ।**

[4]भेदरूपेणाभिधानेऽपि अवश्यं जातिरूपेण भेदाभिधाने [5] [6]जातौ साक्षाद् भेदेषूपचारात् तद्वतीव सर्वत्र दोषो वाच्यः, जातावप्यभिधेयायां शब्दस्वरूपाध्यारोपेण जात्यभिधानात् सम्भवात् । जातियोगो जातिरूपेण [8]सदादिनाभिधीयत इत्यत्रापि यथासम्भवं दोषो वाच्यः ।

**[9]तद्वांश्च भेद एवोक्तः स च पूर्वं निराकृतः ॥ ८ ॥**

[10]'न जातिशब्दो भेदानां वाचकः' इति [11]पूर्वं निराकृतः स च जातिमान् । ननु चोक्तम्–जातिशब्दो जातिमन्मात्रस्य वाचको न तु भेदरूपेणेति । यद्येवम्,

**[12]तद्वन्मात्रेऽपि सम्बन्धः सत्ता वेति विचारितम् ।**

तद्वन्मात्रं हि तद्वत्त्वं भावप्रत्ययः । [13]स च सम्बन्धे गुणे वा स्यात् । यथोक्तम्–समासकृत्तद्धितेषु सम्बन्धाभिधानं [ भावप्रत्ययेन ? ] अन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्यः [　　　　] इति । तत्रापि '[11]न वाचको योगजात्योर्वा भेदार्थैरपृथक् श्रुतेः' इत्युक्तम् ।

**[14]तद्वानर्थो घटादिश्चेन्न पटादिषु वर्तते । सामान्यमर्थः स कथम् ?**

अनेकवृत्ति हि सामान्यम् । तच्च यदि सामान्यवान् घटादिः, स पटादिषु अवर्तमानः कथं तेषां सामान्यमिति [15]युज्यते ? ननु च सामान्यवानभिधीयते, किमर्थं तत्र [16]सामान्यत्वमारोप्यते इति चेत्, यस्मात् सच्छब्दः सामान्यस्य वाचक इति प्रतिज्ञातम् । सत्तादिषु च सत्ताद्यभावात् [17]तद्वान् नोच्यते । तस्मादर्थे[18]ऽवश्यमर्थसामान्यमभ्युपगन्तव्यम् । तच्चार्थे नास्ति । [19]तस्मात् **[20]शब्दस्तुल्योऽत्र केवलः ।** तद्वान् घटादिः सच्छब्दवाच्यत्वात् तुल्यः, न तु तद्वता केनचित् [ अपि VT. ] । सत्तायोगौ च पूर्वं निषिद्धौ । **[21]नानिमित्तः स च मतः ।** शब्दश्च भिन्नेषु निमित्ताभावेऽभिन्नो न दृष्टः । ततश्च किं न युज्यते ?

1 भेदे जातौ च तद्योगे PSV². VT. मध्ये तूभयथा दृश्यते, दृश्यतां पृ० ६३० पं० २९, पृ० ६३१ पं० ३२ ॥ 2 यतो जातिः स्वरूपं तद्वद्रूपं च न युज्यते (?) ॥ 3 वा PSV¹ ॥ 4 भेदस्वरूपेणा° PSV² ॥ 5 भेदाभिधानम् (?) ॥ 6 जातिषु (?) साक्षाद् भेदेषूपचार इति तद्वतीव सर्वो दोषो वाच्यः PSV¹ ॥ 7 °धानात् सम्भवः PSV² । °धानमिति सम्भवात् PSV¹ ॥ 8 सदादि (?) अभिधीयते PSV¹ ॥ 9 "यत् पुनरेतस्मिन्नेव पक्षे भिक्षुणोक्तम्–जातिविशिष्टेष्वभिधीयमानेषु स्वलक्षणान्येवाभिधेयानि प्राप्नुवन्ति, तेषामानन्त्यव्यभिचाराभ्यामवाच्यत्वमुक्तम्–इति । तदुक्तम्–**'तद्वांस्तु भेद एवेष्टः स च पूर्वं निराकृतः'** इति ।"–**शर्करिका** पृ० ६२ ॥ "...स तु..." **न्या० र०** पृ० ६०० ॥ 10 जातिशब्दः पूर्वं निराकृतः 'न जातिशब्दो भेदानां वाचकः' इति । स च जातिमत्यपि उक्तः ( तेन जातिमत्यपि उक्तम् ? ? ) ।–PSV¹ ॥ 11 पृ० ६०७ पं० ११ ॥ 12 यच्चात्र भिक्षुणा जातिमन्मात्रं वाच्यं भविष्यतीत्याशङ्क्य विकल्पितम्–अथ जातिमत्त्वं किं जातितद्वतोः सम्बन्धः किं वा सामान्यरूपमिति । एवं च विकल्प्य 'पूर्वोक्तजातिसम्बन्धाभिधानदोषो योजनीयः' इत्युक्त्वोक्तम्–**तद्वन्मात्रेऽपि सम्बन्धः सत्ता वेति विचारितम्**' इति ।"–**शर्करिका.** पृ० ६२ । **न्या० र०** पृ० ६०१ ॥ 13 तेन सम्बन्धो गुणो वा स्यात् (?) । तुलना–"किञ्च, अपोहवत्त्वमिति मतुबन्तादयं भावप्रत्ययः । स च सम्बन्धवाच्यपि स्मर्यते । यथाह–समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेन अन्यत्र रूढ्यव्यभिचरितसम्बन्धेभ्यः [　　] इति । न च सम्बन्धस्य वाच्यत्वमस्तीत्युक्तम् ।"–**शर्करिका.** पृ० ६३ । **न्या० र०** पृ० ६०१ ॥ 14 "यदपि चास्मिन् पक्षे भिक्षुणोक्तम्–यदा गोत्वविशिष्टः शाबलेयो गोशब्दस्य वाच्यत्वमित्यङ्गीकृतं तदासौ बाहुलेये नास्तीति तत्र गोशब्दप्रवृत्तिर्न स्यादिति । तदुक्तम्–**तद्वानर्थो घटादिश्चेन्न पटादिषु वर्तते । सामान्यमर्थः स कथम्**–इति । तदपि समानम् ।"–**शर्करिका** पृ० ६३ । "भिक्षुणोक्तम्–'तद्वानर्थो घटादिश्चेन्न पटादिषु वर्तते । सामान्यमर्थः स कथमिति तद्वद्वाच्यता ॥' इति ।"–**न्या० र०** ६०१ ॥ 15 न युज्यते PSV² ॥ 16 सामान्यमारोप्यते PSV² ॥ 17 तत्र वृत्तिर्नोच्यते PSV¹ ॥ 18 अवश्यं सामान्यमभ्युपगन्तव्यम् PSV¹ ॥ 19 **यस्मात्** VT. ॥ 20 शब्दार्थः केवलः समः PSV¹ । अत्र शब्दः केवलं तुल्यः PSV² । इदमत्रावधेयम्–PS¹ मध्येऽयं कारिकांशो दृश्यते, PS² मध्ये तु न दृश्यते । अतोऽयं वस्तुतः कारिकांशो वृत्त्यंशो वेति निर्धारयितुं न पार्यते ॥ 21 'नानिमित्तः स चेष्यते' इति 'निर्निमित्तं च तन्नेष्टम्' इत्यपि वा पाठोऽत्र भवेत् ॥

ततश्च विशेषणविशेष्यत्वाभावः। अथापि [स्यात्]-अनन्यद्रव्यवर्तिनि[1] सद्गुणे सच्छब्दाद् घटाद्याशङ्कायां विशेषणविशेष्यभावो भविष्यति नीलतरादिवदिति चेत्, **यद्येकत्रासितादिवत्[2]। तच्च नास्ति।** नीलशब्दो हि नीलतरादिष्वन्याभावे तद्वति न युज्यते। नीलत्वं सम्बन्धश्च न शब्दार्थ इत्युक्तम्। किञ्चान्यत्, **अभ्युपायेऽपि नैतज्जातेरजातितः।** नीलतरादिषु नीलसामान्याभ्युपगमेऽपि यथा नीलगुणस्त्रिधा भिन्न एवं घटत्वादिजातिमती सज्जातिर्नास्ति यतस्तद्विशेषानुपादाय [3]द्रव्ये वृत्तौ घटादिविशेषे वृत्तिराशङ्क्येत। तस्मादिदमपि न कल्पनीयम्।

नन्वेवमशब्दवाच्येष्वप्यर्थाक्षिप्तेषु घटादिषु तद्वानर्थोऽवश्यं घटत्वादिना केनचिदनुबद्ध इति विशेषणविशेष्यभावो भविष्यतीति चेत्, [4]**अर्थाक्षेपेऽप्यनेकान्तः।** [5]अर्थाक्षेपो हि यत्रार्थसामर्थ्याद् निश्चय उत्पद्यते यथा दिवा[6] न भुङ्क्ते इति रात्रिभोजने निश्चयः। अत्र तु सदित्युक्ते घटादिष्वनिश्चयात् [संशय इति PSV[1]] अर्थाक्षेपो नास्ति। [7]तस्माज्जातिशब्दः कथञ्चिदपि भेद-सामान्य-सम्बन्ध-जातिमतां वाचको न युज्यते **तेनान्यापोहकृच्छ्रुतिः।** तस्मात् 'कृतकत्वादिवत् स्वार्थमन्यापोहेन भाषते' [पृ० ६०७ पं० ८] [8]इति स्थितम्। आह च—

**बहुधाप्यभिधेयस्य न शब्दात् सर्वथा गतिः।**
**[9]स्वसम्बन्धानुरूप्यात्तु व्यवच्छेदार्थकार्यसौ ॥ १२ ॥**
**अनेकधर्मा शब्दोऽपि येनार्थं नातिवर्तते।**
**प्रत्याययति तेनैव न तु शब्दगुणादिभिः ॥ १३ ॥** [इति सङ्ग्रहश्लोकौ PSV[1]]

यद्यन्यापोहमात्रं शब्दार्थः कथं नीलोत्पलादिशब्देषु सामानाधिकरण्यं विशेषणविशेष्यभावश्च[10] स्यात्। कथं न स्यादिति चेत्, यस्माद् भिन्नः सामान्यविशेषशब्दानामपोह्य इति चेत्, नायं दोषः। तेऽपि—

**[11]अपोह्यभेदाद् भिन्नार्थाः स्वार्थभेदगतौ जडाः।**
**एकत्राभिन्नकार्यत्वाद् विशेषणविशेष्यकाः ॥ १४ ॥**

नीलोत्पलादिशब्दा अपोह्यभेदे सत्यपि स्वार्थविशेषव्यक्त्यर्थं स्थाणुकाकनिलयनवत् स्वापोह्यार्थमेकत्र [12]समुदिताः समानाधिकरणभूताः। तथाहि—ते प्रत्येकं स्वार्थविशेषे संशयहेतवः। शब्दान्तरसहितप्रकाश्यार्थासम्भवाच्च विशेषणविशेष्यभूताः।

नन्वेकाधिकरणं यत् तद् नीलमपि नोत्पलमपि नेति कथं तद् [13]नीलं च तदुत्पलं चेति नीलोत्पलमित्युच्यत इति चेत्,

**[14]न हि तत् केवलं नीलं न च केवलमुत्पलम्।**
**समुदायाभिधेयत्वात्,**

[15]नीलोत्पलशब्दाभ्यां ते समुदिते प्रतीयेते, न केवले, केवलयोस्तु **वर्णवत् तन्निरर्थकम्।** यथा **नी**शब्द-**ल**शब्दौ सन्तावपि नीलाभिधाने निरर्थकौ [एव PSV[2]] एवमत्र [अपि PSV[1]]।—PSV[1] C. ed. D. ed. पृ० ६७ B-६९ A। N. ed. पृ० ७५ B-७७ A। PSV[2]. N. ed. पृ० १५९ A-१६० B। P. ed. पृ० १५७ B-१५९ B॥

अस्य **सवृत्तिक**स्य **प्रमाणसमुच्चय**स्य **जिनेन्द्रबुद्धि**ना विरचिता **विशालामलवती** व्याख्या भोटभाषानुवादात् संस्कृते परिवर्त्यात्रोपन्यस्यते—

"**भेदेष्वि**त्यादिना तद्रूपक्षेऽभिहितं दोषं पक्षान्तरेष्वतिदिशति। उत्तरार्धेन अत्रैवोपपत्तिमाह। जातिरूपं भेदेषु न युज्यते, शब्दस्वरूपं जातौ, शब्दस्वरूपवज्जातिरूपं सम्बन्धे। सम्बन्धिरूपेण सतोऽर्थस्य स्वयं वचनविषयीकर्तुमशक्यत्वाद्-

1 'अनन्यद्रव्यवर्ती सद्गुणः' इत्यपि पाठश्चिन्त्यः॥ 2 **शर्करिका** पृ० ६४। तुलना-"तदुक्तम्-मा भूदर्थान्तरे वृत्तिर्यद्येकत्रासितादिवत्। प्रकर्षादिविशिष्टत्वम्' इति। एवं चाशङ्क्य दूषितम्-'नैवं जातेरजातितः' इति।"-**न्या० र०** पृ० ६०१-६०२॥ 3 'द्रव्ये वर्तमानस्य' इत्यपि पाठो भवेत्॥ 4 **शर्करिका.** पृ० ६४। **न्या० र०** पृ० ६०२॥ 5 अर्थाक्षेपो नाम PSV[1]॥ 6 देवदत्तो दिवा न PSV[2]॥ 7 यस्माज्जातिशब्दः PSV[2]॥ 8 इति यत् तदेव स्थितम् PSV[2]॥ 9 **न**यचक्रवृत्ति. पृ० ४२७-२। 'स्वसम्बन्धानुरूपेण'-**शर्करिका.** पृ० ४६॥ 10 °भावश्च कथं स्यात् PSV[1]॥ 11 **तत्त्वसं० पं०** पृ० ३०७। **सन्मतिवृ०** 12 समुदयेन PSV[1-2]॥ 13 नीलं चोत्पलं चेति चेत्, उच्यते—न हि तत् केवलं······PSV[1]॥ 14 **तत्त्वसं० पं०** पृ० ३०८। **सन्मतिवृ०**॥ 15 'नीलोत्पलशब्दाभ्यां समुदिताभ्यां तदुच्यते न केवलाभ्याम्, केवलं तु वर्णवत् तन्निरर्थकम्।' इत्यपि पाठः PSV[1] VT. अनुसारेण सम्भाव्यते॥

**वश्य**मित्युक्तम् । ननु तद्वत्पक्षाद् भेदपक्षस्य को विशेष इति चेत्, तद्वत्पक्षे सज्जातिरूपेण सच्छब्देनाभिधानम्, भेदपक्षे तु द्रव्यादिरूपेण । एवं हि ते भेदरूपेणाभिहिता भवन्तीति विशेषः । तत्रापि द्रव्यत्वादिषु साक्षाद् भेदेषूपचार इति पूर्ववदेव दोषो वक्तव्यः-साक्षाद् उपचारप्रवृत्तत्वं क्रमेणानभिधानं गुणोपकारविरोधश्चेति । **सम्भवा**दिति जात्यभिधाने 'प्रकर्षः स्याद् विना धिया' इत्यस्यासम्भवात् । सम्बन्धाभिधानेऽप्यत एव 'सम्भव'वचनम् । ननु पूर्वं सम्बन्धस्यानभिधेयत्वमुक्तं तत् कथमिदानीं सद्रूपेणाभिधानमाश्रीयते कथं चात्र अभेदोपचारः सम्बन्धस्याङ्गीक्रियते ? पूर्वं हि असत्त्वभूतत्वाद् आख्यातार्थे शब्दस्याभेदोपचारानुपपत्तेरनभिधानमुक्तम्, सम्बन्धोऽप्यसत्त्वभूत एव, तत् कथं तस्य सत्त्वं सच्छब्देनाभेदोपचारो वा ? अभेदोपचाराभावे च कुतः पूर्वोक्तदोषप्रसङ्गः ? अथ सत्तया अभेदोपचारेण स उच्यते कथं सद्योगशब्दयोः सामानाधिकरण्यानुपपत्तिरिति चेत्, नायं दोषः, सम्बन्धाभिधानमभ्युपगम्यास्य दोषस्योक्तत्वात् । 'यदि च सम्बन्धोऽभिधीयते तथापि तद्वत्पक्षदोषानतिक्रम एव जातिमता तुल्यसामर्थ्यात्' इति दर्शनार्थमिदमुक्तम् । **तद्वांश्चे**त्यादिनास्य पक्षान्तरत्वमेव निराकरोति । **ननु चोक्त**मित्यादिना पक्षान्तरत्वं दर्शयति । अत्र भेदा भेदरूपेण नाभिधीयन्ते, किं तर्हि ? जातिमतां तेषां यन्निर्विशेषं रूपं सत्त्वेनारोपितं तदेव भेदरूपासंस्पृष्टमभिधीयते । तथा च भेदपक्षात् पक्षान्तरमेवेदमिति मन्यते । **यद्येवम्** इत्यादिना जातियोगपक्षयोरन्तर्भूतत्वादस्य पक्षान्तरत्वं निषेधति । कथं पुनस्तद्वन्मात्रं सत्ता सम्बन्धो वा भवतीति चेदुच्यते-**तद्वन्मात्रं हि** इत्यादि । 'मात्र'-शब्देन विशेषनिराकरणे सामान्यं सर्वानुगतिरूपं शब्दार्थ इत्युक्तं भवति । तच्च प्रवृत्तिनिमित्तत्वाद् भावप्रत्ययेन उच्यमानं सत्तां सम्बन्धं वा विहाय नान्यदुपलभ्यते, भावप्रत्ययस्य तत्रैव विहितत्वात् । इदमागमेन दर्शयितुमाह-**समासकृत्तद्धितेषु** इत्यादि सम्बन्धस्याभिधेयत्वे आगमः । राजपुरुषत्वं पाचकत्वम् औपगवत्वमित्येतेषु समासादिषु स्वस्वामि-क्रियाकारक-निमित्त-नैमित्तिकसम्बन्धा उच्यन्ते यथासंख्यम् । ततोऽत्रापि सच्छब्दः कृदन्तत्वात् सम्बन्धवाचकः स्यात् । अन्येऽस्यैवापवादं वदन्ति-**अन्यत्रे**त्यादि । अयं गुणवाचित्वे आगमः । रूढे······अत्र जातिमात्रमभिधीयते, न सम्बन्धः । अभिन्नरूपात् तद्धितात्······अत्र च गुण एवोच्यते । अव्यभिचरितसम्बन्धात्······अत्र तदेव सत्त्वमभिधीयते, न सम्बन्धः । **तद्वानर्थो घटादि**रित्यादिना अनेकत्रावर्तमानताया हेतुः प्रकाशितः । **सामान्यमर्थः स कथ**मिति प्रमाणफलम् । यदनेकत्र न वर्तते तन्न सामान्यम्, स्वलक्षणवत्, तद्वांश्च तथा, इति व्यापकाभावः । **सामान्यं ह्यनेकत्र वर्तते** इति व्यतिरेकः । **तच्चे**त्यादिना हेतोरेवार्थं विवृणोति । **कथ**मित्यादिभिः प्रतिज्ञार्थम् । **ननु चे**त्यादिना सिद्धसाध्यतामाह, तद्वतः सामान्यरूपत्वेनानिष्टत्वात् । तदनिष्टत्वं सामान्यरूपारोपस्य प्रकाशयन्नाह-**किमर्थ**मित्यादि । **यस्मा**दित्यादि सिद्धसाध्यतायाः प्रतिविधानम् । एवं मन्यते—सम्बन्धसौकर्यादव्यभिचारवचनाच्च सच्छब्दस्य सामान्यवाचित्वमाश्रीयते भेदशब्दैः सह सामानाधिकरण्याभ्युपगमाच्च, सामान्यविशेषभावाभावे सामानाधिकरण्यं नोपपद्यत इति । तथाहि-सामान्यशब्दाद् निर्विशेषं प्रवर्तमाना बुद्धिर्विशेषशब्दैर्भेदान्तरेभ्यो व्यवच्छिद्य विशिष्टविषयेऽवस्थाप्यते । तत् सामान्याभावे नोपपद्यते । अत्र च सामान्येन तद्वानित्यभ्युपगमे विकल्पद्वयम्-किं सत्तादिसामान्यस्य तद्वत्त्वम् आहोस्वित् तद्वतो घटादेः समानत्वमिति । तत्र पूर्वस्यासम्भव इति दर्शयति-**सत्तादिषु चे**त्यादि । सत्तादिषु जात्यन्तरं नास्ति जातीनामजातित्वात् । ततोऽवश्यं द्वितीयविकल्पोऽभ्युपगन्तव्य इति दर्शयति-**तस्मा**दित्यादि । **अर्थे** इति प्रकृतत्वात् तद्वति घटादौ । स्यादेतत् ( ? ) ननु तत्रैवेति चेत्, अत्रोच्यते-**तच्चे**त्यादि । कस्मान्नास्तीति चेत्, **यस्मा**दित्यादि । **केवल**वचनेन अभिधेयं तुल्यं निराकरोति । शब्द एवाभिधायक एते[ षां ] तुल्यः, न वाच्यमेवं किञ्चिदपीत्यर्थः । **तद्वता केनचिदपि ने**ति, अभिधानसाम्येनैव एतेषां समानत्वम्, न त्वभिधेयेन तद्वद्वस्तुरूपेण केनचिदित्यर्थः । ननु सत्ता शब्दस्वरूपेण तद्वती अभिधीयते, सम्बन्धश्च सत्तारूपेण । तस्मात् सत्तायाः सम्बन्धस्य वा अभिधेयेन तद्वता तुल्यत्वं भविष्यतीति चेत्, उच्यते-**सत्तायोगौ चे**त्यादि । **भेदे जातौ च तद्योगे दोषस्तुल्यो हि तेष्वपि**' [ पृ० ६३० पं० २ ] इत्यादिना पूर्वमेव निराकृतं जातियोगयोस्तद्वत्त्वेनाभिधानम् । यदि घटादिषु शब्दः समानस्तदा स एव शब्दः शब्दत्वेन तद्वान् तेषां सामान्यं स्यादिति चेत्, उच्यते-**नानिमित्त** इत्यादि । ········· निमित्तवतो यस्य शब्दस्य यत्र निमित्ताभावः तस्य तत्र योगो भवितुं नार्हति यथा दण्डशब्दस्य दण्डरहिते पुरुषे । घटादिष्वपि निमित्तवतो जातिशब्दस्य निमित्ताभाव इति कारणानुपलब्धिरुक्ता । **ततश्चे**त्यादौ यदि सामान्यमभिधेयं ततस्तद्विशेष्यार्थं घट इत्युच्यत इति सामानाधिकरण्यं स्यात् । सामान्याभिधानाभावे किं कस्य विशेष्यम् ? ततश्चाभ्युपगमहानिः । **अथापी**ति सामान्यविशेषभावाभावेऽपि प्रकारान्तरेण विशेषणविशेष्यत्वं ग्राहयति । द्रव्यान्तरे न वर्तत इति **अनन्यद्रव्यवर्ती सद्गुणो** घटादि द्रव्यम् । **सद्गुण** इति सत्तागुणवानित्यर्थः, सत्ता गुणोऽस्येति कृत्वा । अनेनातुल्यत्वमुच्यते । एवमतुल्यत्वे सत्यपि सच्छब्दाद् घटाद्याशङ्कायां विशेषणविशेष्यभावो भविष्यति नीलतरादिवत् । नीलगुणवद् द्रव्यं नीलतरादिद्रव्यान्तरेऽतद्गुणे न वर्तते

इति तदसामान्यम्, तथापि नील इत्युक्ते योऽयं नील इत्युक्तः स किं नीलतर आहोस्विन्नीलतम इति विशेषाशङ्का भवति, ततो नीलतरो नीलतम इति भेदशब्दैर्विशेष्यते एवं सदित्युक्ते यः सन् अयं किं घट आहोस्वित् पट इति घटाद्याशङ्का भवति ततस्तच्छब्दैर्विशेष्यते घटः पटो वेति । **यद्येकत्रासितादिव**दिति··············तच्चेदं नास्ति । कुत इति चेत्, उच्यते-**नीलशब्दो ही**त्यादि । नीलशब्दो हि नीलगुणवद् द्रव्यमाह । तच्च नीलतरादिद्रव्यान्तरे न वर्तते । यन्नीलत्वं वर्तते तत्सम्बन्धो वा तस्य शब्दार्थत्वं न भवति । तस्मादत्रापि **नानिमित्तः स च मतः** [ पृ० ६३१ पं० १९ ] इत्येतत् समानमिति दार्ष्टान्तिकेन समानस्य दृष्टान्तस्याप्यसिद्धिरेव । **अभ्युपायेऽपीति,** यद्यपि दृष्टान्तः सिध्यति तथापि सत्तायां तत्तुल्यत्वं नास्ति । तद्दर्शयति-**नैतज्जातेरजातित** इति । न विद्यते घटत्वादिजातिरस्यां सत्ताजातावित्येवम् अजातिः सज्जातिः अजातिमतीति सत्तायां घटत्वादयो जातिविशेषा न सन्ति नीलगुणे नीलतरादिविशेषवत् यतस्तद्विशेषानुपादाय द्रव्ये वर्तेत ।······ ···तस्मात् सच्छब्दाद् घटादिविशेषाशङ्का न युक्ता । नीलगुणस्तु अनेकभेदः । स एकत्रापि द्रव्ये वर्तमानः स्वविशेषानुपादाय [1]यथाभिसम्भवं वर्तत इति तद्वाचिनीलशब्दान्नीलतराद्याशङ्का युज्यत इति दर्शयति । **नन्वेवमि**ति प्रकारान्तरेण विशेषाशङ्कासम्भवमाह ।·········**तद्वानर्थोऽवश्यमि**त्यादि । जातिमानर्थो हि शब्देनोपात्तः । स च नियोगादेव घटत्वादिसामान्येन केनचिदनुबद्धः । ततश्च तत्सामान्यभेदाक्षेपे घटादिविशेष आक्षिप्यत इति । इममपि विकल्पं निराकुर्वन्नाह-**अर्थाक्षेपेऽप्यनेकान्त** इति । **अर्थाक्षेपो ही**त्यादिना अर्थाक्षेपस्य स्वरूपमाह । तदभावमत्र दर्शयितुं **यथा दिवा न भुङ्क्ते** इति वैधर्म्यनिदर्शनम् । **अत्र त्वि**त्यादिना वैधर्म्य[2]प्रयोगे पक्षधर्ममुपदर्शयति । **आक्षेपो नास्ती**ति प्रमाण-फलम् । यत्रार्थाक्षेपस्तत्र निश्चयः यथा दिवा न भुङ्क्ते इत्यत्र रात्रिभोजने । सदित्यभिधाने च घटादिषु न निश्चयः, किं तर्हि ? सन्देहः । इति स्वभावविरोधः ।·········**तस्मादि**त्यादिना यथोक्तजात्याद्यभिधाननिषेधोपसंहारेण स्वपक्षमेव दर्शयति ।······ ······**आह** इति अर्थगम्यांशसन्दर्शनेन अन्यापोहमेव शब्दार्थं ग्राहयति । **बहुधेति** शिंशपादिविशेषेण पुष्पितफलितादि-विशेषेण चानेकविधत्वेऽपीत्यर्थः । **अभिधेय** इति शिंशपादिरर्थः । तस्यैव अनेकविधत्वेऽपि **न शब्दात् सर्वथा गतिः । स्वसम्बन्धानुरूप्या**दिति स्वसम्बन्धोऽविनाभावित्वं तदन्वयव्यतिरेकलक्षणम् । स च तत्सामान्यापेक्षया, न तु विशेषापेक्षया । तस्माद् यादृशः सम्बन्धः प्रत्यायकत्वमपि तादृशमेव युज्यते । इदमुक्तं भवति-सामान्यापेक्षयास्य सम्बन्धः, सामान्यं च व्यवच्छेदरूपमेव यथोक्तवत् अन्यस्यायोगात् । तस्माद् व्यवच्छेदमेव कुर्वन् प्रत्याययतीति । अथ केनांशेन प्रत्याययतीति चेत्, उच्यते-**अनेकधर्मा शब्दोऽपी**त्यादि । स्वसामान्यधर्मैरनेकधर्मा । **येनार्थं नातिवर्तत** इति सामान्यधर्मेण वृक्षत्वादिना येन न व्यभिचरति **प्रत्याययति तेनैवे**ति अनेन स एव धर्मः प्रत्यायक इत्यर्थः । एवकारेण यद्व्यवच्छेदस्तद् दर्शयति-**न तु शब्दगुणादिभि**रिति । आदिशब्देन शब्दज्ञेयत्वादयो गृह्यन्ते । अप्रत्यायकत्वं तेषामव्यभिचारित्वात् । तथाहि-ते वृक्षार्थं विनापि रसादिषु दृष्टाः, न तु वृक्षशब्दत्वादि सामान्यम् । **यद्यन्यापोहमात्र**मित्यादि । ······**कथ**मित्यादि········· । **कथं न स्यादिति चे**दित्यादि । **यस्माद् भिन्न** इत्यादि अपोह्यभेदेन सहचारादर्थभेदं दर्शयति । अयं हेतुः । ये भिन्नार्थास्ते न समानाधिकरणा न च विशेषणविशेष्यभूताः, घटपटादिशब्दवत्, नीलोत्पलादिशब्दा अपि तथेति व्यापकविरोधः । **तेऽपी**त्यादि । यद्यपि **अपोह्यभेदाद् भिन्नार्था**स्तथाप्यस्ति विशेषः **स्वार्थभेदगतौ जडाः** प्रत्येकमिति शेषः । स्वार्थः सामान्यमुत्पल-शब्दस्योत्पलमात्रम्, तद्भेदा रक्तोत्पलादयः । नीलशब्दस्यापि नीलमात्रम्, तद्भेदा भ्रमरादयः । तद्गतौ जडाः संशयहेतवः । अनेन प्रत्येकं स्वार्थभेदे संशयहेतुत्वम् अर्थापत्त्या सहितानामेव निश्चयहेतुत्वं विशेष उक्तः । यस्मादेवमुत्पलनीलादिशब्दानां परस्परार्थे स्वार्थविशेषे प्रत्येकं संशयहेतुत्वं सहितानामेव निश्चयहेतुत्वं तस्मादेकस्मिन् वस्तुनि नीलोत्पलमित्यभिन्नकार्यत्वं विशिष्टा-र्थाभिव्यक्तिलक्षणं युज्यते । तस्मा**देकत्राभिन्नकार्यत्वात्** सामानाधिकरण्यं तस्माच्च विशेषणविशेष्यभाव उपपद्यते । ············ **अपोह्यभेदे सत्यपि** इति, इदमपि पूर्ववदपोह्यभेदेनार्थभेदं दर्शयति । **स्वार्थविशेषव्यक्त्यर्थ**मिति स्वार्थविशेष उत्पल-नीलादिशब्दानामुत्पलनीलादिः, तदभिव्यक्त्यर्थमिति । अनेनाभिन्नकार्यत्वमुक्तम् । **स्थाणुकाकनिलयनवत् स्वापोहार्थ**मिति नीलसामान्योत्पलसामान्ययोः [ अपोहार्थम् ] **एकत्र समुदिता** इति ।·········**तथाहि-ते प्रत्येकं स्वार्थविशेषे संशयहेतवः ।** अर्थापत्त्या सहितानां निश्चयहेतुत्वमुच्यते । यस्माद् नीलोत्पलादिशब्दाः प्रत्येकं स्वार्थविशेषे सन्देहहेतवः सहिता एव निश्चयहेतवः, तस्मात् सहिताः स्वार्थविशेषकार्थव्यञ्जकाः समानाधिकरणभूताः । **शब्दान्तरसहितप्रकाश्यार्था-सम्भवाच्चे**त्यादि । शब्दान्तरेण नीलादिशब्देन सहितस्य उत्पलशब्दस्य प्रकाश्यो विशिष्टोऽर्थः स उत्पलशब्दे केवले न

1 यथानीलसम्भवं ( ? ) P. ed. ॥ 2 वैधर्म्योपयोगे D. ed. । वैधर्म्योपयोगेन P. ed. ॥

शब्दमात्रं[1] हि······तन्निमित्ताभावात् छत्रिदण्डिवत् । भेदाद् व्यावृत्तिसामान्यानाम्·········एकस्मिन्नर्थे यदा बहवो वक्तारो भवन्ति 'घटः पार्थिवो द्रव्यं सन् शुक्लः' इत्येवमादिविशेषैस्तदा सोऽर्थो घटरूपेण कृत्स्नो वाभिधीयेत एकदेशेन वा ? न तावत् कृत्स्नः, वक्त्रन्तरस्य पार्थिवत्वेनाभिधानासम्भवप्रसङ्गात् । अन्यतरसामान्यविशेषणाभावः, कृत्स्नाभिधेयस्वरूपोपादानशब्दाभिहितत्वात्, घट-

---

शब्दमात्रं हीत्यादि त्वन्मतदोषोक्तिस्तुल्या तवापि यावेत्[2] **तन्निमित्ताभावात् छत्रिदण्डिवदिति** । यथा छत्रनिमित्तश्छत्री दण्डनिमित्तो दण्डी भिन्ननिमित्तत्वात् परस्पर[म]समानाधिकरणौ तथा व्यावृत्तिमत्सच्छब्दैं[3]पक्षेऽपीति । [4]**भेदाद् व्यावृत्तिसामान्याना**मित्यादि, विधिपक्षदूषणवदिहापि व्यावृत्तिसामन्यवद्भेदादन्यदेवासद्व्यावृत्तिसामान्यात् [अ]घटनिवृत्तिसामान्यम्, अतः 'सन् घटः' इति भिन्नव्यावृत्तिविशिष्टसन्घटत्वसामान्ययोर्भेदादिति । अत ऊर्ध्वं तुल्यगमनीयमेव विधिपक्षदूषणेन सर्वमिति तद्व्याख्यैवेयं लिख्यते-एकस्मिन्नर्थे घटादौ घटत्व-पृथिवीत्व-द्रव्यत्व-सत्त्वादिभिन्नेषु [5]वक्तृषु कश्चिद् 'घटः' इति ब्रूते कश्चित् 'पृथिवी' इत्यादि यावत् 'सन्' इति, तत्र घटाभिधाने सोऽर्थो घटरूपेण कृत्स्नो वाभिधीयेत, एकदेशेन वा ? न तावत् कृत्स्नः, तस्मिन्नेव काले वक्त्रन्तरस्य पार्थिवत्वेनाभिधानासम्भवप्रसङ्गात्, न हि [अ]घटव्यावृत्तिरूपसामान्यं गृहीत्वा[6]ऽतद्रूपाभिप्रायिशब्दप्रयोगो युक्तः, स चेतरवक्तृवशात् कृत्स्नो घटरूपेण स्थित इत्यसम्भवो रूपान्तरस्य कृत्स्नस्यैकस्य । [अनेक?]वृत्तिसामान्यरूपप्रतीतेस्तैद्[7]वतस्तत्सारूप्येण युगपद् वक्त्रभिप्रायभेदेन युक्तो 'भावः सन् घटः' इति प्रयोगः ।

अत्र साधनम्–**अन्यतरसामान्यविशेषणाभाव** इति प्रतिज्ञा । **कृत्स्नाभिधेयस्वरूपोपादानशब्दाभिहितत्वात्**, यत्र कृत्स्नाभिधेयस्वरूपं तदुपादानेन शब्देनाभिधीयते तत्रान्यस्य सामान्यविशेषण-

---

भवति । एवं नीलशब्देऽपि उत्पलशब्देन सहितस्य यः प्रकाश्यः स केवले न सम्भवतीति शब्दान्तरसान्निध्येन विशिष्टार्थे प्रवृत्तेः परस्परं विशेषणविशेष्यभावः । ······**नन्वेकाधिकरणं यत् त**दिति, विग्रहकाले 'नीलं च तदुत्पलं च' इति क्रियते तस्मात् पृच्छति । अनेन यदुक्तं 'शब्दान्तरसहितेनैव शब्देन विशेष्यार्थः प्रकाश्यते' इत्यत्राभ्युपगमबाधामाह । **न हि तत् केवलं नीलम्** इति केवलनीलनिषेधेन नीलशब्दमात्रवाच्यत्वस्य निषेधः । एवं **न च केवलमुत्पल**मिति उत्पलशब्दमात्रवाच्यत्वस्य केवलस्य । तथाहि–केवलनीलशब्देन केवलोत्पलशब्देन च यदभिधीयते तत् केवलं नीलं केवलं चोत्पलमिति प्रसिद्धम् । कस्मात् पुनः नीलोत्पलशब्दाभ्यां केवलाभ्यां तन्नाभिधीयत इति चेदुच्यते—**समुदायाभिधेयत्वा**दिति । यस्मात् सहिताभ्यामेव नीलोत्पलशब्दाभ्यां सोऽर्थोऽभिधीयते न केवलाभ्याम्, अन्यथा एकेन तदर्थस्याभिहितत्वे पर्यायशब्दवत् तयोः सह प्रयोगो नोपपद्यते । ततोऽनेन विग्रहकालेऽपि सहिताभ्यां नीलोत्पलशब्दाभ्यां तदभिधीयत इत्यभ्युपगमाद् नाभ्युपगमबाधेति दर्शयति । ननु केवलाभ्यां किं प्रतीयते इति चेत्, न किञ्चिदपि, यस्माद् **वर्णवत् तन्निरर्थकम्** । कथं पुनरंशानां निरर्थकत्वे तत्समुदायस्यार्थवत्त्वमिति चेदुच्यते-**यथे**त्यादि ।"—**विशालामलवती.** VT. D. ed. पृ० २४८ A–२५८ A, P. ed. पृ० २८० A–२९१ B ॥

१ 'शब्दमात्रं हि तुल्यं नार्थः । शब्दश्च निमित्तमुपादाय प्रवर्तते, अतो व्यावृत्तिमत्पक्षे व्यावृत्तिमतां भेदान्न सामानाधिकरण्यम्, एकत्र तन्निमित्ताभावात् छत्रिदण्डिवत्' इत्याशयोऽत्र भाति ॥ २ **यावत्तसित्ताभावात्** य० ॥ ३ °**ब्दमपेक्षेपीति** य० ॥ ४ **भेदाद्वाभ्यावृत्ति**° भा० । भेदाद्वा व्यावृत्ति° इत्यपि पाठोऽत्र भवेत् ॥ ५ **वक्तृषु वक्तृषु** भा० । **वक्तृषु २** य० ॥ ६ °**त्वातद्रूपा**° य० । °**त्वतद्रूपा**° भ० ॥ ७ °**सत्तद्वत**° भा० ॥

**पार्थिवत्वादिवत्। अथास्यैकदेशं गृह्णाति, तदयुक्तमप्रतीतेः। न हि व्यावृत्तिसामान्यशब्दैस्तद्वत एकदेशो वक्तुं शक्यः, अतदसत्वत्सामान्यविषयत्वात्, यथा [1]आचार्यो मातुल इति।**

**[2]अथापि स्यात्—असद्व्यावृत्तिजातिमति बह्वर्थाशङ्कायां घटादिभेदवाचि-**

---

प्रयोगस्याभावो दृष्टः, यथा [3]परं प्रति त्वदुदाहृतघटपार्थिवत्वोक्तौ 'यदि घटत्वेन समस्तं वस्तु विशिष्टं
४१८-१ ततः पार्थिवत्वस्यावकाशाभावान्न युज्यते' इति इष्टो दोषस्तथा यद्यघटत्वनिवृत्तिविशिष्टं वस्तु समस्तमुक्तं ततोऽपार्थिवनिवृत्तिविशिष्टं न युज्यत इति समानः।

**अथास्यैकदेशं** 'घटः' इत्यघटनिवृत्त्या **गृह्णाति** एकः, अपरोऽपार्थिवनिवृत्त्या देशं 'पार्थिवः' इति गृह्णातीति मतम् **तदयुक्तमप्रतीतेः**, न हि निमित्तान्तरैरुच्यमानस्य एकदेशप्रतीतिर्दृष्टा यथा आचार्यो मातुल इति तथा न हि व्यावृत्तिसामान्यशब्दैस्तद्वत एकदेशो वक्तुं शक्यः। कस्मात्? **अतदसत्वत्सामान्यविषयत्वात्। अतस्य** अन्यस्य व्यावृत्तस्य असत्त्वम्, तदस्यास्ति 'सन् घटः' इत्यादिसामान्ये, स विषयोऽस्य शब्दस्य सोऽतदसत्वत्सामान्यविषयः, यत्रातदसत्वत्सामान्यविषयत्वं शब्दे तस्यैकदेशो न शक्यो वक्तुम्। किमिव? आचार्यो मातुल इत्यादिनिमित्तान्तरोक्तैकदेशानुक्तिवत्।

**अथापि स्यादि**त्यादि परमताशङ्का। यथा विधिवादिमतमाशङ्क्यते तथापोहवादिमतम्—**असद्व्यावृत्तिजातिमती**त्यादि शब्दविशेषितग्रन्थमर्थतस्तुल्यं यावद् **नीलतम इति वे**ति। अस्य व्याख्या–

---

१ "सम्बन्धिभेदेनैक एवार्थोऽनेकरूपत्वेन प्रतिभासत इत्यत्र भाष्ये [ पा० म० भा० ३।३।१८ ] निदर्शनमुपन्यस्तं व्याचष्टे—**आचार्यो मातुलश्चेति** यथैको व्यपदिश्यते। सम्बन्धिभेदादर्थात्मा स विधिः पक्तिभावयोः ॥ [ वाक्यप० ३।८।६३ ], उक्तमिदं भाष्ये—उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाह—उपाध्यायं भवानभिवादयतामिति। स गत्वा मातुलमभिवादयते। तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यं गत्वाह—मातुलं भवानभिवादयतामिति। स गत्वोपाध्यायमभिवादयत इति। अत्र च यथैकोऽर्थः कञ्चित् प्रत्युपाध्यायो भवति कञ्चित् प्रति मातुलो भवति तथा स प्रकारः पक्तिभावयोर्बोधे च। स्वगतविशेषापेक्षया सामान्यस्वभावोऽपि पचिर्भावं प्रति विशेषः, भावः पुनः पचिं प्रति सामान्यमेव।" इति **वाक्यपदीयस्य हेलाराजरचितवृत्तौ** ३।८।६३ ॥ २ तुलना–"यदपि च **भिक्षुणा** शङ्कितम्—'मा भूत् पिण्डान्तरेण विशेषणविशेष्यभावः। तस्मिन्नेव पिण्डे सत्तादिविशिष्टेऽभिहितेऽपरतद्गतविशेषाकांक्षायां विशेषणादिव्यवहारो भविष्यति 'सन् घटः' इति। यथा नीलशब्देन नीलगुणेऽभिहिते तद्गतविशेषापेक्षया तरबादिविशेषणं भवति नीलतरो नीलतम इति' [ ] इति। तदुक्तम्—**'यद्येकत्रासितादिवत्'** [पृ० ६३०] इति। एवं चाशङ्क्य परिहृतम्—'युक्तं तत्र नीलो गुणः प्रकर्षाप्रकर्षादिभेदभिन्नस्तरबादिभिर्विशेष्यते। सत्ताजातिस्तु घटादिजातिशून्या स्वात्मविशिष्टं पदार्थं प्रतिपादयन्ती नैव घटत्वादीनाकांक्षतीति न तत्र विशेषणाभिधानं भवति' [ ]। तदुक्तम्—**'नैतज्जातेरजातितः'** [ पृ० ६३० ] इति। तदेतदपि समानम्। तवापि ह्यसदपोहे नैवाघटापोहोऽस्ति। अतश्चात्मन्यविद्यमानमघटापोहमसदपोहो नैवाक्षेप्तुं समर्थ इति तैर्नाघटापोहैर्विशेष्यते यथाऽनीलापोहः स्वगतैरप्रकर्षापोहैर्विशेष्यते। तदेतत् सर्वमाह—'नात्मन्यविद्यमानत्वाद्विशेषापोहसूचनम्। तस्मान्न तैर्विशेष्यत्वं प्रकृष्टत्वेन नीलवत् ॥ १३२ ॥' इति। यत् पुनः 'अशब्दवाच्यैरेव घटादिभिः सज्जात्याक्षिप्तैर्विशेषणादिव्यवहारो भविष्यति' [ ] इत्याशङ्क्य **भिक्षुणा** दूषितम्—'अनैकान्तिको घटाक्षेपः, पटेऽपि सङ्क्रान्तिसम्भवात्' [ ] इति। तदुक्तम्—**'अर्थाक्षेपेऽप्यनेकान्तः'** [ पृ० ६३० पं० ७ ] इति। तदेतदपि [ समानम् ]। न ह्यसदपोहोऽनैकान्तिको धूमवदग्निमघटापोहमाक्षेप्तुं समर्थ इत्याह—'अर्थाक्षेपोऽपि नास्त्येव सन्देहाल्लिङ्गलिङ्गिवत्।' इति।"—**मी० श्लो० वा० शर्करिका.** पृ० ६४ ॥ ३ तुलना—पृ० ६०८ पं० १४ ॥

**शब्दैः सामानाधिकरण्यं भविष्यति तत्सामान्यगुणत्वात् तद्वाचिशब्दस्यापि तद्व्यवच्छेद्यविषयत्वात् । यत्र यत्र तत्सामान्यगुणत्वं तत्र तत्र सामानाधिकरण्यं दृष्टम्, तद्यथा अनन्यद्रव्यवर्तिनि नीलगुणेऽनीलनिवृत्तिसामान्यस्य नीलतरादिद्रव्यवृत्तित्वात् तैः सह सामानाधिकरण्यं भवति नीलतरो नीलतम इति वा ।**

**न, सामान्यविशेषभावस्य तच्छब्दार्थाभावात् सम्प्रधार्यत्वात् । यतश्च नीलशब्दोऽपि न द्रव्यं नीलत्वेनाह, किं तर्हि? अनीलवदभावम् । तत्र च न नीलादिभेदानां कस्यचिदपि सम्भवः । अनीलाभावभावत्वान्नेति चेत्, एवं विधिशब्दार्थता तर्हि । यस्मादेवं सतोऽपि न सामानाधिकरण्यम्, अभूतसामान्यविशेषत्वात् ।**

---

[1]यद्यपि तद्वद् घटादि पटादिषु न वर्तते तथापि एकत्रातद्व्यावृत्त्याधारे वर्तते सत्ता, ततो बह्वर्थाशङ्कास्ति, तस्यां च सत्यां **घटादिभेदवादिभिः शब्दैर्येषु** सा सत्ता वर्तते तैस्तद्वाचिभिः **सामानाधिकरण्यं भविष्यती**ति प्रतिज्ञा । **तत्सामान्यगुणत्वादि**ति हेतुः, सा सामान्यगुणो येषां ते बह्वोऽर्थास्तत्सामान्यगुणाः, तद्भावात् तत्सामान्यगुणत्वात् । **तद्वाचिशब्दस्यापि तद्व्यवच्छेद्यविषयत्वात्**, तया सत्तया व्यवच्छेद्याः सर्वे विषया अर्थाः, ते विषया [2]अस्य शब्दस्य स तद्व्यवच्छेद्यविषयः, तद्भावात् तद्व्यवच्छेद्य- ४१८-२
विषयत्वात् । **यत्र यत्रे**त्याद्युपनयः कार्यः । दृष्टान्तः–**तद्यथा** [3]**अनन्यद्रव्यवर्तिनी**त्यादि, अनीलेतरो हि नीलगुणोऽनन्यद्रव्यवर्ती द्रव्ये [4]नीलगुण एव वर्तते, नीलतरादिष्ववर्तमानेऽपि तस्मिन् नीलगुणसामान्ये अनीलनिवृत्तिसामान्यस्य नीलतरादिद्रव्यवृत्तित्वात् तैः सह सामानाधिकरण्यं भवति, यथा **नीलतरः** पटो **नीलतम इति वे**ति । सोदाहरणोपसंहारे परिहारे वयमत्र ब्रूमः–तच्च **न, सामान्यविशेषभावस्य** नीलत्वनीलगुणद्रव्यादेरनीलत्वानीलगुणद्रव्यनिवृत्तिलक्षणस्य **तच्छब्दार्थाभावात् सम्प्रधार्यत्वात्**, नीलत्वजातिशब्दार्थस्यातद्व्यावृत्ति[5]लक्षणस्य नीलगुणशब्दार्थस्य चाभावादनीलेतरजातिगुणद्रव्यदृष्टान्ताभावात् तत्सामान्यविशेषभावोऽत्रापि सम्प्रधार्यः । तद्भावनाहेतुः–**यतश्च नीलशब्दोऽपी**त्यादि, सोऽपि हि नीलशब्दो **न द्रव्यं नीलत्वेनाह** यत्तत्तरतमादिप्रकर्षभेदस्य सामान्यं स्यात्, **किं तर्हि? [अ]नीलवदभाव**मनीलत्वजातेरनीलगुणस्य वा निवृत्तिमाह । तत्र चाभावे न नील-नीलतर-नीलतमानां भेदानां कस्यचिदपि सम्भवः । तस्मादभावमात्राभिधानाद् नास्ति सामान्यविशेषभावः ।

**अनीलाभावभावत्वाद् नेति चेत् ।** स्यान्मतम्–अनीलत्वजातिगुणाभावो नीलगुणद्रव्यभाव एव, स च सामान्यं नीलादिभेदानाम्, इति चेन्मन्यसे । अत्रोच्यते–**एवं विधिशब्दार्थता तर्हि,** स एव नीलत्वजातिगुणाधारद्रव्यस्य [6]विधिः । अस्तु, को दोष इति चेत्, उच्यते–**यस्मादेवं सतोऽपि न** ४१९-१
**सामानाधिकरण्यं** त्वदुक्तन्यायेन **अभूतसामान्यविशेषत्वात्**, अनन्यद्रव्यवर्तिनि नीलगुणे नील-नीलतरनीलतमप्रकर्षभेदाभावात् सामान्यविशेषत्वाभावः । तस्मादभूतसामान्यविशेषविषयत्वात् त्वदुक्तनील-

---

१ तुलना–पृ० ४७४–१ ॥ २ **अर्थशब्दस्य** प्र० ॥ ३ तुलना पं० २८ । पृ० ६३० पं० १ ॥ ४ 'नीलगुणे' इति सप्तम्यन्तमेतत् ॥ ५ °**लक्ष्याभ्यनीलगुण**° भा० । °**लक्षभ्या नीलगुण**° य० । (°लक्ष्यस्य नीलगुण°?) ॥ ६ **विधेः** प्र० ॥

**उपेत्यापि तु सामान्यविशेषत्वाभावमसदघटादिव्यावृत्तिमतां ब्रूमो जातेरजातितः। न ह्यभिधानप्रत्ययहेतावसदभावात्मिकायां सज्जातावघटाभावाद्यात्मिका घटत्वादिजातिरस्ति यथा नीलगुणे द्रव्ये नीलप्रकर्षभेदः यतोऽसदसत्वतोऽघटाभावघटत्वादीनुपादाय प्रवर्तेत। न चाविद्यमानः स्वात्मन्यर्थो विशेषणेन शक्यते विशेष्यवस्तुन्यध्यारोपयितुं स्वरूपवत्। तस्मात्[1]······ सामानाधिकरण्यं स्यात्। न सद् घटादि विशेषयिष्यति, अविद्यमानतद्रूपत्वात्, नीलमिव मधुरम्।**

**अर्थाक्षिप्तास्तर्हि घटादयो भवितुमर्हन्ति, असद्व्यावृत्तिमतोऽन्यतमघटत्वादि-**

---

नीलतरादिवत् सामानाधिकरण्याभाव इति दृष्टान्तासिद्धेः सच्छब्देऽसद्व्यावृत्त्या[2] भेदानामसद्व्यावृत्तिपक्षे विधिपक्षे वा नास्ति सामानाधिकरण्यम्।

**उपेत्यापि तु,** न व्यावृत्तिमदभिधानं सच्छब्देन[3], असद्व्यावृत्तिमतः सतोऽभिधानमभ्युपगम्यापि **सामान्यविशेषत्वाभावमसदघटादिव्यावृत्तिमतां**[4] ब्रूमः। कुतः? **जातेरजातितः,** नास्यां[5] जातिर्विद्यत इति [अ]जातिरिति विग्रहात् सामान्यानामसामान्याधारतां[6] दर्शयति। **न ह्यभिधानप्रत्ययहेता**वित्यादि यावत् **प्रवर्तेते**ति, सदभिधान-प्रत्य[य]योर्हेतुरसदभावात्मिका सज्जातिः सत्ता, तस्यां त्वघटाभावात्मिका घटत्वजातिर्नास्ति, **यथा नीलगुणे द्रव्ये नीलप्रकर्षभेद** इति दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यं दर्शयति। **यतोऽसदसत्वतो** वस्तुनः **अघटाभावघटत्वादीनुपादाय प्रवर्तेते**त्यसम्भवमन्योन्येषु दर्शयति। द्रव्याणि तावदपोहवादिनस्तेऽस्माकमसत्योपाधिसत्यविशेषविधिवादिनामिव घटाद्यभिधानानां न हेतवः। यान्यघटासत्त्वादीनि तत्कारणानि तानि नासदसत्तायां सन्ति। तस्माज्जातिरजातिरिति सिद्धम्।

ततः किम्? ततो **न चाविद्यमानः स्वात्मन्यर्थः** सत्ता-नीलत्वादि**विशेषणेन शक्यते**
४१९-२ **विशेष्यवस्तुनि** घटोत्पलादावध्यारोपयितुम्। किमिव? **स्वरूपव**दिति वैधर्म्यदृष्टान्तः, यथा स्वरूपं शब्दो विशेष्येऽध्यारोपयति[7] न तथेहेति। **तस्मा**दित्यादि प्रस्तुतोपसंहारो यावत् **सामानाधिकरण्यं स्या**दिति गतार्थः[8]। प्रयोगश्चात्र—**न सद् घटादि विशेषयिष्यति, अविद्यमानतद्रूपत्वात्,** अविद्यमानतद्रूपत्वं प्रतिपादितत्वात् सिद्धम्। **नीलमिव मधुर**मिति दृष्टान्तो गतार्थः।

**अर्थाक्षिप्तास्तर्हि**त्यादि। यदि घटादयोऽतद्भेदत्वादनाक्षिप्ताः सामान्यनामसामान्यत्वात् अर्थतस्त्वाक्षिप्ता भवितुमर्हन्ति। कुतः? **असद्व्यावृत्तिमतोऽन्यतमघटत्वादिसामान्यविशेषानुबद्धत्वात्,** असद्व्यावृत्तिमद्धि वस्तु घटत्वादीनां सामान्यविशेषाणामन्यतमेनावश्यमनुबद्धम्, असच्चेन्न[9] भवति अवश्यं सद् भवति, सच्च घटत्वाद्यन्यतमदिति परो मन्येत।

---

१ 'तस्मादसदपोहेऽघटापोहाभावात् स्वात्मन्यविद्यमानमघटापोहमसदपोहो नाक्षेप्तुं समर्थ इति सच्छब्दस्य न घटादिशब्दैः सामानाधिकरण्यम्, विशेषणविशेष्यभावे हि सामानाधिकरण्यं स्यात्' इत्याशयो भाति॥ २ सच्छब्दोसद्व्या° प्र०॥ ३ सच्छेन सच्छब्देन प्र०॥ ४ °मतां घटः कुतः य०॥ ५ नास्या य०॥ ६ °न्यानामनान्याधारतां भा०। °न्यानां मानाभ्याधारतां य०। (°न्यानामनन्याधारतां ?)॥ ७ विशेषोध्यारो° य०। विशेपोध्यारो° भा०॥ ८ गतार्थं प्र०॥ ९ असत्वेन्न भा०। असत्वेन य०॥

**सामान्यविशेषानुबद्धत्वात् । नैतदस्ति** अर्थाक्षेपेऽप्यनेकान्तः[1] ।·········**असद्द्रयावृत्तिमता विशेषाक्षेपो युज्यते चेत् घटादिभेदानां व्यभिचाराद् द्रव्यत्वमात्राक्षेपस्तर्हि भविष्यति, तदपि न, गुणादिव्यभिचारात् ।**

**[2]एतावच्च·········। न चास्ति सम्भवः ।** तेन नापोहकृच्छ्रुतिः ।

**[3]किमन्यत्वे न सामान्यभेदपर्यायवाच्यनुत् ?**

---

अत्रोच्यते–**नैतदस्ति, अर्थाक्षेपेऽप्यनेकान्तः । अस्य भाष्यं** सव्याख्यानं गतार्थं याव**दसद्व्यावृत्तिमता विशेषाक्षेपो युज्यते [4]चेत् घटादिभेदानां व्यभिचाराद् द्रव्यत्वमात्राक्षेपस्तर्हि भविष्यति,** 'मात्र'ग्रहणाद् द्रव्यत्वसामान्यविशेषमात्रं गृह्यते सद्विशेषणेनेति । अत्रोच्यते—**तदपि न, गुणादिव्यभिचारात्[5] ।** गुणकर्मणोरपि सद्भावात् 'किं द्रव्यं गुणः कर्म वा सत् स्यादसद्व्यावृत्तिमत्' इति संशय एव ।

**[6]एतावच्चे**त्याद्युपसंहारः । पूर्वविधिवादिदूषणोपसंहारवदन्यापोहमात्रेऽपि उपसंहारः । **न चास्ति सम्भव** एतेषां विकल्पानां दोषवत्त्वात्[7] **तेन [8]नाऽपोहकृच्छ्रुतिरि**ति ।

यथा विधिवादिनामन्यापोहवादिनश्च दोषास्तथा सामान्योपसर्जनविधिप्रधानवादिनोऽपीति मा मंस्थाः, मा च मंस्था अन्यापोहवादिलक्षणवदतिप्रसक्तत्वादपवादोऽस्याप्यारब्धव्यो लक्षणस्येत्यत आह–**किमन्यत्वे न सामान्यभेदपर्यायवाच्यनुत्[9]** ? 'अविरोधात्' इति वाक्यशेषः । 'किम्' इति प्रश्ने, [10]किं ४२०-१
त्वं मन्यसे–अन्यत्वे सामान्य-भेद-पर्यायशब्दानामर्थं वृक्षश्रुतिर्नापोहते पृथिवी-शिंशपा-तर्वादिशब्दानामविरोधात्, विरोधाच्च पटादीनपोहत इति, यतोऽस्य विरोद्धाविरुद्धयोरन्यत्वादपोहानपोहप्रसङ्गे तुल्ये त्वयेव मयापि यथा **शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते** इति लक्षणस्यातिप्रसङ्गभयादारब्धव्यम्–

---

१ अयमत्राशयो भाति—अर्थाक्षेपेऽपि न नियमः, सच्छब्दादसद्व्यावृत्तिमतार्थेन घटादेरिव पटादेरप्याक्षेपसम्भवात् । तथा च 'सन् घटः' इत्यत्र घटाक्षेपनियमाभावात् सच्छब्दस्य न घटशब्देन सामानाधिकरण्यम् । अथ मा भूद् व्यभिचाराद् घटादीनामाक्षेपः, द्रव्यत्वमात्राक्षेपो भविष्यति असद्व्यावृत्तिमता अव्यभिचारात् । तदप्ययुक्तम्, गुणादिव्यभिचारात् । सच्छब्दस्य गुणादिष्वपि सम्भवाद् द्रव्यत्वमात्रस्यापि नियमेनाक्षेपाभावादिति ॥ २ 'एतावच्चात्र भवेत्–अन्यापोहवन्तो भेदा वा, अन्यापोहो वा, अन्यापोहसम्बन्धो वा, अन्यापोहस्य स्वाधारो वा' इत्याशयोऽत्र सम्भाव्यते । तुलना–पृ० ६२८ पं० १ ॥ ३ **'अन्यत्वेऽपि न सामान्यभेदपर्यायवाच्यनुत्'** इति **दिङ्ना**गेनाभिहितं प्रमाणसमुच्चयादौ । तत्र सामान्य-भेद-पर्यायवाचिनामनपोहे विधिरेव वस्तुतः कारणमिति विधेरेव शब्दार्थत्वं सिध्यतीत्याशयेन उभयनियमनय उपक्रामति । तुलना—"अत्र च भिक्षुणा 'वृक्षः शिंशपा' इति सामानाधिकरण्यं दर्शयतोक्तं—'वृक्षस्तरुरिति पर्यायाणां च परस्परमनपोह्यत्वम्, अन्यत्वेऽपि च सामान्यभेदपर्यायवाचिनामविरोधात्' [ ] इति । तदिदमनपोहे कारणं नातीव बुध्यत इत्याह–'सामान्याद्यनपोहश्च नाविरोधेन कल्पते ।' इति । किमिति नावकल्पत इत्याह—न हि शब्दस्वरूपाणां स्याद् विरुद्धाविरुद्धता ॥ १४९ ॥ इति ।"— **मी० श्लो० वा० शर्करिका.** पृ० ६९,७० ॥ ४ **चेद् घटादिभेदानामव्यभि°** भा० । **चेद् घटादिभेदानामाव्यभि°** य० ॥ ५ दृश्यतां पृ० ६२७ पं० ७ ॥ ६ दृश्यतां पृ० ६२८ पं० १ ॥ ७ **दोषवंधात्तेन** प्र० ॥ ८ **वापोह°** भा० । **चापोह°** य० । 'अर्थाक्षेपेऽप्यनेकान्तस्तेनान्यापोहकृच्छ्रुतिः' इति यदुक्तं **दिङ्ना**गेन तत् प्रतिविधातुमत्र **मल्ल**वादिसूरिभिः '**तेन** नापोहकृच्छ्रुतिः' इत्युक्तम् ॥ ९ °**वाच्यनुदि विरोधात्** य० । दृश्यतां पृ० ६३८ पं० ७ ॥ १० 'किं त्वं मन्यसे त्वयेव मयापि अतिप्रसङ्गभयादारब्धव्यम्–अन्यत्वेऽपि न सामान्यभेदपर्यायवाच्यनुदिति ?' इति सम्बन्धः ॥

**विधिः । नन्विदमेव विधिना वाचकत्वेऽनुमानं शब्दस्य । यदन्यत्वेऽपि न सामान्य-**

---

**'अन्यत्वेऽपि न सामान्य-भेद-पर्यायवाच्यनुत्, अविरोधात्'** इति । किं कारणमनारभ्यम् ? **विधिः ।** विधिना हि सामान्योपसर्जनं विशेषं शब्दोऽभिदधानो विरोधाभावात् तानपि गमयति तदङ्गभावाद्

---

१ दिङ्नागेन **प्रमाणसमुच्चयवृत्तौ** यदभिहितं तदत्र भोटभाषानुवादतः संस्कृते परिवर्त्योपन्यस्यते । तच्च यथायोगमत्रानुसन्धेयम्—

"तत्र **अन्यत्वेऽपि न सामान्यभेदपर्यायवाच्यनुत् ॥ २५ ॥**

अन्यत्वे तुल्येऽपि सामान्य-भेद-पर्यायशब्दानामर्थं शब्दो नापोहते । कुत इति चेत्, अविरोधात् । [1]पर्यायशब्दस्य तावदपोह्यस्तुल्यः, युगपदप्रयोगात् । [2]स्वार्थश्च प्रतिक्षेप्तुं न युक्तः । सामान्यशब्देनापि स्वभेदेष्वर्थान्तरापोहो भेदशब्देन [3]न नानुमन्यते अर्थित्वात् । यथा शिंशपा न पलाशादि एवं घटाद्यपि न । एतेन [4]सामान्यसामान्यशब्दार्थाप्रतिक्षेपोऽप्युक्तः । एवं सामान्यशब्दः स्वार्थमभिमतविषये [5]स्थापयन् भेदशब्देन भेदभेदशब्देन वा कथं [6]नोपेक्ष्यते ? एवमविरोधात् सामान्यादिशब्दार्थापोहो न युज्यते । समूहश्च तथार्थान्तरवाचकः । एवं च सामान्यविशेषशब्दयोः स्वार्थसामान्ये प्रवर्तमानयोर्द्वयोर्बहूनां वा तद्विशिष्टार्थान्तरवाचकत्वं यथापूर्वोक्तवदुपपद्यते । आह च—

[7]**तन्मात्राकाङ्क्षणाद् भेदः स्वसामान्येन नोज्झितः ।**
**नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता तयोः ॥ २६ ॥**
**अनेकमपि सामान्यं भेदेनाव्यभिचारिणा ।**
**उपात्तं न तयोस्तुल्या विशेषणविशेष्यता ॥ २७ ॥** [ इति संग्रहश्लोकौ PSV[1] ]

किं पुनरत्र कारणं येन भेदशब्दो भेदान्तरशब्दार्थमपोहत इति चेत्,

[8]**भेदो भेदान्तरार्थं तु विरोधित्वादपोहते ।**

भेदार्था हि शब्दाः परस्परविरोधिनः सामान्यार्थापहारित्वाद् राजपुत्रवत् । [9]ततः परस्परार्थं न सहन्ते, [10]यथायं [ वृक्षः ] शिंशपेति शिंशपाशब्दो वृक्षशब्देन सह प्रयुक्तो धवादिभ्यो [11]वृक्षत्वमाच्छिद्य स्वविषये [12]स्थापयन् । एवमितरत्रापि । एवं तावद् [13]भेदशब्द एकद्रव्यापहारित्वाद् भेदान्तरशब्दार्थम[14]पोहते [ इति ] युज्यते ।

अथ घटादिकमसम्बद्धं सामान्यान्तरभेदार्थं कुतोऽपोहत इति चेत्, यस्मात्

**सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः ॥ २८ ॥**

वृक्षशब्देन तु घटादीनां पार्थिवत्वाद्यपहाराद् विरोधः । तेन तदपोहः क्रियमाणोऽनुमन्यते मित्रशत्रुवत् । [15]अर्थतस्तत् ते[16]नापोढमिति गम्यते । एतेन [17]सामान्यान्तरभेदानां गुणादीनां तद्भेदानां च रूपादीनां सम्बद्धसम्बन्धाद् मित्रमित्रशत्रुवद्

---

1 पर्यायशब्दे ( ? ) PSV[1] । पर्यायशब्दस्तावत् तुल्यापोह्यः ( ? ) PSV[2] VT. ॥ 2 न च स्वार्थप्रतिक्षेपो युक्तः ( ? ) VT ॥ 3 **'अनुमन्यते'** इत्यपि पाठोऽत्र स्यात् । 'अगृहीतो नास्ति' ( ? ) PSV[1] । न सह्यते ( ? ) PSV[2] ॥ 4 सामान्यसामान्यशब्दार्थप्रतिक्षेपः प्रत्युक्तः PSV[1] ॥ 5 निवेशयन् ( ? ) । प्रवर्तयन् ( ? ) ॥ 6 **'नापेक्ष्यते'** इति PSV[1]मध्ये दृश्यते इत्यपि ध्येयम् ॥ 7 **तत्त्वसं० पं०** पृ० ३०७ । **सन्मतिवृ० । तत्त्वार्थसिद्ध०वृ०** पृ० ४१२ । **शर्करिका** पृ० ७२ ॥ 8 "अत्र भिक्षुणा पराशः शिंशपेति सामानाधिकरण्यं न भवतीति दर्शयतोक्तम्—भेदो भेदान्तरार्थं तु विरोधित्वादपोहते–इति । भेदशब्दा हि पलाशशिंशपादय एकं वृक्षत्वसामान्यमन्योन्यमपहृत्य राज्यमिव राजपुत्राः स्वविषये स्थापयन्तः परस्परविरोधिनो वर्तन्ते । तेनैकापोहेनैकः प्रवर्तमानः कथं तेन सामानाधिकरण्यं लभतामित्यर्थः ।"—**शर्करिका** पृ० ६९ । **नयचक्र-वृत्ति.** पृ० ६१३ पं० ६, २७ ॥ 9 ततश्च ( ? ) ॥ 10 यथा PSV[2] ॥ 11 वृक्षत्वं व्यवच्छिद्य PSV[1] ॥ 12 स्थापयति ( ? ) ॥ 13 भेदशब्दे PSV[1] । भेदशब्देन······ शब्दार्थापोहो युज्यते' इत्यपि पाठोऽत्र स्यात् ॥ 14 °मपोहमानो युज्यते ( ? ) ॥ 15 अर्थाच्च तत् PSV[1] ॥ 16 'तेनापोह्यत इति गम्यते' इत्यपि पाठः स्यात् ॥ 17 'सामान्यान्तरभेदा गुणादयस्तद्भेदाश्च रूपादयः सम्बद्धसम्बन्धाद् मित्रमित्रशत्रुवद् मित्रशत्रुमित्रवच्चापोढा उपेक्षिताश्च वेदितव्याः' इत्यपि पाठोऽत्र भवेत् ॥

मित्रशत्रुमित्रवच्च अपोह उपेक्षा च वेदितव्ये ।"—PSV[1] C.ed. D. ed. पृ० ७२B–७३A, N. ed. पृ० ८०B–८१B । PSV[2] N. ed. पृ० १६४ B–१६५ A, P. ed. पृ० १६३A–१६४B ॥

अस्य **जिने**न्द्रबुद्धिरचिता **विशालामलवती** व्याख्या भोटभाषानुवादात् परिवर्त्योपन्यस्यते—"पूर्वं 'कृतकत्वादिवत् स्वार्थमन्यापोहेन भाषते' [ पृ० ६०७ ] इत्युक्तम् । इदानीं तस्यापवादम्–**अन्यत्वेऽपी**त्यादिनाह । यः परमः परिहारोऽन्यापोहः स सामान्य-विशेष-पर्यायशब्दार्थपरिहारेणेति । **अन्यत्वे तुल्येऽपी**ति प्रसङ्गकारणमाह, प्रतिषेधस्य प्रसङ्गपूर्वकत्वात्, अन्यत्वं चापोहे निमित्तम् । **अविरोधादि**त्यनपोहकत्वे हेतुः । येऽविरुद्धास्ते परस्परमप्रतिक्षिपन्तो नापोहन्ते यथा द्रव्ये रूपादयः । एवं त्रयाणामविरोधित्वं युगपदभिधायेदानीं प्रत्येकं दर्शयितुमाह–**पर्यायशब्द**[स्य ] इत्यादि । **अपोह्यस्तुल्य** इत्येकार्थत्वमाह । **युगपद्प्रयोगा**दित्येकार्थत्वसाधनम् । तदेकार्थीकृतत्वादुभयोरप्रयोगः । यत्र शक्तौ सत्यामप्युभयोरप्रयोगस्तयोरेकार्थत्वम्, यथा विशेषयोः । य एकार्थास्तेऽविरोधिनो यथा द्रव्ये रूपादयो मित्राणि वा । पर्यायशब्दा अप्येकार्था इति व्यापकविरोधः । येऽविरोधिनस्ते परस्परतोऽप्रतिक्षिप्ता यथा त एव, पर्यायशब्दा अप्यविरोधिन इति व्यापकविरोध एव । **स्वार्थश्च प्रतिक्षेप्तुं न युक्त** इत्यनपोहत्वे हेत्वन्तरमाह । यो यस्य स्वार्थः स तेन नापोह्यते यथा विज्ञानेन स्वार्थः, पर्यायशब्दोऽपि पर्यायशब्दान्तरस्य स्वार्थः । **सामान्यशब्देनापी**त्यादि । सामान्यशब्दस्य वृक्षशब्दस्य यत् स्वसामान्यं वृक्षत्वं तद्विशेषाः स्वभेदाः शिंशपादयः, तेषु अर्थान्तरस्य घटादेर्वृक्षशब्देनापोहो **भेदशब्देन** शिंशपाशब्देन **अनुमन्यत** एव **अर्थित्वात्** । अर्थितो हि शिंशपाशब्देन घटाद्यपोहः । तदेवार्थित्वं दर्शयितुमाह–**यथे**त्यादि । अनेन घटाद्यपोहेनार्थित्वादेकार्थत्वद्योतकभेदशब्दः सामान्यशब्देनाविरुद्ध इति दर्शयति । यथा पलाशादिरूपः शिंशपाशब्दार्थो न भवतीति पलाशादयस्तत्प्रतिक्षेप्या एवं घटादिरूपोऽपि न भवतीति घटादयोऽप्यपोह्याः । ते च वृक्षशब्देनापोह्यन्ते । **एतेने**त्यादिना स्वसामान्यस्य वृक्षत्वस्य यत् सामान्यं पार्थिवत्वं तच्छब्दः पार्थिवशब्दः सामान्यसामान्यशब्दः तेन यदपोह्यमाप्यादि तच्छिंशपाशब्देनाप्यनुमन्यते, अर्थित्वात् । यथा शिंशपा न पलाशादि एवमाप्यत्वाद्यपि नास्ति ।……**एवं सामान्यशब्द** इत्यादि । यथा भेदशब्दोऽविरोधात् सामान्यशब्दार्थं न प्रतिक्षिपति एवं सामान्यशब्दोऽपि सदादिः **स्वार्थं** सत्तादिकम् **अभिमतविषये स्थापयन्नि**ति भेदेष्वनवस्थितत्वात् स्थापयन् गुणादितो व्यवच्छिन्ने द्रव्यादौ निवेशयन्……**भेदशब्देन** द्रव्यादिना **भेदभेदशब्देन वा** पार्थिव-वृक्ष-शिंशपादिशब्देन **कथं नोपेक्ष्यते**? उपेक्ष्यत एव, अर्थित्वात् स्वविषये स्थित्वा निर्विषयस्वार्थानुपपत्तेः । एतेनाभिमतार्थसाधनाद् भेदशब्दः सामान्यशब्दमुपकुरुते । ततश्च सामान्यशब्दस्तेनाविरुद्ध इति दर्शयति । **समूहश्चे**त्यादि अविरोधादप्रतिक्षेपे गुणोत्कर्षं दर्शयति, अथवा अन्योन्याप्रतिक्षेपे हेत्वन्तरमाह । परस्परार्थाप्रतिक्षेपे हि स्वार्थविशिष्टार्थवाचकत्वमुपपद्यते, नान्यथा ।…………**एवं चे**ति परस्परार्थाप्रतिक्षेप एवेत्यर्थः, **द्वयो**रिति यथा 'वृक्षम्' इति प्रकृतिप्रत्यययोः…………। एवं नीलोत्पलमिति नीलोत्पलशब्दयोः……। **बहूना**मिति यथा 'राजपुरुषः सुरूप आगच्छति' इति स्वार्थसामान्ये प्रवर्तमानानां सर्वेषामपि वाक्यपदानामितरेषां च वाक्यार्थवाचकत्वमप्रतिक्षेपे योजनीयम् । अर्थान्तरवाचक[त्वं ] प्रागेव प्रतिपादितमित्याह**—यथापूर्वोक्तव**दिति । 'न हि तत् केवलं नीलं न च केवलमुत्पलम्' [ पृ० ६३० पं० २२ ] इत्यादिना नीलोत्पलशब्दयोः समूहार्थस्य प्रत्येकं नैरर्थक्यदर्शनेन समूहस्यार्थान्तराभिधायकत्वमुक्तम् । **आह चे**ति सामान्यभेदशब्दयोरविरोधे सामान्यशब्देन भेदानामत्यागानुपादाने अधिकृत्य कारिकामाह–**तन्मात्राकाङ्क्षणा**दित्यादि । स्वभेदमात्राकाङ्क्षणादित्यर्थः । आकाङ्क्षा तेषु सन्देहव्यवच्छेदार्थिता । मात्रशब्दो भेदान्तराकाङ्क्षानिरासाय । तथाहि वृक्षशब्दात् पलाशादिविषयैवाकाङ्क्षोत्पद्यते, न घटादिविषया ।………तस्माद् **नोज्झितः** ।…………ननूपात्तः, अनुज्झितत्वादिति चेत्, उच्यते–**नोपात्त** इत्यादि । नोपात्तो न प्रतिपादित इत्यर्थः । यो येषु संशयहेतुस्तेन ते न प्रतिपादिताः, यथा स एव, सामान्यशब्दोऽपि स्वभेदेषु संशयहेतुरिति कारणविरोधः । **साम्ये चैकार्थता तयो**रिति यत्र सामान्यविशेषशब्दाभ्यामुभयमपरिहृतमनुपात्तं च तत्रैकार्थत्वं तत्सामानाधिकरण्यमित्यर्थः । यथा सामान्यशब्देन स्वभेदा अप्रतिक्षिप्ता अत्यक्ताः किमेवं भेदशब्देनापि सामान्यम्? इति पर्यनुयोगं परिहरन्नाह—**अनेकमपी**त्यादि । यद्यपि सामान्यमनेकं तथापि तद् भेदशब्देनोपात्तं प्रतिपादितमित्यर्थः, प्रतिपादनाद् भिन्नस्योपादानस्यासम्भवात् ।…………**अव्यभिचारिणे**ति यस्माद् विशेषः सामान्यं न व्यभिचरति सामान्याभावे विशेषाभावात् तस्मात् तेनोपात्तम् । न **तयोरिष्टा(स्तुल्या ?) विशेषणविशेष्यते**ति वृक्षः शिंशपादिव्यभिचारव्यवच्छेदमपेक्षत इत्यस्ति विशेषणविशेष्यभावः, शिंशपा तु वृक्षसामान्याव्यभिचारं नापेक्षत इति नास्ति । व्यभिचारिणोर्विशेषणयोस्तु विशेषणविशेष्यभावस्तुल्यो यथा नीलोत्पलयोः ।………… **किं पुनरत्रे**त्यादि । सामान्ययोः स्वसामान्यापेक्षया भेदत्वात् पृथगनुपादानम् । **भेदो भेदान्तरार्थ**मिति वृक्षत्वस्य भेदः

भेदपर्यायवाच्यनुत । **त्वया पुनस्त्यक्तोऽन्यापोहवादः, अनिर्वाहकत्वात् । शब्दान्तरार्थापोहं स्वार्थे कुर्वती [ श्रुतिः ] तदर्था स्यात् । सामान्यादिशब्दान्तरार्थात्यागात्तु त्वदनिष्टो नन्वयमेव परमविधिः । विधानं विधिः ।**

---

**विध्येकीभू**[1]**तार्थ**त्वादिति कारणं वक्ष्यति । **नन्विदमेव** विधिना वाच[क]त्वेऽनुमानं शब्दस्य–यदन्यत्वेऽपि सामान्यादीनां विशेषानुगुणानां गतिः । [2]समूहश्च प्रकृतिप्रत्ययादीनां तथार्थान्तरवाचक इति युक्त्या [1]वक्ष्यामः ।

**त्वया पुनरु**त्सर्गवाक्ये महता क्लेशेन प्रतिपाद्याप[3]वादवादेन **त्यक्तः** । किं कारणम् ? **अनिर्वाहकत्वात्** , किमनेन प्रतिज्ञातमर्थमनिर्वहता ? **शब्दान्तरार्थापोहं स्वार्थे कुर्वती** [4]**तदर्था** [अ]न्यापोहार्था **स्यात्** , [5]तत्तु नोक्तमत्यन्तं सामान्यादिशब्दान्तरार्थापोहानिष्टेः । तस्मात् त्यक्तोऽन्यापोहः । ततः किम् ? ततः **सामान्यादिशब्दान्तरार्थात्यागात्तु त्वदनिष्टो नन्वयमेव परमविधिः** । कोऽक्षरार्थो विधिरित्यत आह–**विधानं विधि**रिति । लक्षणतस्तु अनपवादं प्रतिपत्त्याधानं विधिः । स च विधिरेव शब्दार्थः सामान्याद्यन्यशब्दार्थेषु अव्याहतत्वात् परमः [6]श्रेष्ठः ।

---

शिंशपादिः, परस्परतो भिद्यत इति कृत्वा । अत्र विषयेण विषयिनिर्देशाद् भेदो भेदान्तरं च शब्द इति विज्ञेयम् । भेदशब्दो भेदान्तरशब्दार्थमित्यर्थः । **विरोधित्वा**दिति हेतुः । **सामान्यार्थापहारित्वा**दिति विरोधित्वस्य कारणम् । **राजपुत्रव**दिति दृष्टान्तः । राजपुत्राणां पितरि मृते सामान्यार्थो राज्यम्, तस्य तैर्यथासर्वपराक्रममपहृतत्वाद् विरोधिनः, ततश्च परस्परार्थं न सहन्ते । ये सामान्यार्थापहारिणस्ते परस्परविरोधिनः, राजपुत्रवत्, सामान्यशब्दा अपि तथेति स्वभावः । ये विरोधिनस्ते परस्परार्थं न सहन्ते, तद्वदेव, भेदशब्दा अपि तथेति व्यापकविरोधः । **यथे**ति सामान्यार्थापहारित्वं दर्शति । **एकद्रव्यापहारित्वा**दिति सामान्यार्थापहारित्वस्यैवान्वाख्यानम् ।·········विरोधः परिहारहेतुरुक्तः, स च सामान्यार्थापहारित्वात् । सामान्यान्तरस्य पार्थिवत्वादेर्ये भेदा घटादयस्तद्वाचकशब्दैः सह शिंशपाशब्दस्यैकार्थापहारित्वं नास्ति, किं तर्हि ? वृक्षशब्देन । तस्मात् परिहारहेत्वभावान्नापोह इति मन्यमान आह—**अथे**त्यादि । शिंशपासामान्यं वृक्षत्वम्, ततोऽन्यत्वात् पार्थिवत्वं सामान्यान्तरम्, तद्भेदो घटादिः, सोऽसम्बद्धः शिंशपाशब्देन विरोधाभावात्, तच्छब्देन शिंशापाशब्दस्यैकद्रव्यापहारित्वमपि नास्ति । तस्मात् तं **कुतोऽपोहते** ? अविरोधादस्यानपोह एवेत्यर्थः । **सामान्यान्तरभेदार्था** इति तमेव अपोहकारणं विरोधं दर्शयति । विरोधसामान्यमपोहस्य कारणम् । अत्र च यद्यपि न साक्षाद् विरोधस्तथापि परम्परयास्त्येव । तद्दर्शयति–**वृक्षशब्देन** **त्वि**त्यादि । **तेने**त्यादि । शिंशपाशब्दस्य मित्रं वृक्षशब्दः, तदर्थसामान्यवाचकत्वात् । तच्छत्रवो घटादिशब्दाः पार्थिवत्वापहारित्वात् । ततो वृक्षशब्देन **तेन** घटाद्यपोहः क्रियमाणः शिंशपाशब्देनानुमन्यते मित्रशत्रुवत् । **अर्थतस्तत् तेने**ति शिंशपाशब्दार्थः शिंशपासामान्यम्, तच्चाघटादिरूपत्वाद् घटादितो व्यावृत्तम् । तत एवार्थतो गम्यते । शिंशपाशब्दस्य तत्र व्यापारो नास्ति तथापि शिंशपाशब्देन तेन घटाद्यपोढमिति गम्यते, तद्वत्यार्थतस्तस्यापोढत्वात् । **एतेने**ति अनया युक्त्या पार्थिव[त्व]सामान्यात् सामान्यान्तरं द्रव्यत्वम्, तत्सामान्यं सत्ता, तद्भेदा गुणाः कर्माणि च, तेषामपि भेदा रूपादय उत्क्षेपणादयश्च यथासङ्ख्यं स्वविरोधिसामान्यशब्देनापोढा विशेषशब्देनोपेक्षिताश्च सम्बद्धसम्बन्धाद् वेदितव्याः । कथमिति चेदुच्यते–**मित्रमित्रशत्रुव**दित्यादि । अत्र मित्रमित्रेति द्विरुक्तिः परम्परया मित्रप्रतिपादनेच्छयावगन्तव्या, अन्यथा एकीकृतेनैव मित्रेण मित्रस्य प्रतीतेः । तत्र गुणकर्मणी शिंशपाशब्देन द्रव्यशब्देनापोह्यमानानि मित्रमित्रशत्रुवदनुमन्यन्ते । गुणविशेषा रूपादयः कर्मविशेषाश्चोत्क्षेपणादयस्तु शिंशपाशब्देन मित्रशत्रुमित्रवद् द्रव्यशब्देन······अपोह्यमाना उपेक्ष्यन्ते ।"–**विशालामलवती** VT. D. ed. पृ० २६६ A–२७० A, P. ed. पृ० ३०१ A—३०५ A ॥

१ दृश्यतां पृ० **४२४**–२ ॥ २ तुलना–पृ० ६३८ पं० ११ ॥ ३ °**पवादन त्यक्तः** भा० ॥ ४ **तदर्थान्यापोहार्था** प्र० ॥ ५ **तत्तु त्यक्तमत्यन्तं** इति सम्यग् भाति ॥ ६ **श्रेष्ठः** य० प्रतौ नास्ति । तुलना–पृ० ६३९ पं० ४ ॥

**सामान्यानुदुक्तेः सामान्ये विशेषविध्यर्थौ न व्याहन्यते। यथा न हि घटादि सामान्यानुपसर्जनं भवितुमर्हति, वस्तुत्वात्, आत्मवत्। यथा स सन्तानाख्यसामान्योपसर्जनस्तमन्तरेण न भवितुमर्हति आ मुक्तेरेवं घटशब्देनाप्यागृहीता मृदादयस्तच्छब्दार्थान्तःपातित्वादाकारादिवत्।**

**भेदास्तूच्यन्त एव, घटसामान्यस्य तदङ्गत्वात् तद्भवनभवनात्मकत्वात्,**

---

तत्र तावत्—**सामान्यानुदुक्तेः सामान्ये** [1]**विशेषविध्यर्थौ न व्याहन्यते,** त्वयैव 'सामान्यं न नुदति' इत्युक्तत्वादस्मदिष्टम्—उपसर्जनीकृतसामान्यो विशेषो विधिनैवोक्त इति। तस्य निदर्शनम्—**यथा न** ४२०-२
**हि घटादी**त्यादि। साधनमिदम्—सामान्योपसर्जनमेव न सामान्यानुपसर्जनं भवितुमर्हति घट-पटादि बाह्यवस्त्विति प्रतिज्ञा। **वस्तुत्वा**दिति हेतुः। **आत्मव**दिति दृष्टान्तः, आन्तरोऽर्थो नामरूपसन्तानाख्य आत्मा, यथा स शरीरादिप्रतिक्षणदेशभिन्नरूपादिसुखविज्ञानादिविशेषत[2]त्त्वोऽर्थः सन्तानाख्यसामान्योपसर्जनस्तमन्तरेण न भवितुमर्हति नरक-मनुजादिविशेषत[3]त्त्वो वाऽऽ**मुक्तेः** यावद् मोक्षस्तावद् विशेषाः सामान्यानुविद्धा एव तथा घटादयोऽपि बाह्या इत्यत आह—**एवं घटशब्देनाप्यागृहीता मृदादय** इति साध्ये बाह्ये सामान्यमृदाद्युपसर्जनं घटविशेषार्थं दर्शयति। [4]**तच्छब्दार्थान्तःपातित्वा**दिति आत्म-घटाद्यविशेषवाचिना सर्वनाम्ना वस्तुत्वसामान्यस्य [5]साध्येनानुगतत्वं विशेषाविनाभाविनो दर्शयति। **आकारादिव**दिति प्रतिक्षणदेशादिभिन्नरूपादिविशेषपरमार्थस्य ऊर्ध्वग्रीव-पृथुकुक्षित्वादिसामान्योपसर्जनस्य सद्भावात्।

एवं तावद् घटे विशेषशब्दार्थे पार्थिव-द्रव्य-सत्त्वादिसामान्यात्यागो युक्तः, विधिप्रधानशब्दार्थत्वात्। एवं तर्हि 'वृक्षः शिंशपा' इति शिंशपाविशेषो विधिना कथमुच्यते वृक्षविधावनुपसर्जन इत्यत्रोच्यते—**भेदास्तूच्यन्त एव,** 'वृक्षः शिंशपा' इत्यादिवद् [6]घटस्य ये ये रूपादयो [7]युगपदयुगपद्भाविनस्त एव मुख्यशब्दार्थत्वादुच्यन्ते, **घटसामान्यस्य तदङ्गत्वाद्** घटाद्युपसर्जनरूपादिविशेषपरमार्थत्वात् **तद्भवनभवनात्मकत्वात्,** [8]स विशेषो भवनं भावः प्रत्येकं निर्विकल्परूपादिभवनमा[9]त्मलाभः, तद्भवन[भवन]मात्मास्य घटस्येति तद्भवनभवनात्मको घटः 'शिबिकावाहकया[10]ने ईश्वरस्येव यानवत्' इत्युक्तं प्राक्। तन्निरूपयति— ४२१-१
**रूपादिरूपादिस्वरूपशब्दार्थत्वव**दिति, यद्यपि युगपद्भाविनो रूपादिस्वभावा एव सन्तो रूप-रस-गन्ध-स्पर्श-शब्दा एव निर्विकल्पा वस्तुत्वाच्छब्दार्थः प्रतिक्षणवर्त्ययुगपद्भाविनो वा विशेषास्तथापि सामान्योपसर्जनद्वारेण [11]इति सामान्यशब्दाः प्रयुज्यन्ते, न तु कल्पितेन परमार्थसता वा विना तेन सामान्येन शब्दार्था भवितुमर्हन्तीति। तस्मात् सामान्यशब्दप्रयोगो विशेषप्रतिपादनार्थः, विशेषास्तु विवक्षिता एव परमार्थत्वादस्य नयस्य।

---

१ **विशेषणविध्यर्थौ** य० ॥ २ °**तत्त्वार्थः** य० ॥ ३ **तत्त्वो मुक्ते**° य० ॥ ४ **तच्छब्दार्थतःपाति**° प्र० ॥ ५ **साध्यनानु**° भा०। **साध्यतानु**° य० ॥ ६ **घटस्या येये** भा०। **घटस्यापोष** य० ॥ ७ **युगपद्भाविनो** भा० ॥ ८ **स हि शेषो** प्र०। (स हि विशेषो?) ॥ ९ °**मात्रलाभः** प्र० ॥ १० °**यानेश्वरस्येव याचनवत्** प्र० ॥ ११ **प्रति** प्र० ॥

**रूपादिरूपादिस्वरूपशब्दार्थत्ववत् । पर्यायशब्दा अपि तद्विधानाः घटनविशेषस्य कुटनकुम्भाद्यर्थात्मकत्वात् । [न] हि कुटन[-कुम्भताभ्यां विना घटनम्, नापि घटनं विना कुटन-कुम्भते] । इत्येतदवगम्यताम्—सामान्यविशेषपर्यायशब्दार्थानामन्यत्वेऽपि विधिप्राधान्यादेव तान्नापोहते ।**

**विध्यतिक्रमे त्वप्रस्तुतासत्त्वशब्दार्थापत्तेरन्यापोहायुक्तिश्च । विधिपक्षे तु साक्षादेव स्वार्थं ब्रूते । पर्यायशब्दस्य तावद् विधेय एवार्थः, दर्शनात्, द्विमातृवत् । विशेषणस्वरूपापन्नविशेष्यप्रतीतित्वाद् युगपदप्रयोगेऽपि स एव भेदः प्रतीयते । न हि स्वार्थानुपातित्वाद् विधिः स्वरससमापतितः प्रतिक्षेप्तुं युक्तः ।**

---

**पर्यायशब्दा अपी**त्यादि । ये पुनः पर्यायशब्दास्ते **तद्विधाना** एवमेव विशेषं विदधति, **घटनविशेषस्य कुटन-कुम्भाद्यर्थात्मकत्वात्**, तस्य कुटिलता कुटनम्, घटनं चेष्टा, कुम्भता वृत्तत्वम् । ताभ्यां घटन-कुटनाभ्यां विना नास्ति कुम्भता नाम काचित्, तया वा विना न घटन-कुटने स्त इति [**न** ?] **हि कुटने**त्यादिनान्योन्याविनाभावं दर्शयति ।

प्रकृतमुपसंहरति—**इत्येतदवगम्यता**मित्यादिना । इत्थं प्रतिपद्यस्व[1] यथा 'घटः' इत्युक्ते पटस्तत्प्रतिपक्षशब्दार्थोऽन्यस्तथैवाप्रतिपक्ष**सामान्य-विशेष-पर्यायशब्दार्था** अन्ये, ततस्तेषामन्यत्वे **तुल्ये विधिप्राधान्यादेव तान् नापोहते**,[2] नान्यत् कारणं विधेः । अतोऽस्माकमपवादलक्षणान्तरारम्भक्लेशादृते व्यापि युक्तं चासत्योपाधिसत्यविध्यर्थलक्षणशब्दार्थकथनं श्रेयोगुणप्रकर्षयुक्तं च ।

४२१-२ भवतस्तु **विध्यतिक्रमे**[3] **त्वप्रस्तुतासत्त्वशब्दार्थापत्तेरन्यापोहायुक्तिश्च**[4] । यदि विधिर्नेष्यते ततो न केवलावव्याप्त्यतिप्रसङ्गदोषावेव,[5] किं तर्हि ? एषोऽप्यनिष्टोपचयः—उदकाद्याहरणार्थिने 'घटः' इत्युक्ते तत्राप्रस्तुतस्य[6] अविवक्षितस्य पटादेरघटस्याऽसत्त्वं[7] व्यावृत्तिरविवक्षितोऽशब्दार्थ एव शब्दार्थ इत्येतदापन्नम् । अनिष्टं चैतदिति ।

किञ्च; **विधिपक्षे**ऽस्मदिष्टे **साक्षादेव** अव्यवहितमेव[8] **स्वार्थं ब्रूत** इत्येष च विशेषः । तद्यथा—**पर्यायशब्दस्य तावदि**त्यादि यावत् **प्रतिक्षेप्तुं युक्त** इति । पर्यायशब्दस्य घट-कुटादेर्**विधेय एवार्थः**, कस्मात् ? **दर्शनात्**, विधेयत्वदर्शनात्, तदेव हि विधेयं घटनं कुटनमुभयं वा । किमिव ? **द्विमातृवत्**, यथा विशेष[ण]द्वारेण विशेष्यप्रधाने निर्देशे 'राधकमाता, पूर्णकमाता, राधकपूर्णकमाता' इति द्वाभ्यामन्यतरेण वा विशेष्यते सैव तथा **विशेषणस्वरूपापन्नविशेष्यप्रतीतित्वात्** सम्बन्धिविशिष्टरूपप्रतिपत्तेरित्यर्थः, **युगपदप्रयोगेऽपी**ति निमित्तभेदेऽप्यर्थैकत्वाद् युगपदप्रयोगेऽपि **स एव** निमित्तोपलक्षितो **भेदः प्रतीयते** । स्यान्मतम्—निमित्तभेदे निमित्तिभेदात् किमर्थं निमित्तान्तरापोहो न भवतीति, एतच्च **न हि स्वार्थानुपातित्वाद् विधिः स्वरससमापतितः प्रतिक्षेप्तुं युक्तः** । निमित्तान्तरेणापि तस्यैव विशेषार्थस्य

---

१ प्रतिपाद्यश्च प्र० ॥ २ °न्यादेवदत्तान् प्र० ॥ ३ °क्रमेण प्रस्तुत° य० ॥ ४ (°पत्ति° ?) ॥ ५ °लावव्याप्यति° भा० । °लावध्यायति° य० ॥ ६ तवाप्र° भा० । ७ °टस्यात्वं प्र० ॥ ८ अवविहतमेव य० । अविहितमेव भा० ॥

**अत एव सामान्यशब्देनापि स एव विशेषार्थः साक्षादव्यवहितवृत्तिना विधिना प्रतीयते । सर्वथा अव्यवहितवृत्तिना विधिना स्वभेदाः समाक्षिप्तास्तद्रूपपरमार्थत्वेनाङ्गाङ्गिभावगत्या ।**

**प्रतिषेधव्यापारनिराकाङ्क्षं विध्यर्थस्य प्रतिपत्तौ उपसर्जनत्वेनापोहबुद्धेरुत्पत्तेर्विधिः प्रधानोऽप्रधानोऽपोहः, यथा शिंशपाद्युपहारिवृक्ष[1]शब्दार्थेऽघटघटानवतारः ।**

---

प्रतीतेः स एवार्थः स्वेनैव रसेन समापतितः प्रतिपादयितुमिष्टश्च किमिति प्रतिक्षिप्यते ? न हि स्वार्थप्रतिक्षेपो युक्तः । किं कारणम् ? दूरमपि गत्वा तेन विना तदगतेः 'घटः' इत्युक्ते 'अघटो न भवति' इति प्रतिषेधद्वयेनार्थान्तरं व्यावर्त्यापि घट एवावश्यं प्रतिपत्तव्यः, स च कुट एवेति कुटत्वेन विना घटत्वाभावात् कुटत्वस्याप्यविनाभाविनः स्वेनैव रसेन प्रतीयमानत्वादक्लेशेनागतो विधिरेव शब्दार्थः पर्याय इति ।

४२२-१
[2]किञ्चान्यत्, **अत एव** अविनाभावात् **सामान्यशब्देनापि** घटस्य पार्थिवादिना [3]सामान्यसामान्यशब्देन वा द्रव्य-सत्त्वादिना विधीयमानः **स एव विशेषार्थो** घटाख्यः **साक्षादव्यवहितवृत्तिना विधिना प्रतीयते** । तानि हि भेदरूपाणि अनेकात्मकस्य वस्तुनः सामान्याद्याकारेणापि गृह्यमाणानि कथं न विधीयन्ते ? **सर्वथे**त्यादि, तस्मादव्यवहितविधिवृत्तिना शब्देन घटस्यैव **स्वभेदाः समाक्षिप्ताः** । यथोक्तम्–[4]**तद्द्रव्यपृथिवीमृद्घटादि(भि)सम्बन्धादस्ति द्रव्यं पार्थिवो मार्तिको घट इति घटे सम्प्रत्ययः** [    ] इति । तत् कथमिति चेत्, उच्यते–**तद्रूपपरमार्थत्वेन,** तानि भेदरूपाणि एव सामान्यवदाभासमानानि अविद्यमानान्येव वा सामान्यादिरूपाणि भेदप्रतिपादनपरतया तस्यैव विशेषस्य परमार्थरूपत्वेनाङ्गाङ्गिभावं गतानि, असत्योपाधिसत्यशब्दार्थत्वात् । तथा चा**ङ्गाङ्गिभावगत्या** तद्रूपपरमार्थरूपया **अव्यवहितवृत्तिना विधिना स्वभेदाः समाक्षिप्ता** इति वर्तते ।

**प्रतिषेधव्यापारनिराकाङ्क्ष**मित्यादि यावद् **घटानवतार** इति । योऽपि त्वयान्यापोह इष्टः सोऽपि विधिमन्तरेण न भवति, यस्मात् 'अघटो न भवति' इत्येत[5]मविवक्षितं द्विःप्रतिषेधमनादृत्यानपेक्ष्य विधिरूपेण विवक्षित**विध्यर्थस्य** घटस्य [6]**प्रतिपत्तौ** सत्यामुत्तरकालं भवति, नाप्रतिपत्तौ । त[7]स्यैवं चरितविध्यर्थस्य घटस्य **उपसर्जनत्वेनापोहबुद्धे**रघटाभावबुद्धे**रुत्पत्ते**[8]रवश्यात्मा **विधिः प्रधानोऽप्रधानोऽपोह** इति । ४२२-२
किमिव ? **शिंशपाद्युपहारिवृक्षश[9]ब्दार्थे[ऽ]घटघटानवतारवत्**, यथा 'वृक्षः' इत्युक्ते शिंशपादिभेदानामन्यतमेन विनार्थवान्न भवति वृक्षशब्द इति शिंशपादि उपहरन्नर्थवान्, तस्मिन् मूलादिमति शिंशपाद्यवश्यम्भाविविशेषस्व[10]भावेऽर्थे[ऽ]**घटानवतारः,** 'अघटो न भवति' इत्यस्य तु दूरत एव, नैवासौ शब्दार्थो गुडमाधुर्यगतिवदर्थापत्तिलभ्यत्वात् । **घटानवतार** इत्येव वा पाठः, घटस्य वृक्षार्थेऽ[11]वकाशाभाववदनुपात्तावृक्षापोहस्य कोऽवकाश इति ।

---

१ '°**शब्दार्थे घटानवतारः**' इत्यपि पाठान्तरम् ॥ २ **किंचादन्यत एव** प्र० ॥ ३ तुलना–पृ० ६३९ पं० १७ ॥ ४ उद्धृतमेतत् प्रागपि नयचक्रवृत्तौ पृ० ३३ पं० १० इत्यत्र ॥ ५ °**तदविव**° य० ॥ ६ **प्रतिपत्तौ स्यामुत्तरकालं** प्र० ॥ ७ **तस्येवं** प्र० । (तस्यैव?) ॥ ८ °**रवस्यात्मा** य० ॥ ९ '°**शब्दार्थे घटाघटानवतारवत्**' इत्यपि पाठोऽत्र भवेत् ॥ १० °**भावेर्थघटान**° प्र० । अत्र '°**भावेऽर्थे घटानवतारः, 'घटो न भवति' इत्यस्य**' इत्यपि पाठः सम्भवेत् ॥ ११ °**वशाभाव**° प्र० ॥

**यदि[1] तु सोऽप्यपोहपर एव स्यात् ततोऽवृक्षव्यावृत्तिव्यापृतत्वाद् वृक्षभेदं नाक्षिपेद् नानुमन्येत न व्युदस्येत्, अनर्थित्वात्, अवृक्षाभवनवत् । अवृक्षो घटादि[2]·········व्यापार एव नास्ति ।**

**यदसौ वृक्षार्थं शिंशपादिभेदात्मकं स्वार्थमनन्यत्वेनाक्षिपति तस्मात् तेन सह सामानाधिकरण्यं प्रतिपद्यते तद्भवनविध्येकार्थीभावात् ।**

**तद्भवनभवनविधिविनाभावे तु न युज्यते भेदाक्षेपाभावात् । भवनविधिविनाभूतं भेदानाक्षेपि न समानाधिकरणं वृक्षः शिंशपेति त्वदभिमतं वस्तु स्यात्, अभवत्त्वात्, वन्ध्यापुत्रवत् ।**

---

स्यान्मतम्–अत्रापि 'वृक्षः' इति 'अवृक्षो न भवति' इत्यपोह एवोच्यते, न शिंशपाद्युपहारः, [3]तस्यैव [4]विसंवादस्थानत्वाद् न स्वार्थ इति । अत्रोच्यते—**यदि तु सोऽप्यपोहपर एव स्या**दित्यादि । यदि तु सोऽपि वृक्षशब्दोऽपोहपर एवाभविष्यत् **ततः सोऽवृक्षव्यावृत्तिव्या[5]पृतत्वाद् [6]वृक्षभेदं** शिंशपादीन्नाक्षि[**पेत्**, आक्षि]पतीति चेष्टं शिंशपादिसामानाधिकरण्यदर्शनात् । तथा **नानुमन्येत** अनाक्षिप्तत्वात् तमर्थम्, अनुमन्यते तु । **न [7]व्युदस्येत्** 'अपोह एव' इत्यभावमात्रार्थत्वात् खपुष्पवत् । वक्ष्यति चोपसंहारे–[8]**शून्यमात्रत्वात् किं कः केन कस्माद्वापोहते?** इति । कुतोऽनाक्षेपाननुमत्यव्युदासा इति चेत्, उच्यते–**अनर्थित्वात्,** अनर्थी हि शिंशपादिना भेदेन वृक्षशब्दः, तस्मान्नाक्षेपादीन् कुरुते । किमिव? [9]**अवृक्षाभवनवत् ।** तद्व्याख्या–**अवृक्षो घटादी**त्यादिर्गतार्था यावद् **व्यापार एव नास्ती**ति ।

**यदसा**वित्यादि । विधिवादे त्वस्मत्पक्षे यस्मादसौ वृक्षशब्दो वृक्षार्थं घटादिभ्योऽन्यत्वेन शिंशपादि-
४२३-१ भेदात्मकं स्वार्थमनन्यत्वेनाक्षिपति तस्मात् तेन सह सामानाधिकरण्यं प्रतिपद्यते–वृक्षः शिंशपेति, तद्भवन[10]-विध्येकार्थीभावात् ।

**तद्भवनभवनविधिविनाभावे [11]तु न युज्यते ।** तत्समानाधिकरणं भवनं भवनमस्य तद्भवनभवनम्, तस्य तद्भवनभवनस्य **विधि**रात्मलाभः स्थितिराचारः, तेन [12]**विनाभावे** तद्विरहितत्वे **न घटते** घटां नोपैति, भवनविधिविनाभूतस्य **भेदाक्षेपाभावात्,** न ह्यभवतो भेदा आक्षेपकत्वं वास्ति यतः समानाधिकरणता स्यात् । साधनमप्यत्र–[13]भवनविधिविनाभूतं भेदानाक्षेपि न समानाधिकरणं वृक्षः शिंशपा इति त्वदभिमतं वस्तु स्यात्, [14]**अभवत्त्वा[15]त्,** वन्ध्यापुत्रवत् । अनुपपन्नसामानाधिकरण्यभेदाक्षेपानु[16]मति त्वदिष्टं 'वृक्षः शिंशपा' इति पदद्वयाभिधेयम्, अभवत्त्वात्, वन्ध्यापुत्रवत् ।

---

१ तुलना–पृ० ६४६ पं० ४ ॥ २ 'अवृक्षो घटादि, तदभवनस्याप्रस्तुतत्वाद् वृक्षशब्दस्य तत्र व्यापार एव नास्ति तथाऽप्रस्तुतत्वाद् वृक्षभेदाक्षेपे वृक्षशब्दस्य व्यापार एव नास्ति' ईदृशं किमपि मूलं सम्भाव्यते ॥ ३ **तस्येव** प्र० ॥ ४ (विवादस्थानत्वाद्?) ॥ ५ °**व्यावृत्तत्वाद्** प्र० ॥ ६ '**वृक्षभेदान्**' इत्यपि पाठोऽत्र भवेत् ॥ ७ **व्युदस्येवपोह** प्र० ॥ ८ दृश्यतां पृ० ६४५ पं० ४ ॥ ९ दृश्यतां पृ० ६४६ पं० २३ ॥ १० °**विधिकार्थी**° प्र० ॥ ११ **तु प्रयुज्यते तत्समाधिकरणीभवनं** प्र० ॥ १२ **विना अभावे** प्र० ॥ १३ **भवनविधिभूतं** प्र० ॥ १४ **अभत्वात्** य० ॥ १५ दृश्यतां पृ० ६४७ पं० ६ ॥ १६ पृ० ६४४ पं० २ इत्यत्र निर्दिष्टा अनुमतिरत्राभिप्रेता ॥

**कुतोऽस्य भेदस्य भेदत्वम्? कथं सोऽपि तर्ह्यभेदः? यद्यसावपि भेदो न भवति न तर्हि वृक्षो भवति, अभूतशिंशपादिभेदत्वात्, घटवत् । सोऽप्येवमेव घटो न भवति, अभूतग्रीवादिभेदत्वात्, वृक्षवत् । यावत् परमाणुर्न भवति, अभूतरूपादिभेदत्वात्, विज्ञानवत् । एवं च सर्वमिदं शून्यमापद्यते । कः किं केन कस्माद्वापोहते?**

**अथ कथञ्चिद् भवत्यपि वृक्षस्ततः स्वार्थाद्युक्तः स एव विधिर्विषयः संवृत्तोऽर्थः । तदुपसर्जनश्चापोहोऽसत्त्वादसत्यः । असत्योपाधिः सत्यः शब्दार्थः । स च [1]विशेषार्थविधिः ।**

---

इतर आह–**कुतोऽस्य भेदस्य भेदत्वम्**, शिंशपादेर्वृक्षभेदाभिमतस्य तद्भेदत्वम्? वृक्षसामान्यस्यानुवृत्तिलक्षणस्याऽवृक्षाभावत्वे सत्यसिद्धत्वात् कस्य भेदः शिंशपादिः? तस्माद् भेदस्य शिंशपादेर्भेदत्वं कुतः? नैवास्तीत्यर्थः । **कथं सोऽपि तर्ह्यभेदः**? न भवति शिंशपादिर्वृक्षः अभेदोऽन्यस्मादनिवृत्तोऽनपोहः शिंशपावृक्षाभावाव्यावृत्तो वृक्ष एव न भवति, कुतो भेदः शिंशपादिर्वृक्ष इति ।

अत्रोच्यते–**यद्यसावपी**त्यादि अनिष्टापादनसाधनम् । **यद्यसावपि भेदो न भवति** शिंशपादिः **न तर्हि वृक्षो भवती**ति वृक्षस्यैवावृक्षत्वमवस्तुत्वं प्रतिज्ञायते । हेतुः–**अभूतशिंशपादिभेदत्वात् । घटव**दिति दृष्टान्तः । **सोऽप्येवमेवे**त्यादि, यदि तु सोऽपि घटो न भवति भेद इतीष्यते तस्याप्यघटत्व**मभूतग्रीवादिभेदत्वात्, वृक्षवत्** । एवं ग्रीवादिरभूतकपालादित्वात् इत्यादि यावत् परमाणुर्न भवति, ४२३-२
अभूतरूपादिभेदत्वात्, विज्ञानवत् । रूपादिरप्यरूपादि, अभूतरू[3]पादिक्षणभेदत्वात्, विज्ञानवदेव । सर्वत्र वा सामान्येन न [4]भवन्त्येतेऽर्थाः स्वभेदशून्यत्वात् खपुष्पवदिति ।

**एवं चेत्या**दि [5]प्रस्तुतदोषापादनोपसंहारः । **एवम्** अनेन विधिना **सर्वमिदं** दृश्यादि प्रत्यक्षाभिमतमनुमेयमभिधेयं वा वस्तु **शून्यमापद्यते** त्वन्मतेनैव । **कः किं केन कस्माद्वापोह**ते? सर्वस्य [6]शून्यत्वे 'कः किम्' [7]इत्यादि कर्तृकर्मकरणापादानभूतानां शब्दादीनामभावेऽपोहाभाव एवमित्यर्थः ।

**अथ कथञ्चि**दित्यादि । मा भूदेष सर्वशून्यत्वदोष इति त्यक्त्वा भवनाभावमात्रा[8]थैकान्तापोहकल्पनां केनचित् प्रकारेण **भवत्यपि [9]वृक्षो**ऽवृक्षो [10]न भवति, शिंशपा भवत्यपि इतीष्यते शब्दार्थशून्यत्वदोषभयात् **ततो** वयं ब्रूमः– **स्वार्थाद्युक्तः** '[11]**स्वार्थं कुर्वती श्रुतिरभिधत्ते**' [ ] इत्यादि[12]वचनात् **स एव विधिर्विषयः** [13]**संवृत्तोऽर्थः** । तदिदानीं प्रस्तुतनयमतेन शब्दार्थं योजयति–**तदुपसर्जनश्चापोहोऽसत्त्वादसत्यः**, विशेषार्थस्य विधेरुपसर्जनोऽपोहः, स चासत्त्वादसत्यः, उक्तवदेव प्राग् विस्तरेण **असत्योपाधिः सत्यः [14]शब्दार्थः**, स च विशेषमेव विदधाति नापोहते इत्येष शब्दार्थविधिरिति ।

---

१ पृ० ६४४ पं० १४ ॥ २ दृश्यतां पृ० ६४६ पं० १९ ॥ ३ °रूपा । क्षण° य० ॥ ४ भवन्त्येतोर्था: भा० । भवन्त्यतोर्थाः य० ॥ ५ प्रयुक्तस्तुतदोषा° भा० । प्रयुक्तस्तुतद्दोषा° य० ॥ ६ शून्यत्वो भा० । (शून्यत्वात्?) ॥ ७ इत्यादि कर्मकरणा° य० ॥ ८ °कांत्यपोह° प्र० ॥ ९ वृक्षो वृक्षो भा० ॥ १० न भवति शिंशपा न भवति शिंशपा प्र० ॥ ११ पृ० ६०९ ॥ १२ °वचनाश एव भा० । वचनांश एव य० ॥ १३ संवृतो° प्र० ॥ १४ शब्दस्यार्थः भा० । अयं भा० पाठोऽपि समीचीन एव ॥ १५ इत्येव शब्दार्थ° य० । इत्येशब्दार्थ° भा० ॥

**एतेन सामान्यशब्दार्थविशेषताप्युक्तैव । सामान्यस्य स्वार्थं विशेषशब्दोऽभिधत्ते तत्त्वेनात्मानं विदधदभेदत्वासत्त्वापत्तित्यागेन शिंशपादिसम्परिग्रहेण अत्यजन्नेवानुवृत्तिव्यावृत्ती तदुपसर्जनाशिंशपाऽभवनबीजतां यान् ।**

**यदि[1] तु सोऽप्यपोहपर एव स्यात् ततः शिंशपाशब्दो न विदध्याद् वृक्षार्थं व्यावृत्तत्वात् अर्थापत्त्या नानुमन्येत वोपात्तार्थाविरोध इति अशिंशपाऽभवनवत् ।**

---

**एतेन सामान्यशब्दार्थविशेषताप्युक्तैव** । यथान्यत्वे विशेषप्राधान्यात् सामान्य-भेद-पर्याय-
४२४-१ शब्दार्थास्तदङ्गत्वात् तदात्मकत्वाद्वा नापोह्यन्ते तथा विवक्षितशब्दार्थादन्यस्य विशेषशब्दार्थस्य [2]विशेषशब्दार्थस्य वा **सामान्यस्य स्वार्थं विशेषशब्दो[ऽ]भिधत्ते** । कथम् ? **तत्त्वेनात्मानं** सामान्येन सहैकीभावं **विदधत्** आत्मन उपसर्जनभावे साहायकीकारयन् । किं करोति ? **स्वार्थं**[3] विधत्ते इति वर्तते । **अभेदत्वासत्त्वापत्तित्यागेन**[4], न च वृक्ष-पार्थिव-मृद्-द्रव्य-सत्त्वसामान्यानि त्यक्त्वा [5]विशेषमेव तैरेकान्तेन [6]विविक्तं प्रतिपादयति तथारूपार्थासम्भवात् सामान्योपसर्जनत्वोपायप्रतिपाद्यविशेषात्मलाभत्वात्, नापि 'अवृक्षाशिंशपादि न भवति' इत्यसत्त्वापत्तिमेव स्वार्थप्रतिपत्तिरहितां ब्रूतेऽभिधेयाभावे शब्दार्थव्यवहारोच्छित्तिप्रसङ्गात् । कोऽसौ विशेषशब्दस्तदर्थो वेति चेत्, उच्यते—**शिंशपादिः, तत्सम्परिग्रहेण** वृक्षादेः [7]सदन्तस्यानुवृत्तेः सामान्यस्य सम्परिग्रहेण तदभावावृक्षाद्य[8]सर्दन्तव्यावृत्त्यपोहपरिग्रहेण चात्यजन्नेवानुवृत्तिव्यावृत्ती, किं कारणं न ते त्यजति ? इति चेत्, उच्यते—यस्मात् **तदुपसर्जनाशिंशपाऽभवनबीजतां यान् स्वार्थमभिधत्ते** गच्छन् व्रजन्नित्यर्थः, स्वार्थानुवृत्तिसामान्योपसर्जनत्वस्य अशिंशपाया घटादेस्तत्राभवनलक्षणस्य च व्यावृत्तिसामान्यस्य स्वार्थः शिंशपाशब्दस्य शिंशपार्थः, स बीजं तयोरनुवृत्तिव्यावृत्त्योः, इतरथा किमसावपोहेताप्रतिपादयन् किञ्चित् ?

**यदि तु सोऽपी**त्यादि पूर्ववद् ग्रन्थ ईषद्विशिष्टः प्रसङ्गो यावद् **विशेषार्थविधिरि**त्युपनयः । तत्र विशेष उच्यते—'वृक्षः शिंशपा' इत्यत्र **शिंशपाशब्दो न विदध्याद् वृक्षार्थं** शिंशपाविशेषात्मापन्नं [9]**व्या-**
४२४-२ **वृत्तत्वा**दिति पूर्ववद् गमः, **अर्थापत्त्या नानुमन्येत वा** 'अवृक्षो न भवति' इत्युक्तेऽर्थादापन्नं 'वृक्षो भवति' इति, अयमर्थो मा भूत्, इष्यते चासौ, कुतः ? उपात्तार्थाविरोधात्, **'उपात्तार्थाविरोध इति'** अत्र इतिशब्दस्य हेत्वर्थत्वात् । **अशिंशपाऽभवनव**दित्यादिः '[10]अवृक्षाभवनवत्' इत्यादितुल्यः सामान्यगमविपर्ययेण

---

१ दृश्यतां पृ० ६४४ पं० १ ॥ २ प्रमाणसमुच्चयवृत्तौ 'सामान्यशब्दो विशेषशब्देन सहाविरुद्धः' इत्येतद्दर्शनावसरे **भेदभेदशब्दो**ऽपि गृहीतः । दृश्यतां पृ० ६३८ पं० १० । अतोऽत्र **'विशेषविशेषशब्दार्थस्य'** इत्यपि पाठो भवेत् । तुलना—पृ० ६४३ पं० १ ॥ ३ 'स्वार्थमभिधत्ते' इति अनन्तरमेवोक्तं वक्ष्यते च पुनरपि पृ० ६४४ पं० १६ इत्यत्र । अतः **'स्वार्थमभिधत्ते'** इति पाठोऽत्र सम्भाव्यते ॥ ४ **°त्वात्सत्वपत्ति°** प्र० ॥ ५ **विशेषव तैरेका°** प्र० ॥ ६ **विवक्तं** य० । **विक्तं** भा० ॥ ७ **सदत्तस्या°** भा० । **सदसत्तस्या°** य० । अत्र **'सदंशस्या°'** इति सम्यग् भाति । एवमग्रेऽपि ॥ ८ **°सदंत°** य० । **°संदंत°** भा० ॥ ९ **'व्यावृत्तिव्यापृतत्वादिति'** इति पाठोऽत्र सम्यग् भाति, दृश्यतां पृ० ६४४ पं० १ ॥ १० पृ० ६४४ पं० २ ॥

[1]……**अभवत्त्वादवृक्षत्वाद्**………**विशेषार्थविधिः ।**

**यत्तु '[2]अविरोधादन्यत्वेऽपि सामान्यादिशब्दार्थानपोहः' इत्युक्तं सोऽप्येवमेवाविरोधो घटते भवनविध्येकार्थीभूतत्वात् ।**

**समूहश्च तथार्थान्तरवाचकः । एवं च सामान्यविशेषशब्दयोः स्वार्थसामान्ये वर्तमानयोस्तद्विशिष्टार्थवाचकत्वम्, द्व्यादिसमूहस्य वाक्यार्थवाचकत्वम् ।**

---

तदविनाभाविविशेषार्थगमनिकया नेयः '[3]**अभवत्त्वात् अवृक्षत्वात्**' इत्यादिहेतुकः, अभावमात्राभ्युपगमाच्च हेतुसिद्धिः, तद्विपर्ययेऽस्मत्पक्षापत्तिः । शेषग्रन्थभावना पूर्वग्रन्थभावनातुल्या । एवं तावत् सामान्य-भेद-पर्यायशब्दार्थानपोहवत् सा[4]मान्यसामान्यशब्दार्थानपोहोऽन्त[5]र्निविष्टविशेषाभिधायिसामान्यशब्दार्थविधिश्चोक्तो विधेरेव शब्दार्थत्वात् । **यत्त्वविरोधा**दित्यादि । यदपि त्वया कारणमुक्तमन्यत्वेऽपि सामान्यादिशब्दार्थानपोहे 'तेषामविरोधात्' इति **सोऽपि एवमेवाविरोधो घटते, [6]भवनविध्येकार्थीभूतत्वात्** । सामान्याख्यं विशेषाख्यं च यत् किञ्चिद्वस्तु तत् सर्वं भवनमेव अन्योन्यात्मापत्त्या एकीभूतम्, स एव शब्दार्थो विवक्षितार्थोप[8]काराविनाभावित्वेन एकीभूतो विधीयमानत्वादेव 'अविरुद्धः' इति युज्यते, नान्यापोहे, [7]अन्यत्वाविशेषादभावतुल्यत्वाच्च कौ विरोधाविरोधौ ? इति ।

[9]**समूहश्च तथार्थान्तरवाचकः** । तद्व्याख्या–**एवं चे**त्यादि, **एवं च** कृत्वा विधिप्रधानशब्दार्थत्वात् **सामान्यविशेषशब्दयो**रित्यादि यावद् **वाक्यार्थवाचकत्वमि**ति । प्रकृतिप्रत्यययोर्भवनसामान्यापरित्यागिनोस्तद्विशेषकर्तृपदार्थवाचित्वं समूहेन 'भवति' इति । 'नीलोत्पलम्' इति [10]वृत्तिपदार्थभवनसामान्यवाचिनोः ४२५-१
विशेषणविशेष्यत्वसम्बन्धलक्षणसामान्यविशेषभाविवृत्त्यर्थवाचित्वम्, तथा राजपुरुषादीनां राजाभिसम्बन्धविशेषणादीनां ज्ञेयम् । **द्व्यादिसमूहस्ये**ति 'देवदत्तस्तिष्ठति, देवदत्तो गेहे तिष्ठति, देवदत्त! गामभ्याज शुक्लाम्' इत्यादिद्वि-[त्रि-]चतुः-पञ्चादिपदसमूहानां **वाक्यार्थवाचकत्वम्**, उपात्तार्थाविरोधिसामान्योप[11]कृतविध्यर्थत्वात् सर्वशब्दानामिति ।

---

१ 'अशिंशपा घटादि, तदभवनप्रतिपादन एवापक्षीणशक्तित्वात् शिंशपात्मकवृक्षार्थविधाने तस्य व्यापार एव नास्ति । यदसौ वृक्षार्थं शिंशपादिभेदात्मकमाक्षिपति तस्मात् तेन सह सामानाधिकरण्यं प्रतिपद्यते तद्भवनविध्येकार्थीभूतत्वात् । तद्भवन-भवनविधिविनाभावे तु न युज्यते सामान्यविधानाभावात् । भवनविधिविनाभूतं सामान्याविधायि न समानाधिकरणं त्वदभिमतं वस्तु स्यात्, अभवत्त्वादवृक्षत्वात्, वन्ध्यापुत्रवत् । कुतोऽस्य सामान्यस्य सामान्यत्वम्? कथं सोऽपि तर्ह्यसामान्यः? यद्यसावसामान्यः न तर्हि शिंशपा भवति, अभूतवृक्षादित्वात्, घटवत् । सोऽप्येवमेव यावत् परमाणुर्न भवति, अभूतसामान्यत्वात्, खपुष्पवत् । एवं च सर्वस्य शून्यत्वे कः किं केन कस्माद्वाऽपोहते? अथ कथञ्चिद् भवत्यपि शिंशपा ततः स्वार्थाद्युक्तेः स एव विधिर्विषयः संवृत्तोऽर्थः । तदुपसर्जनश्चापोहोऽसत्त्वादसत्यः । असत्योपाधिः सत्यः शब्दार्थः । स च विशेषार्थविधिः ।' ईदृशं किमपि मूलमत्र सम्भाव्यते ॥ २ दृश्यतां पृ० ६३८ पं० ६ ॥ ३ तुलना–पृ० ६४४ पं० ८ ॥ ४ तुलना–पृ० ६४३ पं० ११ ॥ ५ °**न्तर्विशिष्ट**° य० ॥ ६ दृश्यतां पृ० ६४० पं० ४ ॥ ७ तुलना–पृ० ६४७ पं० २० ॥ ८ तुलना–"सामान्यग्यानपोहश्च नाविरोधेन कल्पते । न हि शब्दस्वरूपाणां स्याद्विरुद्धाविरुद्धता ॥ ३४९ ॥" इति **मी**० श्लो० वा० अपोहवादे ॥ ९ अन्यापोहवादेऽभिहितमिदं दिङ्नागवचनं विधिप्रधानशब्दार्थत्व एव घटत इति दर्शयति । दृश्यतां पृ० ६३८ पं० ११ ॥ १० **वर्तिपदार्थ**° प्र० । वृत्तिः समास इत्यर्थः । ११ पृ० ६४७ पं० १२ । पृ० ६३९ पं० २२ ॥

**अयं च**.............................. ।
**नाक्षिपत्येव सद्भेदान् किं मुधा भ्रम्यते त्वया ॥**

**अनेन प्रत्युक्तं प्रतिषेधसामानाधिकरण्यं वेदितव्यम् । आह च—**

**[1]तन्मात्राकाङ्क्षणाद् भेदः स्वसामान्येन नोज्झितः ।**
**उपात्तस्तत्समाबन्धात् तत्त्वादेकार्थता तयोः ॥**

**[2]अनेकं च सामान्यमुपात्तमव्यभिचारिणा भेदेन । अतस्तयोश्चित्रा विशेषण-**

---

**अयं** [3]**चे**त्यादि श्लोकः । [4]यदुक्तं त्वया 'घटादिभेदाना[5]क्षेपित्वात् सच्छब्दस्य जातिस्वरूपोपसर्जनद्रव्यमात्राभिधानात् पारतन्त्र्याद् घटादिभेदाभेदत्वात् तैः सह सामानाधिकरण्याभावः' इति, यथा परेषां दोषस्तथा तवापि असन्निषेधमात्राभिधानपारतन्त्र्याद् **नाक्षिपत्येव सद्भेदान्** घटादीनिति तुल्ये दोषसम्भवे **किं मुधा भ्रम्यते त्वया** ? इति ।

**अनेने**त्यादि तद्भावना । पारतन्त्र्यात् सच्छब्दानाक्षेपवचनेन 'सन् घटः' इति सामानाधिकरण्यं न प्राप्नोतीति प्रत्युक्तं प्रतिषेधसामानाधिकरण्यं वेदितव्यम् ।

**आह चे**त्युक्तार्थसङ्ग्रहकारिका । **तन्मात्राकाङ्क्षणा**दित्यादि, आत्मार्पणामात्रमाकाङ्क्षति सामान्यं स्वभेदे, अत**स्तन्मात्राकाङ्क्षणाद् भेदः** शिंशपा वृक्षेण **सामान्येन** [6]**नोज्झितो**ऽन्यत्वेपि, किं तर्हि ? **उपात्त** एव कस्मात् ? [7]**तत्समाबन्धात् तत्त्वात्**, तेन सह विशेषेण सामान्यस्यानुबद्धत्वे सति **तत्त्वात्** एकत्वार्[8]पत्तेर्विशेषप्रवणत्वादन्यत्वे सत्यपि एककार्यत्वा**देकार्थता** सामान्यविशेषयोरन्योन्यापरित्यागे सति आत्मलाभादन्यतरत्यागे स्वरूपाप्रतिलम्भात् सामानाधिकरण्यम् । न हि वृक्षेण विना शिंशपा [9]शिंशपां विना
४२५-२ वा वृक्षोऽस्तीति । अत्र यदुक्तम्—**नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता तयोः** [ [10]प्र० समु० ५।२६ ] इति तत् कुतः संशयः ? कुतो वा साम्यै[11]कार्थते ? संशयस्तावदन्यापोहमात्रोक्तेरनुपात्तत्वाद् विशेषाणां सामान्यशब्देन नास्ति, यद्युपात्ताः स्युर्विशेषाः स्यात् [12]संशयः । साम्यमपि च नास्ति अनुपात्तत्वात्, कुतः समानाधिकरण्यम् ? उपात्तत्वान्न संशयः स्याद् वृक्षवदिति चेत्, न, उक्तत्वात् [13]सामान्यादुपसर्जनाद् विधिविशेषा[14]र्थान्नियमे निश्चयदर्शनादिति ।

किञ्चान्यत्, **अनेकं चे**त्यादि । इह विधिप्रधाने शब्दार्थे 'वृक्षः शिंशपा' इति चोक्ते भेदशब्देन **अनेकं च सामान्यं** पृथिवी-द्रव्य-सदादि नाम-स्थापना-द्रव्य-भावाख्यं च सर्वम**प्युपात्तमव्यभिचारिणा भेदेन** शिंशपादिविध्येकार्थीभूतत्वात् । **अतस्तयोश्चित्रा** सामान्यविशेषशब्दयो**र्विशेषणविशेष्यता,**

---

१ दृश्यतां पृ० ६३८ पं० १३ । दिङ्नागवचनमेव किञ्चित् परिवर्त्य प्रतिक्षिपति ग्रन्थकारः ॥ २ 'अनेकमपि सामान्यं भेदेनाव्यभिचारिणा । उपात्तं न तयोस्तुल्या विशेषणविशेष्यता ॥' इति यदुक्तं [ पृ० ६३८ पं० १५ ] **दिङ्नागेन** तदत्र प्रतिक्षिपति ग्रन्थकारः ॥ **३ चित्यादि** य० ॥ ४ दृश्यतां पृ० ६०७ पं० २६ ॥ ५ **°नाक्षेपितत्वात्** प्र० ॥ ६ **नास्तितोन्यच्चेति** प्र० । **'नोज्झितोऽन्यत्वेऽपि'** इति 'नोज्झितोऽ**त्यक्तः**' इति वा पाठोऽत्र सम्भाव्यते ॥ **७ तत्समबंधातत्त्वात्** य० ॥ ८ **°पत्तेर्विशेषणप्रव°** प्र० ॥ ९ **शिंशपा विना वा न वृक्षोऽस्तीति** प्र० ॥ **१०** दृश्यतां पृ० ६३८ पं० १४ ॥ ११ **कार्थः ते** भा० । **°कार्थस्ते** य० ॥ १२ **संशयः स्यत्यमपि** भा० । **संशयस्य त्वमपि** य० ॥ १३ दृश्यतां पृ० ६१६ पं० ४ ॥ १४ **°पार्थन्नियमे निश्चिय°** भा० ॥

**विशेष्यता । नामाद्यनेकं सामान्यं भेदेनाव्यभिचारिणोपात्तम् । ततः संशयव्यावृत्त्यर्थं भवत्येव विशेषणत्वं वृक्षस्य शिंशपायाश्च विशेष्यत्वम् ।...... सत् । इत्थम्–**

**स्वार्थावबद्धशक्तिश्च भेदो भेदमपोहते ।**
**सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेः ॥**

---

विवक्षावशात् कदाचिद् वृक्षेण शिंशपा विशेष्यते कदाचिच्छिंशपया वृक्षः 'शिंशपा वृक्षः, [1]वृक्षः शिंशपा' इत्यनियमदर्शनात् । तस्यानियमस्य हेतुं दर्शयति–**नामाद्यनेक**मित्यादि, नामशिंशपा स्थापनाशिंशपा द्रव्यशिंशपा भावशिंशपा । कन्यायाः 'शिंशपा' इति नाम्नि कृते कन्या नामशिंशपा । तच्च **सामान्यं** पूर्वोक्तविधिना सर्वस्य नामत्वात्, शिंशपैव वा नामाद्यपेक्षया सामान्यम् । तच्चेदं **भेदेन** वृक्षेणाऽ**व्यभिचारिणा** विध्येकार्थीभूतत्वा**दुपात्तम्** । ततः संशयः 'स्यादवृक्षशिंशपा कन्या नामशिंशपा' । तद्व्यावृत्त्यर्थं वृक्षशिंशपामौदयिकभावात्मिकां भावशिंशपा[मा]नयेति भवत्येव विशेषणत्वं वृक्षस्य शिंशपायाश्च विशेष्यत्वम्, ४२६-१ अनियमः, न तु यथोच्यते त्वया–**न तयोस्तुल्या विशेषणविशे[2]ष्यता** [ [3]प्र० समु० ५।२७ ], दृष्टत्वान्नियमेन तुल्यत्वस्य । एवं तावन्नेयं यावत् **सदिति** ।

यदप्युच्यते त्वया—

**भेदो भेदान्तरार्थं तु विरोधित्वादपोहते ।**
**सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः ॥** [ [4]प्र० समु० ५।२८ ]

इति, तत्रापि न तु विरोधित्वादपोहते, विरोधाभावादङ्गाङ्गिभावेन सामान्यविशेषभावापत्तेरुक्तन्यायेन सर्वस्य नामाद्यपेक्षस्य । कस्मात् तर्ह्यपोहते ? उच्यते–यस्मादित्थम्

**स्वार्थावबद्धशक्तिश्च भेदो भेदमपोहते ।**
**सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेः ॥** इति ।

स्वार्थेऽवबद्धा शक्तिरस्य शिंशपाशब्दस्य वृक्षसामान्यसहायस्य शिंशपायामेवावबद्धा, तस्या एव विवक्षि[5]तत्वात्तु शब्दान्तरा[6]र्थप्रतिपादनसहायभावाप्रतिपत्तेः । अतः स्वार्थावबद्धशक्तित्वाच्छिंशपाशब्दः खदिरादिमपोहते । किं कारणम्? **सामान्यार्थविशेषा[7]र्थविधिमन्नियमश्रुतेः**, येयमभिहितानां सामान्यशब्देन [8]उपसर्जनसामान्यार्थेन विशेषाणां नियमार्था विशेषश्रुतिरिष्टायाः शिंशपायाः प्रतिपादनस्य तद्द्वारत्वाद् यथास्माभिः प्राग् विस्तरेण व्याख्याता सा सामान्यार्थविशेषार्थगुणप्रधानयुक्तविधेयार्थवती । तस्माद्धेतोस्तस्याः सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेर्भेदान्तरस्याविवक्षितत्वात् प्रयोजनाभावात् **स्वार्थावबद्धशक्तित्वाद् भेदः** शिंशपादिर्भेदं खदिरादि**मपोहते**, न तु विरोधित्वात्, सामान्यविशेषयोरन्योन्याविनाभावित्वे ४२६-२ सामान्याविनाभाविना विशेषान्तरेण स्वरूपेणैव कथं विरुध्यते विशेषः [9]शिंशपादिः खदिरादिना ? इति ।

---

१ **वृक्षशिंशपा** य० ॥ २ °**ष्यतो** भा० । °**ष्यते** य० ॥ ३ दृश्यतां पृ० ६३८ पं० १६ ॥ ४ पृ० ६३८ पं० १८ ॥ ५ °**तत्वातु** भा० । °**तत्वात्तु** य० । 'विवक्षित**त्वात्** शब्दान्तरा°' इति रम्यं भाति ॥ ६ °**रार्थाप्रति**° प्र० ॥ ७ °**षार्थविवित्वान्नियम**° भा० । °**षार्थविविधान्नियम**° य० । (°षार्थविधित्वान्नियम° ?) ॥ ८ **उपसर्जनीसामा**° भा० ॥ ९ **शिंशपादि** प्र० ॥

**एतेन** [1]**सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः** [प्र० समु० ५।२८] **इत्यादि सर्वं प्रत्युक्तार्थमित्यलमतिप्रसङ्गेन ।**

**यत्तूक्तं** कथं पुनः शब्दस्यार्थान्तरापोहेन स्वार्थाभिधाने पूर्वदोषाप्रसङ्गः कथं वार्थान्तरापोहेन स्वार्थाभिधानम्?

---

**एतेन 'सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः' इत्यादि सर्व**मभिहितेन न्यायेन सामान्यविशेषभवनविध्येकीभूतार्थत्वादिना **प्रत्युक्तार्थम्;** प्रत्युक्तः [2]प्रतिषिद्धोऽस्यार्थस्त्वदीयस्य एवमादिनो वचनस्य । **इत्यलमतिप्रसङ्गेन,** [1]अन्यापोहशब्दार्थनिराकरणप्रसङ्गपरम्परागतस्तिष्ठतु विचारः, प्रकृतमस्त्वित्यर्थः ।

**यत्तूक्त**मित्यादि । **कथं पुनः शब्दस्यार्थान्तरे**त्यादि चोद्यं पराभिप्रायं गृहीत्वा स्वमतनिर्दोषताप्रदर्शनार्थं स्वमतं प्रत्युच्चारयतोत्थापितं यावत् **पूर्वदोषाप्रसङ्ग** इति, भेद-जाति-तत्सम्बन्ध-तद्वत्पक्षगता

---

१ दृश्यतां पृ० ६३८ पं० २४ ॥ २ अत्रेदमवधेयम्—**दिङ्नागस्य** कतमस्माद् ग्रन्थादिदं सर्वमपोहवादिमतं केनचिद्विरचितया **तट्टीकया** सहात्र **मल्ल**वादिक्षमाश्रमणैरुद्धृतमिति निर्णेतुं न पार्यते, दृश्यतां पृ० ६०६ टि० ७ । यथा तु **प्रमाण**समुच्चयेऽपोहपरिच्छेदे दिङ्नागेनाभिहितं तथा भोटभाषानुवादात् संस्कृते परिवर्त्यात्रोपदर्श्यत इति सर्वत्र पूर्वोत्तरपक्षयोर्यथायोगमनुसन्धेयोऽयं **प्रमाणसमुच्चयग्रन्थः**—

"कथं पुनः शब्दस्यार्थान्तरापोहेन स्वार्थाभिधाने पूर्वदोषाप्रसङ्गः ? यस्मात्

**[1]अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात् ।**
**श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिता ॥ ३४ ॥**

अन्वयव्यतिरेकौ हि शब्दस्यार्थाभिधाने द्वारम् । तौ च तुल्यातुल्ययोर्वृत्त्यवृत्ती । तत्र तुल्ये नावश्यं सर्वत्र वृत्तिराख्येया, क्वचिदानन्त्येऽर्थस्याख्यानासम्भवात् । अतुल्ये तु सत्यप्यानन्त्ये शक्यमदर्शनमात्रेणावृत्तेराख्यानम् । अत एव स्वसम्बन्धिभ्योऽन्यत्रादर्शनात् तद्व्यवच्छेदानुमानं स्वार्थाभिधानमित्युच्यते । अन्वयद्वारेण त्वनुमाने वृक्षशब्दादेकस्मिन् वस्तुनि शिंशपादिप्रतिभासी संशयो न स्यात् । तत्संशयवत् पार्थिवत्वद्रव्यत्वादिप्रतिभास्यपि संशयः स्यात् । यस्माद् वृक्षशब्दोऽपार्थिवादिषु न दृष्टस्तस्माद् व्यतिरेकेणैवानुमानम् । आह च—

**[2]वृक्षत्वपार्थिवद्रव्यसज्ज्ञेयाः प्रातिलोम्यतः ।**
**चतुस्त्रिद्व्येकसन्देहे निमित्तं निश्चयेऽन्यथा ॥ ३५ ॥** इत्यन्तरश्लोकः ।

न च सम्बन्धद्वारं मुक्त्वा शब्दस्य लिङ्गस्य वा स्वार्थख्यापनशक्तिरस्ति, तस्यानेकधर्मत्वेऽपि सर्वथा गत्यसम्भवात् । न चास्ति स्वार्थे व्यभिचारो भेदानभिधानात् । एवं तावत् पूर्वदोषाभावः ।"—PSV[1] O. ed. पृ० ७४, N. ed. पृ० ८३ A । PSV[2] N. ed. पृ० १६६ B–१६७ A, P. ed. पृ० १६५ ।

अस्य **सवृत्तिक**स्य **प्रमाण**समुच्चयस्य **जि**नेन्द्रबुद्धिरचिता **विशालामलवती** व्याख्यापि भोटभाषानुवादात् संस्कृते परिवर्त्येहोपन्यस्यते–"**कथं पुन**रित्यादि । 'शब्दोऽर्थान्तरव्यवच्छेदेन स्वार्थमभिधत्ते' इत्यस्मिन् पक्षे......चतुर्षु पक्षेषु ये दोषाः पूर्वमुक्तास्ते कथं न स्युरिति पृच्छति । **अदृष्टेरन्यशब्दार्थे** इति [अन्य]शब्दार्थवचनं विपक्षोपलक्षणम् ।

---

1 **तत्त्वसं० पं०** पृ० ३०७ । **सन्मतिवृ०** पृ० १९६ ॥ 2 तुलना—"विधिमुखेन शब्दे प्रवर्तमाने सर्वात्मकार्थग्रहणं प्राप्नोति । ततश्च यथानुलोम्येन वृक्ष-पार्थिव-द्रव्य-सत्-ज्ञेयशब्देभ्यश्चतुस्त्रिद्व्येकनिश्चयो भवति तथा प्रातिलोम्येनापि निश्चयेन भवितव्यम् । न च तथा दृश्यते । ज्ञेयशब्दाच्चतुर्षु सत्तादिषु सन्देहात् सच्छब्दात् त्रिषु द्रव्यादिषु द्रव्यशब्दाद् द्वयोः पार्थिववृक्षत्वयोः पार्थिवशब्दादेकत्र वृक्षत्वे । तस्मान्न विधिमुखेन प्रवृत्ताः शब्दाः । तदुक्तम्—**वृक्षत्वपार्थिवद्रव्यसज्ज्ञेयाः प्रातिलोम्यतः । चतुस्त्रिद्व्येकसन्देहे निमित्तं निश्चयेऽन्यथा** ॥ इति"—**मी० श्लो० वा० शर्करिका** पृ० ७२ । **न्या० र०** पृ० ६०९ ॥

दोषास्तत्रापि आनन्त्य-व्यभिचारादयः कथं न स्युरिति । ननु[1] शब्दस्यार्थान्तरापोहेनेति परपक्षदोषाभिधान-मात्रेण स्वपक्षासिद्धितः पृच्छति **कथं वार्थान्तरापोहेन स्वार्थाभिधानं** 'पक्षसिद्धिः' इति वाक्यशेषः । पूर्वदोषाप्रसङ्गश्च कथमर्थान्तरापोहेन स्वार्थाभिधाने ?

---

विपक्षेऽदर्शनादित्यर्थः । **स्वार्थस्यांशे[ऽपि] दर्शना**दित्यत्र स्वः [ अर्थः ] स्वार्थः । कः पुनरयमिति चेत्, विवक्षावत्पुरुष-समुदायः । तस्यांशोऽवयवो विवक्षावान् पुरुषः । **अंशेऽपी**ति विवक्षावतोऽयं पर्यायः । एवमुक्तं भवति–यद्यपि यथोक्त-स्वार्थांशा अनन्तास्तथाप्येकत्रापि दर्शनादिति । **अपि**शब्दोऽनेकत्रापीति द्योतयति । सपक्षव्याप्तेः प्रतिपादनानङ्गत्वादंशवचनम् । अव्यापकमपि गमकम् । **श्रुतेः सम्बन्धसौकर्यम्**, यथोक्ताद्धेतोः । **न चास्ति व्यभिचारिता** स्वार्थाभावेऽभावात् । **अन्वयव्यतिरेकौ ही**त्यादिनेममेवार्थं प्रकाशयति । **द्वार**मुपायः, शब्दस्य लिङ्गत्वात् तस्य चान्वयव्यतिरेकलक्षणसम्बन्धबलेन गमकत्वात् । **तौ चे**त्यन्वयव्यतिरेकरूपोपाख्यानम् । लिङ्गस्य तत्तुल्य एव वृत्तिस्तदतुल्ये चावृत्तिरेवेत्येतद्धि अन्वयव्यतिरेकयोः स्वरूपम् । **तत्र तत्तुल्ये नावश्य**मिति नियमेनास्य सजातीये **सर्वत्र वृत्तिर्नाख्येया** । कुत इति चेत्, उच्यते–**क्वचि**दि-त्यादि । नहि वृक्षादिशब्दस्य वृक्षादौ सर्वत्र दर्शनसम्भवः, तेषामानन्त्यात् । यदृच्छाशब्देषु तु सर्वत्र दर्शनसम्भवः, तद्विषयस्यै-कत्वादिति । तस्मात् **क्वचि**दित्युक्तम् । एवं तावदन्वयाभिधानसौकर्यम् । स्यादेतत्–तदतुल्यानामानन्त्याद् व्यतिरेकाख्यान-स्यापि सर्वत्रासम्भव इति । अत आह–**अतुल्ये तु सत्यप्यानन्त्य** इति यत्र शब्दार्थाभावस्तेषामानन्त्ये सत्यपि स्वार्थाभावे शब्दाभावलक्षणो व्यतिरेको दर्शयितुं शक्यते, अदर्शनस्य अभावमात्रत्वात् । शब्दार्थयोः कार्यकारणभावसिद्धौ कारणार्थाभावे तत्कार्यशब्दाभावो भविष्यतीत्येतन्मात्रेणादर्शनं प्रतीयते । तत्राश्रयदर्शनं निष्प्रयोजनम्, तदभावेऽपि व्यतिरेकनिश्चयात् । न हि कारणाभावे कार्यसम्भवः । तस्माद् व्यतिरेकोऽपि वक्तुं सुकरः । **अत एवे**ति यस्माद् दर्शनस्य तत्तुल्ये सर्वत्रासम्भवः, तदतुल्ये त्वदर्शनस्य सम्भवस्तस्मात् **स्वसम्बन्धिभ्यः** सजातीयेभ्यो**ऽन्यत्र** विपक्षे**ऽदर्शनात् तद्व्यवच्छेदानुमान**मिति यत्र स्वार्थाभावेऽदर्शनं तद्व्यवच्छेदानामनुमानम् अनुमितिः **स्वार्थाभिधानमित्युच्यते** । एतेन यद्यपि अन्वयव्यतिरेकयो-र्द्वयोरप्यनुमानाङ्गत्वं तथापि व्यतिरेकस्य प्राधान्यात् तद्द्वारेणैव गमकत्वमिति दर्शयति । **अन्वयद्वारेण त्वि**त्यादि । **तु**शब्दोऽवधारणार्थः । यद्यन्वयद्वारेणैवाभिधानमिष्यते तथा सति वृक्षशब्दस्यार्थादिसहितस्य शिंशपादिष्वनुगमोऽस्तीति वृक्षशब्दात् केवलादेकस्मिन् वस्तुनि शिंशपादिप्रतिभासी संशयो न स्यात्, अपि तु निश्चय एव स्यात् । अथ बहुषु दृष्टत्वात् संशय एवं तर्हि तत्र संशयवत् पार्थिवत्व-द्रव्यत्वादिप्रतिभास्यपि संशयः स्यात्, पार्थिवत्वादिषु बहुषु दृष्टत्वात् । निश्चयस्तु दृष्टः । यस्माद् बहुष्वपि वर्तमानो यदभावे न भवति तत् प्रतिपादयति, नेतरत् । तस्माद् व्यतिरेकद्वारेणैवानुमानम् । एतदेव दर्शयन्नाह–**यस्मादि**त्यादि । व्यतिरेकद्वारेणैव गमक इत्येतद् ग्राहयितुमन्तरश्लोकमाह । ज्ञेयशब्दः सद्द्रव्यपार्थिववृक्षत्वेषु चतुर्षु संशयस्य हेतुः, यस्मात् स तेषामभावेऽपि दृष्टः । एवमुत्तरेष्वपि वक्तव्यम् । सच्छब्दो द्रव्य-पार्थिव-वृक्षत्वेषु त्रिषु, द्रव्यशब्दः पार्थिववृक्षत्वयोर्द्वयोः, पार्थिवशब्द एकस्मिन् वृक्षत्वे । **निश्चयेऽन्यथे**ति निमित्तमिति वर्तते । **अन्यथे**त्यानुलोम्येन वृक्षशब्दः पार्थिवद्रव्यसज्ज्ञेयेषु चतुर्षु निश्चयस्य हेतुः । तथाहि–स तेष्वपि दृष्टः तेषामभावे चादृष्टः । एवमुत्तरेष्वपि वक्तव्यम् । पार्थिवशब्दादयोऽप्येवमेकैकहान्या द्रव्यत्वादिषु निश्चयहेतवो ज्ञेयाः । यदि च दृष्टवद् विधिना गमयेत् यथाक्रमं चतुस्त्रिद्व्येकार्थ-निश्चयस्तर्हि प्रातिलोम्येन स्यात्, ज्ञेयशब्दादीनां सत्त्वादिषु दृष्टत्वात् । यस्मात् तदभावेऽपि दृष्टत्वात् सन्देहस्तस्माद् व्यतिरेक-द्वारेणैव गमकत्वमिति । **सम्बन्धद्वारं मुक्त्वे**त्यादि । सम्बन्धोऽविनाभावः । स एव द्वारम् । अनुमानस्य निमित्तम्, तत् परित्यज्य **शब्दस्य लिङ्गस्येव स्वार्थख्यापनशक्तिर्नास्ति** । **इव**शब्द औपम्ये । यथा अर्थात्मकं लिङ्गमविनाभावसम्बन्ध-द्वारेण गमयत् स्वार्थं व्यतिरेकद्वारेणैव गमयति एवं शब्दोऽपीति ख्यापयितुं 'लिङ्गस्येव' इति वचनम् । **तस्यानेकधर्मत्वे** इति शिंशपादिभेदेन पुष्पितफलितत्वादिभेदेन वा वृक्षाद्यर्थस्यानेकधर्मत्वेऽपि **सर्वथा गत्यसम्भवा**दिति । यदि सर्वथा पुष्पितफलितत्वादिना गम्यते तदा यथोक्तसम्बन्धं विना विधिनैव गम्येत । तच्च न संभवति, पुष्पितत्वादिविशेषेषु व्यभि-चारात् । दृष्टवद् गतिर्हि विधिः । तस्माद् विधिना न गतिः, अपि तु अर्थान्तरव्यतिरेकद्वारेण । **भेदानभिधाना**दिति, तेषामन्योन्याभावेऽपि सत्त्वाद् व्यभिचारो भवति, न तु सामान्यस्याभिधेयत्वे, तस्याभिन्नत्वात् तदभावे च शब्दाभावात् ।"— **विशाला॰** D. ed. पृ॰ २७५ A–२७७ A, P. ed. पृ॰ ३१० B–३१२ B ॥ **३ प्रतिषिद्धोऽस्वार्थ॰** प्र॰ ॥ **४ अन्योऽपोह॰** य॰ ॥

**१ तत्तु शब्दस्या॰** भा॰ । ( तत्र शब्दस्या॰? ) ॥

अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात् ।

शब्दस्यान्वयव्यतिरेकावर्थाभिधाने द्वारम् । तौ च तुल्यातुल्ययोर्वृत्त्यवृत्ती । तत्र तुल्ये नावश्यं सर्वत्र वृत्तिराख्येया । क्वचिदानन्त्येऽर्थस्याख्यानासम्भवात् । अतुल्ये तु सत्यप्यानन्त्ये शक्यमदर्शनमात्रेणावृत्तेराख्यानम् । अत एव च स्वसम्बन्धिभ्योऽन्यत्रादर्शनात् तद्व्यवच्छेदानुमानम् । एवं च कृत्वा वृक्षशब्दाद्द्रव्यत्वाद्यनुमानमुपपन्नं भवति । अन्वयद्वारेण चानुमाने यस्मादनुगमोऽस्ति वृक्षशब्दस्य शिंशपादिषु तस्मात् केवलेनाप्यनुमानं प्राप्नोति । अथ बहुषु दृष्ट इति संशयो भवति एवं सति वृक्षार्थे पार्थिवत्व-द्रव्यत्व-सत्त्वेषु संशयः स्यात् । निश्चयस्तु दृष्टः । तथाहि—वृक्ष-पार्थिव-द्रव्य-सच्छब्दा

---

अत्रोच्यते त्वया–[1]अदृष्टेरन्यशब्दार्थे[2] स्वार्थस्यांशेऽपि दर्शनात्, 'अन्यापोहेनार्थाभिधानसिद्धिः' इति वाक्यशेषः । अनुमानानुमेयसम्बन्धो ह्यभिधानाभिधेयसम्बन्धः । तत्र यथा धूमस्य एकदेशे दर्शनादग्नेः अनग्नौ चादर्शनादनग्निव्युदासेनाग्निप्रतीतिस्तथा [3]शब्दस्यान्वयव्यतिरेकावर्था-
४२७-१ भिधाने द्वारम् । [4]तौ च तुल्यातुल्ययोर्वृत्त्यवृत्ती । तत्र तुल्ये नावश्यं सर्वत्र वृत्तिराख्येया, क्वचिदानन्त्येऽर्थस्याख्यानासम्भवात्, [5]न हि सम्भवोऽस्ति वृक्षशब्दस्य सर्ववृक्षेषु दर्शने, नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भवोऽग्निधूमादिवत् । [6]यद्यपि च क्वचिदस्ति डित्थादिषु सम्भवः, तथापि न [7]तद्द्वारेणानुमानम्, सर्वात्मनाऽप्रतीतेः । [8]गुणसमुदायो हि डित्थाख्योऽर्थः, [9]न च सर्वे काणकुण्टादयो डित्थशब्दाद् गम्यन्ते । एवमन्वयद्वारेणानुमानाभावः ।

[10]स्यादेतत्-व्यतिरेकस्याप्यसम्भवः । तत आह—[11]अतुल्ये तु सत्यप्यानन्त्ये शक्यमदर्शनमात्रेणाऽ[12]दर्शनेऽप्रवृत्तेराख्यानम्, अदर्शनमात्रत्वात्, अदर्शनं हि दर्शनाभावमात्रम् । [13]अत एव चेति, यस्माद्दर्शनस्य सर्वत्रासम्भवः सत्यपि च दर्शने सर्वथानुमानाभावः अत एव स्वसम्बन्धिभ्य इति [14]यत्र दृष्टः सोऽत्र सम्बन्धी अभिप्रेतः न तु अविनाभावित्वसम्बन्धेन, अन्यत्रादर्शनादिति अभिधेयाभावेऽदर्शनात्, अन्यथा हि वृक्षशब्दस्य तस्मिन् वस्तुनि पृथिवी-द्रव्याद्यभावेऽपि [15]दर्शनं वक्तव्यं स्यात्, तद्व्यवच्छेदानुमानमिति [16]यत्रैवादर्शनमुक्तं वृक्षाभावेऽवृक्षे ततो व्यवच्छेदानुमानम् '[17]अवृक्षो न भवति' इति । [18]एवं च कृत्वा वृक्षश[19]ब्दाद्द्रव्यत्वाद्यनुमानमुपपन्नं भवति ।

अन्वयद्वारेण चानुमानेऽयं दोषः-यस्मादनु[20]गमोऽस्ति वृक्षश[21]ब्दस्यार्थादिसहितस्य शिंशपा-
४२७-२ दिषु तस्मात् केवलेनाप्यनुमानं प्राप्नोति । [22]अथ बहुषु पलाशादिष्वपि दृष्ट इति संशयो भवति एवं सति वृक्षार्थे पार्थिवत्व-द्रव्यार्थ-सत्तार्थाः सन्ति तेषु वृक्षशब्दस्य समानत्वात् संशयः स्यात्, निश्चयस्तु

---

१ अत्रेदमवधेयम् । दिङ्नागरचितस्य कस्यचिदपोहविषयकग्रन्थस्यांशोऽत्र केनचिद् विरचितया तट्टीकया सह प्रायो यथाक्षरमेव **न**यचक्रवृत्तिकृद्भिः **सिं**हसूरिक्षमाश्रमणैरिहोपन्यस्तः, तत्र कियद् दिङ्नागस्य कियच्च तट्टीकाकृत इति सम्यग् विवेक्तुं न पार्यते, **म**ल्लवादिक्षमाश्रमणेनापि कियदत्र मूलरूपेणोपात्तमित्यपि न सम्यग् विज्ञायते । यावत्तु दिङ्नागेनाभिहितमित्यस्माकं प्रतिभाति तावदस्माभिः स्थूलाक्षरैरत्र वृत्तौ दर्शितम्, यथा तु **प्र**माणसमुच्चये वर्तते तथा पृ० ६५० टि० २ इत्यत्र प्रदर्शितमस्माभिः प्राक् । तच्च सर्वत्र यथायोगमनुसन्धेयमत्र पूर्वोत्तरपक्षयोः ॥ २ पृ० ४३२–१, ४७२–१ ॥ ३ पृ० ४३२–१, ४३३–२ । तुलना पृ० ४५९–२ ॥ ४ पृ० ४३२–१, तुलना–पृ० ४६१–२ ॥ ५ पृ० ६६२ पं० ११ । पृ० ४५९–२ ॥ ६ पृ० ६६२ पं० १४ ॥ ७ पृ० ४३८–२ ॥ ८ तुलना–पृ० ४३६–२, ४३८–१, ४३९–२ ॥ ९ पृ० ४३३–१ ॥ १० तुलना–पृ० ४५९–१ ॥ ११ तुलना–पृ० ४६०–१ ॥ १२ °**ऽदर्शनेऽवृत्तेराख्यानम्** इति पाठः सम्यग् भाति ॥ १३ तुलना–पृ० ४६६–२ ॥ १४ दृश्यतां पृ० ४६६–२ ॥ १५ **अदर्शनम्** इत्यपि पाठोऽत्र सम्भाव्यते ॥ १६ **यथैवा**° प्र० ॥ १७ तुलना–पृ० ४६६–२ ॥ १८ पृ० ४६६–२ ॥ १९ °**ब्दादद्रव्य**° प्र० ॥ २० °**नुगतोस्ति** य० ॥ २१ **शब्दार्थादिसहितस्य** प्र० । दृश्यतां पृ० ४६८–१; ४६९–१ ॥ २२ पृ० ४६८–१,२ ॥

आनुलोम्येन त्रिद्व्येकार्थनिश्चयहेतवः । एवमर्थान्तरव्युदासेनार्थान्तराभिधानमुपपन्नम् । न च सम्बन्धद्वारं मुक्त्वा शब्दस्य लिङ्गस्य वा स्वार्थख्यापनशक्तिरस्ति । आह च—

[1]बहुधाप्यभिधेयस्य न शब्दात् सर्वथा गतिः ।
स्वसम्बन्धानुरूप्यात्तु व्यवच्छेदार्थकार्यसौ ॥
अनेकधर्मा शब्दोऽपि येनार्थं नातिवर्तते ।
प्रत्याययति तेनैव न तु शब्दगुणादिभिः ॥

पूर्वदोषाभावश्च, यस्मात् 'श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिता' भेदानभिधानात् [ ] इति ।

**एतदयुक्तम् । यतस्तावन्वयव्यतिरेकावपीह न घटेते,**
**[2]अन्यापोहार्थनैर्मूल्यात् स्वार्थस्यांशेऽप्यदर्शनात् ।**
**आस्तां ते शब्दसम्बन्ध आस्तां तेऽव्यभिचारिता ॥**

दृष्टः शब्दात् । वृक्षशब्दोऽवृक्षनिवृ[3]त्त्यैकार्थकोऽपार्थिवव्यावृत्त्यापि स्वार्थे वर्तते, [4]तथाहि—वृक्ष-पार्थिव-द्रव्य-सच्छ[5]ब्दा आनुलोम्येन त्रिद्व्येकार्थनिश्चयहेतवः । एवमर्थान्तरव्युदासेनार्थान्तराभिधानमुपपन्नम् । **'[6]न च सम्बन्धद्वारं मुक्त्वा शब्दस्य'** इति यथा भेदाद्यनभिधानं पूर्वमुक्तं तद्दर्शयति ।

आ[7]ह चेत्येतमेवार्थं श्लोकद्वयेनापि दर्शयति । **बहुधाप्यभिधेयस्ये**ति, शिंशपादिभेदा अत्राभिप्रेता न द्रव्यादयः, तथाहि—वृक्षवद्भेदेषु संशयो दृष्टोऽर्थतस्तु द्रव्यादिषु निश्चयः । **स्वसम्बन्धानुरूप्यात्त्वि**ति, यस्मादसौ तज्जातीये दृश्यमानोऽर्थान्तरनिवृत्तिद्वारेणैव दृष्टोऽभिधायकः प्रागेवान्यत्रादृश्यमानस्तस्मात् सम्बन्धानुरूप्यात् तद्विशिष्टमेवार्थमाह । **[8]अनेकधर्मा शब्दोऽपि** [9]सामान्यधर्मैः खगुणत्वादिभिर्वृ[10]क्षार्थं तस्मिन् वस्तुनि नाभिधत्ते, तथाहि—ते विनापि वृक्षार्थेन रसादिषु दृष्टाः, न तु वृक्षशब्दोऽन्यत्र दृष्टः, तस्माद् वृक्षशब्देनैव प्रत्याय[11]नमुपपन्नमित्युक्त्वा स्वपक्षसिद्धावुपपत्तिः । **पूर्वदोषाभावश्च,** यस्माच्छ्रुतेः **सम्बन्धसौकर्यम्** बहुत्वेऽपि तुल्यातुल्ययोर्वृत्त्यवृत्ती, सम्बन्धसौकर्याद् **[12]न चापि व्यभिचारिता** भेदानभिधानात् । एवं तावद् भेदाभि[13]धाने ये दोषा उक्तास्ते परिहृता इति अन्यापोहवादिपक्षः ।

आचार्योऽस्यापि दूषणं वक्तुकामः प्राक् तावत् तत्र यदिदं श्रुतिसम्बन्धसौकर्यमुच्यत इति परिहारबीजमेव दूषयितुमाह—**एतदयुक्तम्, यत** इत्यादि यावद् **न [14]घटेते** इति । यस्मात् ता[15]वन्वयव्यतिरेकावपीह न [16]घटेते, दूरत एव यावर्थाभि[17]धानहेतू तुल्यातुल्यवृत्त्यवृत्तिभ्यां भवत इत्यभिमतौ । तस्मादयुक्तं सम्बन्धसौकर्यमिति प्रतिज्ञानम् । तदुपपादनार्थमाह—**अन्यापोहार्थनैर्मूल्या**दित्यादि श्लोकः । अपोहार्था- ४२८-१
भावात् सम्बन्धाभावः, स्वा[18]र्थगन्धस्याप्यदर्शनात् संशयबीजमपि नास्ति, कुतो [19]व्यभिचाराशङ्केत्युपन्यासः ।

---

१ दृश्यतां पृ० ६३० पं० ११-१४ ॥ २ दृश्यतां पृ० ४३२-१ ॥ ३ °**वृत्त्यैवार्थको** प्र० । तुलना पृ० ४६८-२ ॥ ४ **तथापि वृक्ष**° प्र० । '**तथा वृक्ष**°' इति पाठोऽप्यत्र समीचीनो भाति । तुलना—पृ० ४६८-२, ४६९-१ ॥ ५ °**च्छब्दानुलोम्येन** प्र० ॥ ६ पृ० ६६३ पं० ९ ॥ ७ दृश्यतां पृ० ६३० पं० १०-१५ ॥ ८ तुलना—पृ० ४४०-२ ॥ ९ **सामान्यधर्मैकगुणत्वादिभि**° प्र० । **खम्** आकाशम्, खगुणत्वादिभिराकाशगुणत्वादिभिरित्यर्थः ॥ १० **क्षार्थी** भा० । °**क्षार्थी** य० ॥ ११ °**नमनुपपन्न**° य० ॥ १२ दृश्यतां पृ० ४३१-२ ॥ १३ °**धाने पि दोषा** प्र० ॥ १४ **घटते** प्र० ॥ १५ **तावदन्वय**° य० ॥ १६ **घटते** प्र० ॥ १७ °**धानहेतु** प्र० ॥ १८ **स्वार्थग्रंथस्या** प्र० । दृश्यतां पृ० ६५५ पं० ११ ॥ १९ **व्यभिचारा २ शंके**° भा० । 'व्यभिचाराव्यभिचाराशंका' इत्यपि भा० प्रतिपाठानुसारेण पाठः स्यात् ॥

**स किमन्योऽर्थः स एव भवति उतान्यो न भवति? यदि तावत् स एव भवति ततस्तच्छब्दोत्पाद्यविज्ञानविषयेऽव्यावृत्त्याऽन्याख्येऽर्थे विधिनैव प्रतिपन्ने किमपोहेन क्रियते, अर्थप्रतीतेर्वृत्तत्वात् । तदा ह्यर्थापत्त्या तदन्ययोरुभयोरपि तत्त्वं स्वतः सिद्धम् । तस्मात् स्यादप्यनयोरन्यापोहप्रत्ययः, असत्योपाधिसत्यशब्दार्थत्वात् ।**

**अथान्यो न भवति ततोऽपि प्रश्नाव्यवस्था । अन्यत्वस्य चोभयविषयत्वात् तदग्रहे कोऽसावन्यः? कुतो वा अन्यो न भवतीत्युच्यते?**

---

ततो यदिदमुक्तं चोद्यपक्ष एव '[1]अर्थान्तरापोहेन स्वार्थाभिधाने' इति, अत्र [2]अर्थान्तरं नाम अन्योऽर्थ इति यस्माद् भवति तस्मात् तत् तावद् विचार्यते—**स किमन्योऽर्थः स एव भवति** विधिनान्याख्योऽर्थ उच्यते **उतान्यो न भवती**त्यपोहेन? इति द्वयी कल्पना स्यात् । तत्र **यदि तावद्** मतम्–अन्य इति **स एवान्याख्यो भवतीति** ततः 'सः' इति शब्देनोत्पा[3]द्यते यद् विज्ञानं तस्य विज्ञानस्य स्वा[4]र्थोऽभिधेय एवान्याख्योऽर्थः विषयः संवृत्तः स एव । ततश्च तस्मिन्नव्यावृत्त्याऽन्याख्येऽर्थे **विधिनैव प्रतिपन्ने किमपोहेन क्रियते?** नार्थोऽपोहेनेत्यर्थः । कस्मात्? **अर्थप्रतीतेर्वृत्तत्वात्,** अर्थप्रतीत्यर्थो हि शब्दप्रयोगः, अन्यापोहकल्पना च तदभिधानस्वरूपपरिज्ञानार्था तदर्थप्रतीतौ व्यर्था सा ।

अथापि स्यादन्यापोहेन प्रयोजनमित्थं स्याद् नान्यथा । तद्यथा–**त[5]दा** तस्मिन् विधिनान्यविज्ञान-
४२८-२ काले यद्यन्यो भवति ततः स न भवति, अथ स भवति अन्यो न भवतीति अर्थादापन्नं तदन्ययोरुभयोरपि तत्त्वम् । तच्च स्वत एव सिद्धम् । तस्मात् स्यादप्यनयोस्तदन्ययोरन्यापोहप्रत्ययः । स चोपसर्जनो विधिर्न भवितुमर्हति, कस्मात्? **असत्योपाधिसत्यशब्दार्थत्वात् ।** इत्थमन्यप्रतिपत्तिर्विधिरेव, न व्यावृत्तिः ।

**अ[6]थ अन्यो न भवति,** अथ मा भूदेष दोष इत्यन्यो न भवतीति तस्याप्यन्याख्यस्यार्थस्य अन्यव्यावृत्तिरेव 'अन्यो न भवति' इति स्यात् स्वरूपम् । ततः किम्? **ततोऽपि प्रश्नाव्यवस्था,** सोऽपि योऽन्यो न भवतीत्युच्यमानोऽर्थः किं स एव भवति, उत अन्यो न भवति? इति पृच्छ्यसे त्वम् । तत्र यदि स एव भवतीति ब्रूयास्त्वं पूर्ववद् विधिरर्थः । अथान्यो न भवति सोऽपि अन्यस्तथा प्रष्टव्यो योऽन्यो न भवतीत्युच्यते ततोऽप्यन्यः प्रष्टव्य इति प्रश्नानवस्था । कस्मात्? सर्वत्रास्याक्षेपस्य तुल्यत्वादुक्तवत् । किञ्चान्यत्, **अन्यत्वस्य चोभयविषयत्वात्,** अन्य इति स उच्यतेऽन्यापेक्षया सोऽपि एतदपेक्षया 'अयमस्मादन्योऽयमस्मादन्यः' इति तयोर्द्वयोरपि स्वरूपतः सिद्धौ द्विष्ठं सदन्यत्वं सिध्यति । ततस्तस्य अन्यत्वस्य उभयविषयत्वात् **तदग्रहे कोऽसावन्यः?** तयोरन्याख्ययोर्विधिरूपेणाग्रहणे कोऽसावन्यो नाम यदपोहादन्यापोहः स्यात्? **कुतो वा 'अन्यो न भवति' इति उच्यते** यतोऽस्यान्यस्यान्यत्वं सिध्येत्? 'यतोऽन्यो योऽन्यः' इत्येतद्विष्ठत्वादन्यत्वस्य निर्धार्यमेतदन्यत्वम्, नान्यथा निर्धारयितुं शक्यमित्यभिप्रायः ।

---

१ पृ० ६५० पं० ३ ॥ २ तुलना–पृ० ६५८ ॥ ३ °त्पद्येते य० । °त्पद्यते भा० । तुलना पृ० ६५८ ॥ ४ स्वार्थोभिधेय भा० । (स्वार्थो विधेय? ) ॥ ५ तुलना–पृ० ६५८ ॥ ६ तुलना पृ० ६५९ ॥

**एवं तु न स कश्चिदर्थो भविता । उभयतोऽप्यभावप्रसङ्गात् स्वार्थस्यांशोऽपि न दृश्यत एव । 'अन्यो न भवति' इत्युच्यमाने उभयतोऽप्यभावादन्यव्यावृत्तेरभवनपरमार्थत्वादभूतस्वान्यत्वाद् वन्ध्यापुत्रवदविषय एव । स च निबन्धनमन्यापोहस्य स्यात् ।**

**अथोच्येत—अन्योऽप्यनन्यो न भवति । यद्यन्य इत्यनन्यो न भवति ततोऽन्यस्यैवानुवदनात् कोऽसावन्योऽनन्यो नाम अन्यान्यत्वतदनन्यत्वातुल्यः शब्दार्थः ? अन्यशब्दार्थस्य च अनन्यशब्दार्थाद् भिन्नत्वेऽन्य इत्यनन्यो न भवतीत्यपोहार्थः स्यात्, अतुल्येऽन्यस्मिन्नवृत्तेः ।**

---

[2]एवं त्वित्यादि । इत्थमुक्तन्यायेन **न स कश्चिदर्थो भविता** न कदाचित् तादृग्विधो भवति, अन्योऽप्यन्यो न भवति [3]सोऽपि स [न] भवतीति **उभयतोऽप्यभावप्रसङ्गात् स्वार्थस्यांशोऽपि** ४२९-२
गन्धोऽपि **न दृश्यत एवे**ति ।

अस्यार्थस्य भावना—**'अन्यो न भवति' इत्युच्यमाने** किं सम्प्रवृत्तम् ? [4]**उभयतोऽपि** 'न भवति, न भवति' इत्यन्यस्य व्यावृत्तिरेव, न कश्चिद् विधिगन्धोऽपीत्यतो**ऽन्यव्यावृत्तेः** हेतोः **अभवन**मेव परमार्थः, **तत्परमार्थत्वा**दात्मान्यत्वाभावः । ततश्च [5]**अभूतस्वान्यत्वाद् वन्ध्यापुत्रवदविषय एव,** न हि वन्ध्यापुत्रादिरभावः शब्दार्थो भवितुमर्हति । **स च** अभावस्ते**ऽन्यापोहस्य निबन्धनं** प्राप्तः । ततश्चाप्रतिपत्तिरेव स्याच्छब्दार्थस्य, अत्यन्ताभावनिबन्धनत्वात्, वन्ध्यापुत्राप्रतिपत्तिवत् । एवं तावद् 'यदि स एव भवति, अन्यो न भवति' इति च विकल्पयोर्विधिवादप्रसङ्गोऽन्यापोहनैर्मूल्यं चोक्तौ दोषौ ।

अथ तद्दोषद्वयपरि[6]हारार्थम् [7]**अथोच्येत–अन्योऽप्यनन्यो न भवति,** अन्य इति न स एव भवति नाप्यन्यो न भवति, किं तर्हि ? ततोऽन्यस्मादन्योऽनन्यो न भवति, अन्यापोहशब्दार्थव्यापित्वाद् व्यावृत्त्यैव गमयति, अतो न विधिप्रसङ्गो [8]नाभावमात्रता वेति । अत्रोच्यते—[9]**यद्यन्य इति अनन्यो न भवति ततोऽन्य[10]स्यैव अनुवदना**दित्यादि यावद**तुल्येऽन्यस्मिन्नवृत्ते**रित्युत्तरपक्षः । किमुक्तं भवति ? योऽयमन्यः सोऽन्य एव सन् 'अन्यः' उच्यते, स एवानन्य एव, स्वयमेव भवति परमनपेक्ष्येत्यर्थः । ततः किम् ? ततो योऽसावनन्यो नाम सोऽन्य [11]एव, स एवान्याख्यः अन्यः सन् 'अनन्यः' इत्युक्तं भवति । तस्मात् तस्यैव अन्यत्वस्य अनन्यशब्देनापि अनुवदनात् **कोऽसावन्यः** पृथक् ततोऽन्यस्मा**दनन्यो नाम ?** ४२९-२
नास्तीत्यर्थः । यदि स्यात् परापेक्षः स्यादिति निरूपयति–**अन्यान्यत्व-तदनन्य[12]त्वातुल्यः शब्दार्थ** इति, अन्यस्मादन्यः अन्यान्यः, तद्भावोऽन्यान्यत्वम्, तस्माद् भिन्नेन अनन्यत्वेनातुल्योऽ[13]न्यान्यत्वात् कोऽसौ अन्यान्यत्व-तदनन्य[14]त्वातुल्यः शब्दार्थः ? यथा वैधर्म्येण 'घटः' इत्युक्ते [15]घटान्यान्य-तदनन्यातुल्यो

---

१ तुलना ६५९ पृ० ॥ २ तुलना पृ० ६५८ ॥ ३ **सोऽपि न भवतीति** इत्यपि पाठोऽत्र सङ्गच्छते ॥ ४ तुलना-पृ० ४३६-२, ४३६-२, ४३७-१, ४५६-२ ॥ ५ तुलना पृ० ६५८ ॥ ६ °**हारार्थः अथोच्येत** प्र० ॥ ७ तुलना पृ० ६५९ ॥ ८ **तावमात्रा वेति** य० ॥ ९ तुलना-पृ० ६५९ ॥ १० (°न्यत्वस्यैवानु° ?) ॥ ११ **एव स** भा० प्रतौ नास्ति ॥ १२ °**त्वात्तुल्यः** प्र० ॥ १३ °**न्योन्यत्वात्** प्र० । (°न्योऽन्यत्वात् ?) ॥ १४ °**त्वात्तुल्यः** प्र० ॥ १५ **घटोनान्य**° प्र० ॥

**योऽसौ तदतत्त्वातुल्यः स आत्मान्यत्वान्यः सन् 'अन्यः' इत्युच्यते । अतुल्यं हि घटस्यान्यत्वं पटादस्मादन्यस्मात् । न हि घटस्य पटादितरान्यत्ववदन्यत्वम्, पटस्य वा घटादन्यत्वं घटान्यत्ववत् । यथोक्तद्विष्ठत्वतुल्यतायामपि तत एवात्मानन्यत्वं तत्त्वम् । न हि घटस्य तस्मादेव घटात् पटानन्यत्ववदनन्यत्वम् । नन्वेवं सोऽपि अन्यस्मादन्य एव भवन्नन्यः सन्ननन्यो भवति । तदनन्यत्वं तत्त्वमपोहमानोऽन्यापोहस्तदपोह एव भवतीति स्ववचनाद्यशेषपक्षविरोधापत्तिः ।**

---

दृश्यते पटादिरपोह्यो घटशब्देन न तथेह कश्चिदनन्य[1]शब्देन भिन्नोऽनन्योऽस्ति यतोऽस्यान्य[2]स्यान्यान्यस्माद् [3]भिन्नस्य पटवदवृत्तिः स्यात्, अन्योन्यापेक्षत्वादन्यत्वस्य, स च नास्तीत्थम् । किञ्चान्यत्– **अन्यशब्दार्थस्य चे**त्यादि अन्यापोहे [4]न्यायं दर्शयति । यदा चान्यशब्दार्थादनन्यशब्दार्थो भिन्नो भवति तस्माच्चान्यशब्दार्थस्तदा 'अन्यः' इत्युक्ते 'अनन्यो न भवति' इत्यपोहार्थो [5]विधेर्भिन्नः स्यात् । किं कारणम् ? **अतुल्येऽन्यस्मिन्नवृत्ते**र्घटपटवत् । न तु अस्ति, अन्यस्यैवान्यस्यानन्यत्वात् । तस्मात् स्वार्थापोह एव स्यात् ।

इतर आह—स्यादेतदेवं यद्यन्य एवान्यत्वे स्थितोऽन्य उच्येत परापेक्षान्यत्वात् अनन्यः स एवान्य इति । किं तर्हि ? स्वापेक्षान्यत्व एव 'अन्यः' इत्युच्यते । तद्भावयितुकाम आह–[6]**योऽसा**वित्यादि यावद् [7]**घटात् पटानन्यत्ववदनन्यत्व**मिति । योऽसौ तस्य अन्यस्य अतद्भावेन अतत्त्वेनातुल्य आत्मीयेन स स्वतोऽन्य[8]स्मादेवान्यस्मादात्म[9]ान्यत्वान्यः आत्मान्यत्वान्यः सन् 'अन्यः' इत्युच्यते । निदर्शनम्–**अतुल्यं हि घटस्यान्यत्वं प[10]टादस्मादन्यस्मात्, न हि घटस्ये**त्यादिना घटान्यत्वस्य [11]पटान्यत्वेनासङ्करं दर्शयति [12]**यावदितरान्यत्ववदन्यत्वम्, पटस्य वे**त्यादिना पटान्यत्वस्य [13]*घटान्यत्वासङ्करं यावद् **घटान्यत्ववदि**ति भावितार्थम् । एष दृष्टान्तः ।

अयमर्थोपनयः—**यथोक्तद्वि[ष्ठ]त्वतुल्यतायामपी**त्यादि । त्वदुक्ता तद्विष्ठत्वादन्यता-परस्परापेक्षता,* तस्यां तुल्यायामपीतरेतरापेक्षान्यतायां **तत एव** स्वत [14]**एवात्मनोऽनन्यत्वं तत्त्वम्, स**
४३०-१ **एव घटोऽनन्यः** । शेषः पूर्वेण तुल्योऽन्यत्वभावनाग्रन्थेनासङ्करप्रदर्शनग्रन्थः । तस्मादन्यत्वमपि स्वत एव अनन्यत्वमपि तथेति व्यवस्थिते भवत्यन्यापोह इति ।

अत्रोच्यन्ते तव दोषाः—[15]**नन्वेव**मित्यादि यावत् **स्ववचनाद्यशेषपक्षविरोधापत्ति**रिति । **'ननु'** इत्यत्रानुज्ञापयति परम् । नन्वित्थं सोऽपि योऽन्यः अन्यस्मादन्यस्वरूपात् स्वत एव सिद्धान्यत्वादन्याख्यादर्थादन्य एव भवन्नन्यः सन्ननन्यो भवति स एव भवति । तस्य अन्यस्य स्वात्मनि व्यवस्थितस्य तदनन्यत्वं

---

१ °**शब्देनाभिन्नो** प्र० ॥ २ °**न्यस्यानान्यस्माद्** भा० । °**न्यस्यानन्यस्माद्** इत्यपि पाठोऽत्र भवेत् ॥ ३ **भिन्नपटव**° भा० ॥ ४ **नायं** प्र० । तुलना–पृ० ६५७ पं० १४ ॥ ५ **विधिर्भिन्नः** प्र० ॥ ६ दृश्यतां पृ० ६५९ ॥ ७ **घटात्पटात्पटानन्यत्ववद**° भा० ॥ ८ °**स्मादेवादन्यस्मादात्मा** य० । (°स्मादेवान्यत्वादात्मा° ?) ॥ ९ °**त्माऽन्यत्वान्यः** प्र० ॥ १० **पटाद्यस्माद**° भा० ॥ ११ **पटानत्वेना**° भा० । **पटाननत्वेना**° य० ॥ १२ **ययदितरा**° भा० । **यायदितरा**° य० । **पटादितरा**° इत्यपि पाठोऽत्र भवेत् ॥ १३ * * * एतच्चिह्नान्तर्गतः °**टान्यत्वा**° इत्यादिः °**क्षता**° इत्यन्तः पाठो भा० प्रतौ नास्ति ॥ १४ **एवात्मानो**° प्र० ॥ १५ दृश्यतां पृ० ६५९ ॥

**अन्यापोह इति चानन्यापोहो न भवतीत्यपि न परिहार एव, अन्यापोह इत्यनन्याभावापोहो न भवतीति यतोऽर्थान्तरापोहेन स्वार्थापोहे वृत्त्यार्थेऽन्यविशिष्टोऽपोहः । यथा अपोह इत्यनपोहो न भवति तथान्यविशेषणापोह-**

---

तत्त्वमात्मत्वमपोहमानोऽन्यापोहस्तदपोह एव भवति स्वापोह एव नान्यापोहस्त्वदिष्टः परापोह इत्यर्थः । इतीत्थं स्ववचनविरोधः 'अन्यापोहः' इति वचनात् । तथाभ्युपगमादभ्युपगमविरोधः । लोकविरोधश्चेत्थं लोके दृष्टत्वात् स्वार्थप्रतीतेः । तथा प्रत्यक्षदर्शनात् प्रत्यक्षविरोधः । अनुमानविरोधश्चैवमनुमानात् । इत्यशेषाः पक्षदोषा आपन्नाः । विधिवादापत्तिश्चैवमिति । एवं तावद् वस्तुनो लक्षणानुसारेण दूषणमुक्तम् ।

स्यान्मतम्—अन्यापोहशब्दार्थानुसारच्छायामात्रेण परिहरामीति । तद्यथा-**अन्यापोह इति च**[1] **अनन्यापोहो न भवतीति,**[2] अन्यविशेषणविशिष्टापोहस्य अनन्यविशेषणविशिष्टापोहः प्रतिपक्षः, स न भवतीत्यर्थः । स चान्योऽन्यस्मात् । अतोऽन्यापोह एवात्रापीति ।

अत्रोच्यते—**इत्यपि न परिहार एव ।** कस्मात् ? **अन्यापोह इति अनन्याभावापोहो न भवतीति यतः अर्थान्तरापोहेन स्वार्थापोहे वृत्त्यार्थेऽन्यविशिष्टोऽपोह**[3][4] इति । किमुक्तं भवति ? अनन्यस्याभावोऽन्यः अन्यस्य वाऽभावोऽनन्यः प्रतिपक्षः । तद्वदपोहस्यानपोहः प्रतिपक्षः अनपोहस्यापोह इति भवति । तं दृष्टान्तत्वेन न्यायं दर्शयति–**यथा अपोह इत्यनपोहो न भवतीति, तथान्यविशेषणा-** ४३०-२
**पोहप्रदर्शनार्थ**मित्यादि दार्ष्टान्तिकम् । किमुक्तं भवति ? यथा 'अपोहः' इत्युक्ते 'अनपोहो न भवति' इति पदार्थे द्विः[5]प्रतिषेधप्रक्लृत्यापादनादपोह एवार्थो भवति तथा अन्यविशेषणविशिष्टस्यापोहस्य प्रदर्शनार्थम् 'अन्यापोहः' इत्युक्तेऽन्यस्याभावोऽनन्यः, सोऽर्थोऽस्येति [6]अन्याभावार्थोऽन्यशब्दः, तद्भावोऽन्याभावार्थान्यशब्दता, सत्यां च तस्यामन्याभावार्थान्यशब्दतायाम् **'अन्यापोहः' इत्यनन्याभावस्या**नन्यापोहस्य तद्व्यावृत्तेः **'[7]अपोहो न भवति'** इत्येषोऽर्थः संवृत्तः । तस्य चेदनन्याभावस्यानन्यस्यापोहो न भवति न तर्हि [8]अनन्यानपोहो न भवति तत्प्रतिपक्षत्वादन्यानपोहस्येति यथा विशेष्यविपक्षव्यावृ[9]त्तिस्तथेह एतस्मिन् '[10]अन्यो न भवति' इत्यन्यशब्दार्थे त्वदीये **'अन्यापोहः' इत्य[न]न्याभावस्यापोहो न भवति,** स्वस्यानन्यस्याभावोऽन्योऽनन्याभावः, तस्यापोहो न भवतीत्यन्यापोह एव न भवति, अनन्यापोहः स्वापोह एवेत्यनन्याभावार्थः । स चानिष्टस्ते शब्दानुसारेणापि दोषः प्राप्तः । स्यान्मतम्–'अन्यस्यैवापोहो नानन्यस्य' इत्यवधारणाददोष इति । तच्च न, यस्मात् तत्रापि कोऽन्यः ? [11]कोऽनन्यः ? कोऽपोहः ? कोऽनपोहः ? इति विचारणायामनन्याभाव एव उक्तवदनवधारणात् 'अन्यस्यैव नानन्यस्य' इति विधिवादापत्तेः 'अनन्यस्यापोह एव नानपोहः' इति स्वस्यापोहान[12]पोहाभ्याम[वधारणा]नवधारणाभ्यां विधिप्रतिषेधादन्यानन्यविचारे च

---

१ दृश्यतां पृ० ६६० पं० १३ ॥ २ **चानन्यो** भा० ॥ ३ पृ० ६६० पं० १३ पं० ६५८ पं० १० ॥ ४ **स्वार्थेपोहे** य० ॥ ५ °**प्रतिषेध कृत्या**° भा० । °**प्रतिषेधः प्रकृत्या**° य० । (°प्रतिषेधे प्रक्लृप्त्या° ? ) ॥ ६ **अन्यान्याभावा**° भा० ॥ ७ **अपोहो भवती** य० ॥ ८ **अनस्यानपोहो** प्र० । **'अन्यस्यानपोहो'** इत्यपि पाठोऽत्र विचारणीयः ॥ ९ °**वृत्त**° य० ॥ १० **अनन्यो भवति** य० ॥ ११ **कोन्यः** य० ॥ १२ °**नपोह्यस्याम**° भा० ॥

**प्रदर्शनार्थमन्यापोह इत्युक्तेऽन्याभावार्थान्यशब्दतायाम् 'अन्यापोहः' इत्यनन्याभावस्यापोहो न भवति। अनन्यापोहः स्वापोह एव।**

**एवं प्रक्रमेऽपि च न स कश्चिदर्थो भवितेति स्वार्थस्यांशोऽपि न दृश्यत एव। 'अनन्यो न भवति' इत्युच्यमाने उभयतोऽप्यभावादनन्यव्यावृत्तेरभवनपरमार्थत्वादभूतस्वानन्यत्वाद् वन्ध्यापुत्रवदविषय एव। स च निबन्धनमन्यापोहस्य स्यात्।**

**येषामपि चार्थान्तराणामपोहेन स्वार्थाभिधानं तत्र यत् तदर्थान्तरं तत् किं भवदेवापोह्यत उताभवत्? यदि तावद् भवदर्थान्तरं भवति ततस्तच्छब्दोत्पाद्यविज्ञानविषयेऽव्यावृत्त्या सिद्धे विधिवृत्तैकगतिगुरुतरप्रतिपत्त्यात्मके बहुतरविषये विधिवादे प्रतिपन्ने किमपोहेन पुनः क्रियते, अर्थप्रतीतेर्वृत्तत्वात्। तदा ह्यर्थापत्त्या**

---

विधिप्रसङ्गात् सर्वथान्यापोहे नैर्मूल्यमित्ययमपि न निःसरणोपायः। स्थितमेतत्–[1]**अनन्याभावस्य अपोहो**
४३१-१ **न** [2]**भवतीति यतोऽर्थान्तरापोहेन** स्वार्थाभि[3]धाने न स्यात्।

[4]**एवं प्रक्रमेऽपि चे**त्यादि। एवमापादितशब्दार्थन्यायेऽपि च **न स कश्चि**दित्यादिनापोहनैर्मूल्यमापादयन्नुपसंहरति पूर्वान्यविकल्पदूषावद् विपर्ययेणानन्यविकल्पदूषणं याव**दभूतस्वानन्यत्वाद् वन्ध्यापुत्रवदविषय एव, स च निबन्धनमन्यापोहस्य स्या**दिति गतार्थम्।

[5]**येषामपि चार्थान्तराणा**मित्यादि। यदप्युक्तम् '[6]**अर्थान्तरापोहेन स्वार्थाभिधाने**' इति, अत्र अर्थान्तराणि अर्थेभ्योऽन्यानि तेषामर्थान्तराणां मध्ये **यत् तदर्थान्तरं** सोऽर्थादन्योऽर्थः **तत् किम्?** इति पूर्ववद् विकल्पद्वयम्। **भवदेवार्थान्तरमपोह्यत उ**[7]**ताभवत्?** इति प्रश्नः। **यदि ताव**दित्यादि प्रथमविकल्पे दूषणम्, स एव भवन्नर्थोऽर्थान्तरत्वे स्थितः स भवतीति चेदिष्ट**स्तच्छब्दोत्पाद्यविज्ञानविषयः,** तस्य विषयस्य सिद्धत्वात्, तस्मिन्नव्यावृत्त्या सिद्धे सा च प्रतिपत्तिरस्मदिष्टाया विधिवृ[8]त्तैकगतेर्लघीयस्या एकार्थविषयाया गरीयसी तेषामर्थानां भूयसां प्रतिपत्तिः, स च विधिवाद एव [9]भूयोर्थविषयो गरीयःप्रतिपत्त्यात्मकश्च, तस्मिंश्च **विधिवृ**[10]**त्तैकगतिगुरुतरप्रतिपत्त्यात्मके बहुतरविषये विधिवादे प्रतिपन्ने किमपोहेन पुनः क्रियते,** [11]सर्वार्थविषयस्य 'स एव' इति विधिप्रतिपत्तेः प्रागेव वृत्तत्वात्। त्वमेव हि बहुतरार्थविषयशब्दविधिवादी संवृत्तोऽनन्तार्थशब्दवादी चेत्यतः किमपोहकल्पनया क्रियते? [12]**तदा ह्यर्थापत्त्ये**त्यादि। स्वार्थश्च विवक्षितोऽर्थः ये चान्येऽर्था अर्थान्तराणि, तदेतदुभयं स्वत एव सिद्धात्मस्वभावं विधिनैव। यत् पुनरत्र 'सन् घटः' इत्युक्ते 'सत्' इत्यनुगमसामान्यज्ञानम् 'असन्नघटश्च न भवति' इति
४३१-२ व्यावृत्तिसामान्यज्ञानं च, तदुभयमर्थापत्त्या यदि भवति भवतु गुडमाधुर्यवदुपसर्जनीकृतात्मस्वरूपम्, को

---

१ पृ० ६५७ पं० २॥ २ **भवतीति भवति** भा०॥ ३ °**धाने त स्यात्** प्र०। न स्यात् पूर्वदोषप्रसङ्ग इत्याशयो भाति। '**स्वार्थाभिधानं ते स्यात्**' इत्यपि पाठोऽत्र विचारणीयः॥ ४ पृ० ६५५,६५९,६६०॥ ५ पृ० ६५४ पं० १॥ ६ पृ० ६५० पं० ३॥ ७ **त्रताभ**° प्र०॥ ८ पृ० ६५४ पं० २॥ ९ °**वृत्त्यैक**° य० (°वृत्त्येक° ?)॥ १० °**भूतोर्थ**° प्र०॥ ११ °**वृत्त्यैक**° य०॥ १२ सर्वार्थविषयस्य विधिवादस्य इत्यर्थो भवेत्। (सर्वार्थविषयस्य स एवेति विधेः प्रतिपत्तेः ?)॥ १३ पृ० ६५४ पं० ३॥

**स्वार्थार्थान्तराणां तत्त्वं स्वतः सिद्धमित्यनुगमसामान्यज्ञानं व्यावृत्तिसामान्यज्ञानं च यदि भवति भवतु, असत्योपाधिसत्यशब्दार्थत्वात्।**

**अथार्थान्तरं न भवति ततोऽनवस्था प्रश्नस्य। अर्थान्तरस्य चोभयविषयत्वात् [तदग्रहे किमिदमर्थान्तरम्? कुतो वार्थान्तरं न भवतीत्युच्यते?**

**एवं तु न स कश्चिदर्थो भविता। उभयतोऽप्यभावप्रसङ्गात् स्वार्थस्यांशोऽपि न दृश्यत एव। अर्थान्तरं न भवतीत्युच्यमाने उभयतोऽप्यभावादर्थान्तरव्यावृत्तेरभवनपरमार्थत्वादभूतस्वार्थान्तरत्वाद् वन्ध्यापुत्रवदविषय एव।] तच्च निबन्धनमन्यापोहस्य स्यात्।**

**अथोच्येत–अर्थान्तरमप्यनर्थान्तरं न भवति। यद्यनर्थान्तरं [न भवति ततोऽर्थान्तरत्वस्यैवानुवदनात् कोऽसावर्थान्तरार्थान्तरत्वतदनर्थान्तरत्वातुल्यः शब्दार्थः? अर्थान्तरशब्दार्थस्य चानर्थान्तरशब्दार्थाद् भिन्नत्वेऽर्थान्तरमित्यनर्थान्तरं न भवतीत्यपोहार्थः स्यात्] अतुल्येऽन्यस्मिन्नवृत्तेः।**

**योऽसौ तदतत्त्वातुल्यः [स आत्मान्यत्वान्यः सन् 'अर्थान्तरम्' इत्युच्यते। अतुल्यं हि घटस्यार्थान्तरत्वं पटादस्मादर्थान्तरात्। न हि घटस्य पटादितरार्थान्तरत्ववदर्थान्तरत्वम्, पटस्य वा घटादर्थान्तरत्वं घटार्थान्तरत्ववत्। यथोक्तद्विष्ठत्वतुल्यतायामपि तत एव आत्मानर्थान्तरत्वं तत्त्वम्। न हि पटस्य] तस्मादेव पटाद् घटानर्थान्तर[त्व]वदनर्थान्तरत्वम्।**

**नन्वेवं तदप्यर्थान्तरादर्थान्तरम् [एव भवदर्थान्तरं सदनर्थान्तरं भवति।**

---

वारयति? असत्योपाधिसत्यशब्दार्थत्वात् पूर्ववत्। एवं **तावद् भवदर्थान्तरं चेद् भवति** तत उक्तो दोषः।

[1]**अथार्थान्तरं न भवती**ति मन्यसे **ततोऽनवस्था प्रश्नस्य** पूर्वव्याख्यातान्यशब्दार्थप्रश्नानवस्थानवत्। **अर्थान्तरस्य चोभयविषयत्वा**दित्यादि शेषम् **'अन्यत्वस्य चोभयविषयत्वात्'** इत्यादिना तुल्यं [2]यावत् **तच्च निबन्धनमन्यापोहस्य स्या**दिति।

[3]**अथोच्येते**त्यादि यावद् **न भवतीति** पूर्ववदेव पूर्वपक्षः। उत्तरपक्षोऽपि **यद्यनर्थान्तर**मित्यादि तथैव यावद[4]**तुल्येऽन्यस्मिन्नवृत्ते**रिति।

[5]**योऽसौ तदतत्त्वातुल्य** इत्यादि पूर्ववदेव पूर्वपक्षः यावत् **तस्मादेव पटाद् घटानर्थान्तरवदनर्थान्तरत्व**मिति। तत्रोत्तरपक्षो **नन्वेवं** [6]**तदप्यर्थान्तरादर्थान्तर**मित्यादि याव**दशेषपक्षविरोधापँत्ति-**

---

१ पृ० ६५४ पं० ६॥ २ **तावद्यच्च** य०॥ ३ **अथोच्यतेत्यादि** भा०। **अथोच्येतेत्यादि** य० प्रतौ नास्ति। दृश्यतां पृ० ६५५ पं० ५॥ ४ **°तुल्येतस्मिन्नवृत्ते°** भा०॥ ५ पृ० ६५६ पं० १॥ ६ **तदप्यर्थान्तरमित्यादि** य०। तुलना–पृ० ६५६ पं० ५॥ ७ **°पत्तिरितीयदक्षर°** य०॥

**तदनर्थान्तरत्वं तत्त्वमपोहमानोऽर्थान्तरापोहस्तदपोह एव भवतीति ] स्ववचनाद्य-शेषपक्षविरोधापत्तिः । अपरिहारस्तु तुल्याक्षर एव ।**

**एवं तु प्रक्रमे न स कश्चिदर्थो भविता उभयतोऽप्यभावप्रसङ्गादर्थान्तर-स्वार्थस्यांशोऽपि दृश्यते न स कश्चित् । कुतः स्वार्थस्यांशेऽपि दर्शनमिष्टं त्वया ? उभयतोऽप्यभावादन्यव्यावृत्तेरभवनपरमार्थत्वादभूतस्वान्यत्वाद् वन्ध्यापुत्रवद-विषय एव । स च निबन्धनमन्यापोहस्य स्यात् ।**

**तदभावेऽन्यशब्दार्थार्थान्तरशब्दार्थापोहशब्दार्थस्वार्थशब्दार्थनैर्मूल्यादन्वय-व्यतिरेकनैर्मूल्यम्, तन्नैर्मूल्यादन्यापोहार्थनैर्मूल्यम् । ततः स्वार्थस्यांशेऽप्यदर्शनात् क्व सोऽन्वयः ? के चान्येऽनन्तास्तद्भेदाः ? एकस्मिन्नपि हि श्रुतिसम्बन्धाभाव एव स्वार्थाभावस्योक्तत्वात् । क्लेशेनापि महता न शक्यः सम्बन्ध इत्थमापादयितुम् । अतोऽलं सम्बन्धसौकर्येण वाङ्मात्रसारेण ।**

---

रितीषदक्षरविपर्यासेन गतार्थः । **अपरिहारस्तु**[2] **तुल्याक्षर एवेति** । अत्र '[3]अर्थान्तरापोह इत्यनर्थान्तरा-पोहो न भवति' इति पूर्ववत् परेण परिहारेऽभिहिते 'इत्यपि न परिहार एव अन्यापोह इत्यनन्याभावा-पोहो न भवतीति यतः' इत्यादिः स एव ग्रन्थोऽत्रापि तुल्यार्थ इति न [4]विशेष्य लिख्यते तथा तु द्रष्टव्य इत्यतिदिश्यते ।

[5]**एवं तु प्रक्रमे न स** इत्यादिः स एव ग्रन्थस्तुल्यार्थो यावद**न्यापोहस्य स्यादिति** । विशेषस्तु अर्थान्तरस्वार्थस्यांशोऽपि ☞[6]दृश्यते न स कश्चित्, कुतः स्वार्थस्यांऽशेऽपि दर्शनमिष्टं त्वयेति ।

तदित्थं प्रतिपादितमन्यापोहार्थनैर्मूल्यमुपसंह्रियते—**तदभावेऽन्यशब्दार्थे**त्यादिना । नान्यशब्दार्थः,

४३२-१ [7]नार्थान्तरशब्दार्थः, नापोहशब्दार्थः, न स्वार्थशब्दार्थः इति प्रसङ्गानुप्रसङ्गागतानामेषां शब्दार्थानां नैर्मूल्यम्, तन्निर्मूलत्वादन्वयव्यतिरेकयोर्नैर्मूल्यम्, तन्नैर्मूल्यादन्यापोहार्थनैर्मूल्यम् । यद्बलात् त्वयोच्यते—अन्वयव्यतिरेकौ हि '[8]शब्दार्थस्याभिधाने द्वारम्, तौ च तुल्यातुल्ययोर्वृत्त्यवृत्ती इति, तयोरभावाद-पोहार्थनैर्मूल्यं स्वार्थस्य च त्वदिष्टस्योक्तत्वात् ।

**ततः स्वार्थस्यांशेऽप्यदर्शनात् [9]क्व सोऽन्वयः ?** के चान्येऽनन्तास्तद्भेदाः ? [10]तदभावात् किमानन्त्येन कल्पितेन यस्मादेकस्मिन्नपि श्रुतिसम्बन्धाभाव एव, स्वार्थाभावस्योक्तत्वात् । ततश्च यत् त्वया कल्पयते—**स्वार्थस्यांशेऽपि दर्शनाच्छ्रुतेः सम्बन्धसौकर्यम्** [ [11]प्र० समु० ], क्लेशेनापि महता न शक्यः सम्बन्ध इत्थमापादयितुम्, अतोऽलं सम्बन्धसौकर्येण वाङ्मात्रसारेण महतापि क्लेशेन दुरुपपादेन, त्यज्यता-

---

१ °**यासेनेन** भा० ॥ २ °**स्तुस्तुल्याक्षर** भा० ॥ ३ पृ० ६५७ पं० १ ॥ ४ **विशिष्य** य० ॥ ५ **एवं उ प्रक्रमे** य० । तुलना-पृ० ६५५ पं० १, पृ० ६५८ पं० ३ ॥ ६ ☞ ☜ एतच्चिह्नान्तर्गतो **दृश्यते** इत्यत आरभ्य **स्वार्थस्यांशेऽपि** इत्यन्तः पाठो य० प्रतौ नास्ति ॥ ७ **नर्थांतरणशब्दार्थो** भा० ॥ ८ **शब्दस्यार्था-भिधाने** इति सम्यग् भाति । दृश्यतां पृ० ६५२ पं० २ ॥ ९ **क्वासन्वयः** भा० । 'क्वासावन्वयः' इत्यपि पाठश्चिन्त्यः, तुलना-पृ० ६६४ पं० १४ ॥ १० **तद्भावात्** भा० ॥ ११ दृश्यतां पृ० ६५० टि० १, पृ० ६५२ पं० १, पृ० ६५३ पं० ७ ॥

**आस्तां तेऽव्यभिचारिता । यत्तूक्तं त्वया**–व्यभिचारतः [ प्र० समु० ५।२ ] **इति । तत्र विधिवादे तदतदात्मकसंशयज्ञानस्य प्राप्तत्वात् किमिव न प्राप्तम् ?**

**अत्र तूक्तन्यायेन संशयादि अनास्पदम् । तदतद्भावात्मकभावाभावात्मकशब्दार्थत्वादस्वार्थत्वादन्वयव्यतिरेकविषयत्वासत्वात् ।**

**अथवा—**

**अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽप्यदर्शनात् ।**
**श्रुतेः सम्बन्धदौष्कर्यं न नास्ति व्यभिचारिता ॥**

**तस्य व्याख्या त्वन्मतवदेव । यथोक्तम्**—वृक्षशब्दस्यावृक्ष[शब्दस्य वा स्वाभिधेयेषु

---

मित्यर्थः । एवम्–'[1]अन्यापोहार्थनैर्मूल्यात् स्वार्थस्यांशेऽप्यदर्शनात् । आस्तां ते शब्दसम्बन्धः' इत्यनेन पादत्रयेण श्लोकस्य 'अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि ☞ दर्शनात् । श्रुतेः सम्बन्धसौकर्यम्' इत्येतत् पादत्रयं दूषितम् ।

चतुर्थपादेन यत् त्वयोक्तं [2]**न चास्ति व्यभिचारिता** इति **सा तावदास्तां** [3]स्वपक्षगतापोहवादिन**स्तवाव्यभिचारिता** विप्रकृष्टत्वात् । भेदपक्षे संशयदोषापादनार्थं **यत्तूक्तं त्वया–व्यभिचारत** इति, सच्छब्दो हि यथा द्रव्ये वर्तते तथा [4]घटादिष्वपीति व्यभिचारात् संशयः स्यात्, नाभिधानम् [ प्र० समु० वृ० ] इति । अत्र ब्रूमः—**तत्र विधिवादे स चासश्च** विधेय-व्यावर्त्यौ भावौ, तयोस्तस्या-तस्य च भावस्य सम्भवो यस्यात्मा तद् भवति **तदतदात्मकं** संशयज्ञानम्, तस्य **संशयज्ञानस्य प्राप्त**- ४३२-२
**त्वात् किमिव न प्राप्त**मभिधानं निश्चयो विपर्ययो वाऽनध्यवसायो वा ? सर्वं प्राप्तमित्यर्थः । तत् सर्वं विधिवाद एव घटते ।

**अत्र तूक्तन्यायेन** अन्यापोहार्थनैर्मूल्यात् स्वार्थांशस्याप्यदर्शनात् त्वत्पक्षे **संशया**[5]**द्यनास्पदम्**, **आदि**ग्रहणाद् विपर्यया-ऽनध्यवसाय-निर्णया अप्यनास्पदा निर्विषया इत्यर्थः । कस्मात् ? **तदतद्भावात्मकभावाभावात्मकशब्दार्थत्वात्**, 'स चासश्च भवन् भावो भवति' इत्युक्तमस्माभिः, तस्याभाव आत्मा यस्य शब्दार्थस्य त्वदभिमतस्य, तस्य भावात् तदतद्भावात्मकभावाभावात्मकशब्दार्थत्वात् । तद्व्यक्तिः—**अस्वार्थत्वात्**, 'न भवति न भवति' इत्युभयतोऽपि अभावविषयत्वात् । तद्व्यक्तिः–**अन्वयव्यतिरेकविषयत्वासत्त्वा**दिति, संशयविपर्ययावपि निर्विषयौ विध्यर्थाभावात्, अनध्यवसायोऽपि स्वार्थभावात्मकस्याध्यवसायस्य [6]पर्युदासेना[ऽन]ध्यवसायोऽध्यवसायादन्य इति भवति, उभयतोऽप्यभावे कुतोऽनध्यवसायः निर्विषयत्वात् खपुष्पवत् ? इति ।

**अथवे**त्यादि पाठान्तरम् । पूर्वार्द्धं [7]तदेव । **तस्य व्याख्या–त्वन्मतवदेव**, 'अदर्शनादन्यशब्दार्थे' इति प्रथमपादार्थस्त्वद्व्याख्यात एव, स्वार्थस्य [8]चांशेऽप्यदर्शनात् त्वन्मतवदेवेति द्वितीयपादार्थः ।

---

१ पृ० ६५३ पं० १० ॥ २ पृ० ६५०, ६५२, ६५३ पं० ७ ॥ ३ 'स्वपक्षगता **अ**पोहवादिनस्तव' इति पदच्छेदः ॥ ४ प्रमाणसमुच्चयवृत्तौ तु **गुणादिष्वपि** इति पाठ इति ध्येयम् । दृश्यतां पृ० ६०७ पं० १५ ॥ ५ °**यानास्पदम्** य० ॥ ६ 'पर्युदा**सेऽन**ध्यवसायो' इत्यपि भवेदत्र पाठः ॥ ७ पृ० ६५२ पं० १ ॥ ८ **वांशेऽप्य**° प्र० ॥

सर्वत्र ] दर्शने नास्ति सम्भवः, नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भवोऽग्निधूमादिवत् । यद्यपि क्वचिदस्ति डित्थादिषु सम्भवस्तथापि न तद्द्वारेणानुमानम्, सर्वात्मनाऽप्रतीतेः । गुणसमुदायो हि डित्थाख्योऽर्थः । न च सर्वे काणकुण्टादयो गुणास्तस्य डित्थशब्दाद् गम्यन्ते । तस्मात् तद्द्वारेणानुमानासम्भवः [ ] । **अनेन यदपि तदेकदेशे दर्शनमिष्टं स्वार्थांशे तदप्यदर्शनमेवेत्युक्तं भवति सर्वात्मस्वदर्शनात् ।**

**अन्वयानुक्त्युदाहृतेः व्यावृत्त्या डित्थार्थगतेरुदाहरणमेतदिति चेत्, न, तत्प्रतिपत्तिनिर्मूलत्वात् अनवगतपर्युदासकस्वार्थत्वात्, अविदिते देवदत्ते 'न भवत्यदेवदत्तः' इति वचनवत् ।**

**एवं च शब्दस्यार्थाभावाद् यः सम्बन्धाशक्यत्वं दोषः पूर्वमुक्तः स इहापि । इति श्रुतेः सम्बन्धदौष्कर्यम् ।**

---

४३३-१ तं भावयति–**यथोक्तमित्यादि टीका**ग्रन्थ एव । [1]**वृक्षशब्दस्यावृक्षे**त्यादि यावद् **दर्शने नास्ति सम्भवः**[2]**, नापि सर्वत्र लिङ्गिनी**त्यादि शब्दस्यानुमानत्वात् सर्वत्रानुमेये दर्शनासम्भवोऽपि अयोगुडाङ्गाराग्न्याद्य[3]नुमेये धूमादिलिङ्गादर्शनवदिति । अत्र परो ब्रूयात्–ननु डित्थादिस्वाभिधेये सर्वत्र दर्शनमिति, अत्र त्वयोत्तरं यदुक्तम्–[4]**यद्यपि क्वचिदि**त्यादि स एव **टीका**ग्रन्थो याव[5]द**नुमानासम्भव** इति वयं त्वन्मतादेव ब्रूमः । अनेनोत्तरवचनेन त्वदीयेन यदपि तदेकदेशे दर्शनमिष्टं स्वार्थांशे तदप्यदर्शनमेवेत्युक्तं भवति **'[6]काण-कुण्टादयः सर्वे गुणास्तस्य** गुणसमुदायात्मकस्य **न गम्यन्ते'** इति वचनात् [7]सर्वात्मस्वदर्श[8]नाच्छब्दस्य सर्वात्मनाऽप्रतीतेरुदाहरणेऽभिहित[9]त्वाददर्शनं स्वार्थांशेऽपि समर्थितम् । तत एव चानुमानासम्भव इत्युच्यतेऽस्माभिः, क्वचिददर्शनादिति ।

अत्र ब्रूयास्त्वम्–**[10]अन्वयानुयुक्त्युदाहृते**रित्यादि याव**देतदिति चे**दिति । एतदुक्तं भवति–'डित्थः [11]इत्यपि 'अडित्थो न भवति' इति व्यावृत्त्या डित्थार्थगतेरन्वयाभावादेव डित्थोदाहरणमिति । एतच्च **न, तत्प्रतिपत्तिनिर्मूलत्वात्**, नैतदडित्थव्युदासमात्रमुपपद्यते प्रतिपत्तेरभावप्रसङ्गात् 'न भवति न भवति' इत्युभयतोऽपि अभावमात्रत्वात्, प्रतिपत्तिनिर्मूलत्वं कस्मात् ? **अनवगतपर्युदासकस्वार्थत्वात्,** अनवगतः पर्युदासो यस्य स्वार्थस्य सोऽनवगतपर्युदासकस्वार्थः, [12]तद्भावादनवगतपर्युदासक[13]स्वार्थकत्वाद् नास्ति प्रतिपत्तेर्बीजम् । दृष्टान्तः–अविदिते देवदत्ते 'न भवति अदेवदत्तः' इति वचनमप्रतिपत्तेरेव कारणं निर्मूलत्वात् [14]तथैतदिति ।

तद्भावयति–**एवं च शब्दस्ये**त्यादि यावत् **स इहापी**ति । यथा पूर्वमुक्तम्–[15]'आस्तां ते शब्दसम्बन्धः, अर्थाभावात्' इति सम्बन्धाशक्यत्वं दोषः स एव । ततोऽन्यस्य चार्थस्याभावादलब्धात्मकेऽर्थद्वये शब्दस्य केन सहाविनाभावः सम्बन्धः स्यात् ? इति श्रुतेः सम्बन्धदौष्कर्यम् ।

---

१ तुलना–पृ० ६५२ पं० १२ ॥ २ °**सम्भवेपि** प्र० ॥ ३ °**नुमेय धूमा**° प्र० ॥ ४ तुलना–पृ० ६५२ पं० १३ ॥ ५ तुलना–पृ० ४६२-१, ४६५-२ ॥ ६ पृ० ६५२ पं० १४ ॥ ७ **सर्वात्मदर्श**° भा० ॥ ८ °**नाशब्दस्य** प्र० ॥ ९ °त्वादर्शनं भा० । °त्वाद्दर्शनं य० ॥ १० 'अन्वयानुक्त्युदाहृते°' इति पाठोऽत्र सम्भाव्यते । अन्वयोक्तिरहितमेतदुदाहरणमित्याशयो भाति ॥ ११ **इत्यस्य डित्थो न** य० ॥ १२ **तद्भावानव**° प्र० ॥ १३ °**स्वात्वाद्** भा० ॥ १४ **तथैववदिति** प्र० । ( तथैव तदिति ? ) ॥ १५ पृ० ६५३ पं० ११,२६ ॥

**यः स वृक्षशब्दस्तदितरो वा तस्य तेनार्थेन न शक्यते सम्बन्धः कर्तुम्, तेन सहात्यन्तमदृष्टत्वात्, श्रावणत्वनित्यानित्यत्ववत् ।** न च सम्बन्धद्वारं मुक्त्वा शब्दस्य लिङ्गस्य वा स्वार्थख्यापनशक्तिरस्ति। **स च सम्बन्धो नास्ति उक्तवत् ।**

**अत एव न नास्ति व्यभिचारिता, असाधारणधर्मत्वात् ।** [1]यो ह्यसाधारणः पक्षधर्मः स यावता भेदेन सर्वसङ्ग्रहस्तत्र संशयहेतुः [2]तद्वता तत्सङ्ग्रहादेकान्त[3]व्यावृत्तेश्च [ [4]प्र० समु० वृ० ? ]।

---

तदुपसंहृत्य प्रतिज्ञायते–**यः स वृक्षशब्दो** यस्य स वृक्षोऽर्थः **तदितरो** वेत्यवृक्षशब्दावृक्षार्थयोः ४३३-२ सम्बन्धो वृक्षशब्दार्थयोः प्रतिपत्त्यर्थः, तस्य शब्दस्य तेनार्थेन लोकप्रसिद्धेन वा [5]त्वदभिप्रायान्न **शक्यते सम्बन्धः कर्तु**मिति पक्षः, **तेन सहात्यन्तमदृष्टत्वात् श्रावणत्वनित्यानित्यत्वव**दिति गतार्थं साधनम्। [6]**न च सम्बन्धद्वारं मुक्त्वा शब्दस्य लिङ्गस्य वा स्वार्थख्यापनशक्तिरस्ती**ति त्वयैवोक्तोऽयं न्याय इति दर्शयति । **स च सम्बन्धो नास्ति उक्तवत्**, उक्तं सम्बन्धदौष्कर्यम् ।

**अत एवे**त्यादि । एतस्मादेव सम्बन्धदौष्कर्याद् यदुक्तं त्वया भेदाभिधानपक्षे दोषजातं [7]*व्यभिचारः, सोऽपोहपक्षे न चास्ति व्यभिचारितादोषः, भेदानभिधानादिति । [8]तदपि न भवति, **न नास्ति व्यभिचारिता** अस्त्येव सम्बन्धदौष्कर्यस्योक्त*त्वात् **न नास्ति** अस्त्येव **व्यभिचारिता**दोष इति

---

१ "तथा च **आचार्येणा**प्ययं व्यतिरेकी कथितः । तथाचाह—यो ह्यसाधारणः साधनधर्मः स यावता भेदेन सर्वसंग्रहस्तत्र संशयहेतुः, तद्वता तत्संग्रहादेकान्तव्यावृत्तेश्च ।"—**प्र० वार्तिकालं०** पृ० ६२९ । "युक्तं तावत् चतुर्विधस्य [ अनैकान्तिकस्य ] उभयत्र सत्त्वात् संशयहेतुत्वम् । श्रावणत्वस्य कथम्? असाधारणत्वात्। यो ह्यसाधारणः साध्यधर्मः स यावता भेदेन सर्व[भाव PSV¹]संग्रहस्तत्र संशयहेतुः, तद्वता तत्संग्रहादेकान्तव्यावृत्तेश्च ।"—**प्र० समु० वृ०** PSV¹ C. ed. पृ० ४७, N. ed. पृ० ५१ B, PSV² N. ed. पृ० १३४ A। अस्य व्याख्या—"**युक्तं ताव**दिति । चतुर्विधस्य संशयहेतुत्वे कारणमुभयत्र सत्त्वमस्ति । ततः प्रमेयत्वादिना संशयो जन्यते । श्रावणत्वे तन्नास्तीत्याह—**श्रावणत्वस्य कथ**मिति केन प्रकारेणेति कारणादर्शनात् पृच्छति । **असाधारणत्वा**दिति कारणमाह । यद्यसाधारणः संशयहेतुत्वं कुत इत्यत आह—**य** इत्यादि । **सा**ध्यधर्म इति **पक्षधर्मः** । अनेन सम्बद्धत्वमुक्तम् । असम्बद्धे चाक्षुषत्ववद् विचाराभावात् । **यावता भेदेने**ति नित्यानित्यभावभेदेन वा साश्रवानाश्रवभेदेन वा तीर्थकरव्यवस्थापित-भावभेदेन वा **सर्वभावसङ्ग्रहस्तत्र** तेषु भावेषु **संशयहेतुः । तद्वतां तत्संग्रहादि**ति असाधारणधर्मवतां तैः संग्रहात् तेषु वा संग्रहात् **एकान्तव्यावृत्तेश्चे**ति एकान्तो निर्णयः, तद्व्यावृत्तिरभावः, अनेन एकत्र भावे साधनाभावमाह ।"—**विशाला०** D. ed पृ० १६९ B–१७० A। P. ed. पृ० १९४ ॥ २ अत्र VT. मध्ये '**तद्वतां**' इति पाठो भाति ॥ ३ तुलना टिपृ० ८४ पं० १३ ॥ ४ **न्याय**मुखेऽपि एतदस्ति, तथाहि Prof. Giuseppe Tucci इत्येभिर्विहिते English भाषानुवादे इत्थमुपलभ्यते—Some say: it is logical to admit only four kinds of reasons called inconclusive, because they are in both ways in the affirmative as well as in the negative instances. But how can the cause: because [ sound ] is audible, be an inconclusive one? [I reply:] because it is too-narrow [असाधारण]. When [ the predicate of the middle term ] is too narrow it includes all the possible varieties of the predicate to be proved. Therefore it is absolutely a doubtful reason. In fact it is merely included in the subject possessing that particular nature: thus it is deprived of one of the [ neccessary ] aspects of the reason, [ that is it does not reside in any positive instance. ] **न्यायमुख** पृ० ३२–३३ ॥ ५ °**प्रायाच्च शक्यते** भा० । **प्रायोत्वशक्यते** य० ॥ ६ पृ० ६५३ पं० १४ पृ० ६५० पं० २५ ॥ ७ * *एतच्चिह्नान्तर्गतो °**भिचार** इत्यत आरभ्य **सम्बन्धदौष्कर्यस्यो**° इत्यन्तः पाठो य० प्रतौ नास्ति ॥ ८ **सदपि** भा० ॥

**इदमपि चात्र** 'अन्वयव्यतिरेकौ शब्दस्यार्थाभिधाने द्वारम्' **इत्युक्त्वा पुनरन्वयस्य निराकरणं तत् केनाभिप्रायेणेति न विद्मो यदन्वयविषय एकदेशे निरूप्यते त्वया वृक्ष इत्यवृक्षो न भवतीत्यवृक्षव्युदासेन।**

**नन्वेवं.........क्वासावन्वय इति सर्ववृक्षार्थदर्शनासम्भवात्।**

**लिङ्ग्येकदेशसम्भविलिङ्गवत्तु न स्वार्थांशमात्रे सम्भवति प्रत्यक्षवृक्ष[मूलादिभेदानन्त्ये सम्बन्धाशक्यत्वे प्रतिपत्त्यभावात्]।**

**अवृक्षव्यवच्छिन्नस्यापि स्वार्थस्य नानुमानाय नाभिधानाय स्याद् वृक्षशब्दः,**

---

पक्षः। **असाधारणधर्मत्वा**दिति हेतुः। असाधारणधर्मत्वं सपक्षासपक्षयोरदृष्टत्वात् तद् व्याचष्टे–[1]**यो ह्यसाधारणः पक्षधर्म** इत्यादि याव**देकान्तव्यावृत्तेश्चे**ति तद्व्याख्यया गतार्थम्।

किञ्चान्यत्–**इदमपि चात्रे**त्यादि। अन्वयस्य निर्मूलनीतत्वाद् यद् अ[2]न्वय-व्यतिरेकौ **शब्दस्यार्थाभिधाने द्वारम्** इत्युक्त्वा पुनरन्वयस्य निराकरणं तद् भवतः केनाभिप्रायेणेति न विद्मः। किमज्ञानाद् अस्मद्बुद्धिपरिभवाद् इहपरलोकाभ्यामयशसश्चाभीरुत्वात्? इति। कतमदन्वयनिराकरणमिति चेत्, उच्यते–[3]**यदन्वयविषय एकदेशे निरूप्यते त्वया वृक्ष इत्यवृक्षो न भवतीत्यवृक्षव्युदासेन।**

कथं पुनरनेनान्वयो निराक्रियत इति चेद् ब्रूमः–**नन्वेव**मित्यादि यावत् [4]**क्वासावन्वय इति** इति भावना गतार्था। तत्र कारणमाह–**सर्ववृक्षार्थदर्शनासम्भवात्**, भेदानन्त्याच्चासम्भव उक्तः। स्वार्थदेश-
४३४-१ व्याप्यन्वयो नास्तीति चोक्तो गुणसमुदायमात्रत्वात् गुणभूतेषु चावयवेष्वसत्त्वं दर्शनस्योक्तं त्वयैव। तस्मादन्वयाभावेऽनुमानानुमेयसम्बन्धाभावादनुमानानुपपत्तिवदभिधानाभिधेयभावस्यानुपपत्तिरिति।

स्यान्मतम्–लिङ्ग्येकदेशसम्भविलिङ्गवदभिधेयैकदेश[5]सम्भव्यभिधानदर्शनादस्त्यन्वयोऽभिधानं चेति। अत्रोच्यते तदप्यभ्युपेत्य–**लिङ्ग्येकदेशे**त्यादि। लिङ्गिनामग्नीनामेकदेशेऽग्नावेकस्मिन् सम्भवतो धूमस्य लिङ्गस्याग्नेर्गमकत्ववत् तु न [6]स्वार्थांशमात्रे सम्भवतीति शब्दादभिधेयप्रतिपत्तिर्न भवितुमर्हति। **प्रत्यक्षवृक्षे**त्यादि, 'अयं वृक्षः' इति प्रत्यक्षस्यापि मूलादिमतः साक्षादुपलभ्यमानस्य संज्ञाव्युत्पत्तिकाले सम्बन्धकरणं नास्ति। शिंशपादिभेदानन्त्ये जातिशब्दस्य भेदैरनन्तैः सम्बन्धाशक्यत्वे प्रतिपत्त्यभाव[7]वदेकांशेऽपि स्वार्थाख्ये मूलादि-कोटरादि-ह्रस्व-दीर्घ-तनु-विशालादिभेदानन्त्ये सम्बन्धाशक्यत्वं क्वचिददृष्टत्वात्, किमङ्ग पुनरत्यन्तपरोक्षस्वर्गादिशब्दस्वार्थांशमात्रेऽपि, तद्वदेवाप्रतिपत्तेः? नो चेद् धवखदिराद्यनन्तभेदाभिधानं वृक्षशब्दस्य स्याददृष्टस्वार्थांशत्वात्।

अत्रानिष्टापादनसाधनम्–**अवृक्षव्यवच्छिन्नस्यापि स्वार्थस्य नानुमानाय नाभिधानाय स्याद्
४३४-२ वृक्षशब्दः** न प्रभवतीत्यर्थः। **तदेकदेशवर्तित्वात्**, *[8]स्वार्थस्य धर्मिणः पक्षस्यानुमेयस्य अभिधेयस्य एकदेशे वर्तितुं शीलमस्य धर्मः साधु वा वृत्तिरस्येति तदेकदेशवर्ती। किमुक्तं भवति? अव्यापिपक्षधर्मत्वात्*

---

१ **वाह्यसाधारणः** प्र०॥ २ पृ० ६५२ पं० २॥ ३ तुलना पृ० ४५९-२॥ ४ **क्वासावंधय इति** भा०। **त्कासासंवंधय इति** य०॥ ५ °**संभवव्यभिधान**° प्र०। (संभवेऽप्यभिधान° ?)॥ ६ **स्वार्थासमात्रे** प्र०॥ ७ °**वदेकशेपि** भा०। °**वदेकस्वोपि** य०। '°**वदेकदेशेऽपि**' इत्यपि भवेत् पाठः॥ ८ * * एतच्चिह्नान्तर्गतः पाठः प्रतिषु द्विर्भूतः॥

**तदेकदेशवर्तित्वादव्यापिपक्षधर्मत्वात्, [1]अवनस्पतिव्यवच्छिन्नचैतन्यसाधनार्थस्वापवत्। अशेषपक्षाव्यापि..........।**

**स्वापोदाहरणनिरपेक्षाद्दृष्टदेशवर्तित्वाभ्युपगमे त्वतुल्येऽपि वृत्तिप्रसङ्गः। तस्मादेव वानन्त्यादकृतसम्बन्धजातिशब्दभेदवाचित्वेऽप्यदोषः, तदर्थांशेऽदृष्ट-**

---

समस्तानुमेयावृत्तित्वादित्यर्थः। **अवनस्पतिव्यवच्छिन्नचैतन्यसाधनार्थस्वापवत्**, [2]यथा 'सचेतना वनस्पतयः' इति प्रतिज्ञायां 'स्वापात्' इति हेतुर्धर्मिणो वनस्पतेरेकदेशे शिरीषादौ वर्तमानोऽपि तालादिषु अवर्तमानो न चैतन्यानुमानाय प्रभवति अव्यापित्वात्, तथा वृक्षशब्दोऽपि अवृक्षव्यावृत्त्यर्थो वृक्षस्वार्थांशवृत्तिर्नानुमानाय नाभिधानाय [3]प्रभवति। एतत् पुनः स्वार्थांशवृत्त्यभ्युपगत्याऽनिष्टापादनम्। 'नैव वृत्तिरस्ति' इत्युक्तमेव, वक्ष्यामश्च अनुमानस्यापि स्वार्थाभावम्।

स्यान्मतम्—साध्याशेषानित्यत्वाव्यापिप्रयत्नानन्तरीयकत्ववदनुमानं स्यात्, वनस्पत्यव्यापिस्वापवदनुमानाभासः स्यात्? इति सन्देह इति। [4]एतच्च न, **अशेषपक्षाव्यापी**त्यादि, प्रयत्नानन्तरीयकं हि सपक्षं न व्याप्नोति, स्वापस्तु पक्षमेव न व्याप्नोतीति परिहारः। वृक्षशब्दो ह्यशेषमवृक्षाद् व्यवच्छिन्नं वृक्षार्थं नामवृक्षं [5]मनुष्यादिं स्थापनावृक्षं चित्रादिं वासन्मतेन साध्यधर्मसामान्येन समानं सपक्षं [6]न तु न व्याप्नोति, नाप्यनुमानेऽत्र दोषः, स्वार्थांशवृत्तित्वादव्यापिपक्षधर्मत्वाद् वनस्पतिचैतन्ये स्वापवदित्युदाहृतम्। तस्माद् [7]**नानुमानाय स्याद्वृक्षशब्द** इति साधूक्तम्। तत्र कः सम्बन्धः साध्यानित्याव्यापिप्रयत्नानन्तरीयकत्वानुमानत्वप्राप्तेरिति। ४३५[1]

स्यान्मतम्—उक्तस्वापदृष्टान्त[8]मनपेक्ष्य वृक्षशब्दो यत्र न दृष्टस्तानपि स्वार्था[9]दन्यान् गमयति दृष्टस्वार्थानुमानसाधर्म्याद्देशे दृष्टशक्तित्वादिति। एतच्चायुक्तम्, अपोह्ये वृत्तिप्रसङ्गात्। अत आह—**स्वापोदाहरणनिरपेक्षाद्दृष्टदेशवर्तित्वाभ्युपगमे तु अतुल्येऽपि वृत्तिप्रसङ्गः**, अतुल्ये साध्यविपक्षे वृत्तिः स्यादवृक्षे घटादौ वृक्षश्रुतेः, अदृष्टदेशवर्तित्वात्, मूलादिमति पलाशादौ स्वार्थांशे वा वृत्तिवत्। **तस्मादेव [10]वानन्त्यादकृतसम्बन्धजातिशब्दभेदवाचित्वेऽप्यदोषः, [11]तदर्थांशेऽदृष्टत्वात्**, अदृष्टस्वार्थांशत्वादित्यर्थः,

---

१ तुलना—"ननु चान्योऽप्यस्ति असिद्धः। स च द्विधा। प्रतिज्ञार्थैकदेशासिद्धः, यथा अनित्यः शब्दोऽनित्यत्वात्। अव्यापकासिद्धश्चेति, यथा सचेतनास्तरवः स्वापात्।"—**न्यायप्रवेशकवृत्ति.** पृ० २३.। "प्रतिज्ञार्थस्यैकदेशः सन्नसिद्ध इति विग्रहः, प्रतिज्ञार्थस्यासिद्धत्वात् हेतुरपि तदेकदेशः सन्नसिद्ध इत्यर्थः। अव्यापकासिद्ध इति, इह पक्षधर्मो यो न भवति स एवोच्यतेऽसिद्धः। ततोऽसिद्धस्यैवेह विचार्यमाणत्वात् पक्षस्य इत्यध्याहृत्य समसनीयम्। यथा पक्षस्य धर्मिरूपस्याव्यापकः सन्नसिद्धोऽव्यापकासिद्ध इति। इह पक्षीकृतेषु तरुषु पत्रसङ्कोचलक्षणः स्वाप एकदेशे न सिद्धः। न हि सर्वे रात्रौ सङ्कोचभाजो न्यग्रोधादावदर्शनात् तस्य किन्तु क्वचिदेवेति।"—**न्यायप्रवेशकवृत्तिपञ्जिका** पृ० ५७॥ २ **यथा चेतना** भा०। तुलना-पृ० ४२८ पं० १८॥ ३ **न भवति** प्र०॥ ४ **त एत्व न** प्र०॥ ५ **मनुष्यादिवत्स्थापनावृक्षं मनुष्यादिस्थापनावृक्षं मनुष्यादिस्थापनावृक्षं चित्रादिं चास्स**° भा०। **मनुष्यादिस्थापनावृक्षं ३ चित्रादि वाऽस्स**° य०॥ ६ **ननु न** य०। अयमपि य० प्रतिपाठो विचारणीयः॥ ७ पृ० ६६४ पं० ७॥ ८ °**मनुपेक्ष्य** प्र०॥ ९ °**दन्यानु** प्र०॥ १० **तानंत्या** प्र०। (चानन्त्या°?)॥ ११ **तथादर्थांशे दृष्टत्वात्** य०॥

**त्वात्, अपोहस्वार्थवत्। इति कुतोऽन्वयव्यतिरेकौ कुतो वा पक्षधर्मत्वं कुतस्त्रैलक्षण्यं कुतोऽनुमानत्वं शब्दस्य ?**

**यदि लिङ्गवच्छब्दस्त्रिलक्षणोऽन्यापोहेन स्वार्थं गमयति ततो वृक्षशब्दस्यावृक्षाव्यवच्छिन्नेषु वृत्तिः स्यात्, अनुमानत्वात्, अन्वयप्रदर्शनार्थप्रयुक्तघटादिवत्। न तु वृक्षेषु वृत्तिः स्यात्, पक्षत्वाद् वृक्षाणां सपक्षशब्दार्थावच्छिन्नार्थत्वात् कृतकस्येव नित्येषु। तस्मात् तत्तुल्ये नास्ति वृत्तिः शब्दस्य।**

---

**अपोहस्वार्थव**दिति 'अवृक्षो न भवति' इत्यवृक्षापोहस्य स्वार्थो मूलादिमानन्तः कोटरादिभेदेन, तद्वाचित्वे चा[1]दोषो दृष्ट एवं भेदवादिनोऽप्यानन्त्येऽपि भेदानामकृतसम्बन्धेऽपि दोषाभावः स्यात्। त्वन्मतस्वार्थेऽपि वा तद्वद् दोष एव स्यादिति कुतस्तुल्यातुल्ययोर्वृत्त्यवृत्तिभ्यामन्वयव्यतिरेकौ ? कुतो वा शब्दस्याभिधेयस्य पक्षस्य धर्मत्वं लिङ्गवल्लिङ्गिनः ? कुतस्त्रैलक्षण्यम् ? **कुतोऽनुमानत्व**मिति, एवं च ☞[2]शब्दलिङ्गगत[3]पक्षापक्षसपक्षविसंवादे साधर्म्याभावाल्लिङ्गशब्दयोः कुतोऽनुमानत्वं शब्दस्य ? इति।

तद्व्याख्या—**यदि लिङ्गवच्छब्द** इत्यादि, यदि कृतकत्वादिलिङ्गवच्छब्द**स्त्रिलक्षणोऽन्यापोहेन स्वार्थं गमयती**ति मन्यसे **ततो वृक्ष[4]शब्दस्यावृक्षाव्यवच्छिन्नेषु** वृक्षादभिधेयात् स्वार्थाशाख्यादन्यत्रा-
४३५-२ तुल्ये सपक्षे **वृत्तिः स्यात्** पक्षधर्माद् वृक्षशब्दादन्यस्यावृक्षशब्दादिवाच्ये [5]ततो व्यवच्छिन्ने कृतकत्वानित्यत्वाश्रये घटे इव वृत्तिः **स्यादनुमानत्वात् अन्वयदर्शनार्थप्रयुक्त[6]घटादिव**दिति गतार्थम्। **न तु वृक्षेषु वृत्तिः स्यात्**, किं कारणम् ? **पक्षत्वाद् वृक्षाणाम्**, पक्ष एव वृक्षशब्दाख्यस्य धर्मस्य धर्मिणो वृक्षार्थाः सपक्षाद[7]वच्छिन्नाः, तेष्वेव न तु वृत्तिः स्यात्, अनुमानत्वादेव, त्वदभि[8]मताऽवृक्षान्निवृत्तिमात्रं वृक्षता नान्यस्मिन्नपि साध्यधर्मसामान्येन [9]समानेऽर्थे, अतस्त्वदभिमत्या तुल्यत्वं येषु साध्याद् वृक्षाद् भिन्नेषु अर्थान्तरेषु [ तेषु ] वृक्षशब्दस्य वृत्तिर्नास्ति पक्षधर्माभिमतस्य। कस्मात् ? **[10]सपक्षशब्दार्थावच्छिन्नार्थत्वात्**। किमिव ? **कृतकस्येव नित्येष्वि**ति। [11]तस्मादिति वैधर्म्येण, **तस्मात्** सपक्षाभावात् **तत्तुल्ये नास्ति वृत्तिः शब्दस्य,** किं तर्हि ? तत्रैव वृत्तिः। तस्मात् त्रैलक्षण्याभावाद् नानुमानं शब्दः।

---

१ **वादोषौ** प्र० ॥ २ ☞अत्रेदमवधेयम्। य० प्रतौ **शब्दलिङ्गगतपक्षापक्ष**° इत्यत्र २३० पत्राङ्कः समाप्यते। तदनन्तरं २३४ तमे पत्रे प्रमादात् २३१ इत्यङ्को लिखितः, २३१ तमे २३२ इत्यङ्कः, २३२ तमे २३३ इत्यङ्कः, २३३ तमे तु २३४ इत्यङ्को लिखितः। य० प्रतौ प्रमादादेवं लिखितेष्वप्यशुद्धाङ्केषु तत्रैव पत्राणां वामकोणे शुद्धाङ्का अप्युपन्यस्ताः। पा० प्रतावपि शुद्धाङ्कानुसार्येव पाठः। किन्तु य० प्रतिमवलम्ब्य कैश्चिदन्यलेखकैर्याः प्रतयो लिखितास्तैस्त्वेतदपरिज्ञानादशुद्धाङ्कानुसारेण स्वप्रतयो लिखिता इति २३० पत्रानन्तरम् २३४ तमं पत्रं लिखितमिति तासु भूयान् पाठव्यत्ययः सञ्जातः। अतस्तासु °**मिष्येते** इत्यत आरभ्य **'अत्र'शब्दवाच्यस्याग्निविशिष्टस्य धू**° इत्यन्तो वक्ष्यमाणः पाठोऽकस्मादत्रापतितः। अतः सर्वथा सोऽसम्बद्धः। अस्माभिस्तु यथा भा० प्रतौ पा० प्रतौ च पाठो दृश्यते यथा च य० प्रतौ शुद्धाङ्केषु पत्रेषु पाठो लिखितस्तथैवात्रोपन्यस्त इति स एवोपादेयः ॥ ३ **पक्षापक्षविसंवादे** भा० ॥ ४ °**शब्दस्यावृक्षादच्छिन्नेषु** भा०। °**शब्दस्याव्यवच्छिन्नेषु** य० ॥ ५ ( ततोऽव्यवच्छिन्ने ? ) ॥ ६ **घटादिवदि गतार्थं** य०। **घटादिति गतार्थं** भा० ॥ ७ °**वच्छिन्नार्थैस्तेष्वेव** भा० ॥ ८ °**मतवृ**° य०। °**मतिवृ**° भा० ॥ ९ **समानोर्थतस्त्वदभिमत्या** प्र० ॥ १० **सपक्षधर्मार्थावच्छि**° य० ॥ ११ **तस्यादिति** भा० ॥

**तत्रैव वृत्तावसपक्षवृत्तिगतदोषापत्तिः । हेत्वपवादनियतव्यवस्थानियमाद् नेति चेत्, न, पक्षसपक्षासपक्षव्यवस्थायां तद्व्यवस्थाभावात् तदसिद्धावसिद्धिः । आपत्त्यनभ्युपगमे त्वन्यापोहान्यथात्वं सपक्षावच्छिन्नस्यापि सपक्षत्वात् सपक्षापक्षेपणक्षीणशक्तेश्च पक्षा[स]पक्षयोर्विशेषं गमयितुं नालम्, साध्यनिर्देशवत् ।**

---

किञ्चान्यत्, त्वन्मतवत् **तत्रैव वृत्तावसपक्षवृत्तिगतदोषापत्तिः** । सपक्षादन्यो वा सपक्षाभावो वा स्यादसपक्षः, स च साध्यधर्मसामान्येन समानोऽर्थः सपक्षः[1] पक्षादन्यः[2] पक्षाभावोऽपक्ष ए[व] वा सपक्षः । इह तत्रैव वृक्षार्थे वृत्तत्वात् वृक्षशब्दस्तद्धर्मोऽपि सन् विरुद्धोऽसाधारणानैकान्तिको वा स्यात् ।

**हेत्वपवादे**त्यादि यावद् **नेति चेत्** । स्यान्मतम्—स हेतुर्विपरीतोऽस्माद् विरुद्धोऽन्यस्त्वनिश्चितः [प्र[3]० समु० ३ । २२ ] इति लक्षणात् त्रिलक्षणस्य हेतोरपवादो हेत्वाभासो विरुद्धोऽसाधारणः साधारणोऽसिद्धो वेति नियमितत्वादस[पक्ष]वृ[4]त्तिगतदोषाभावोऽस्य वृक्षशब्दस्येति । एतच्च **न, पक्षसपक्षासपक्षव्यवस्थायां तद्व्यवस्थाभावात्**, हेतु[5]-हेत्वाभासव्यवस्था पक्ष-सपक्षा-ऽसपक्षव्यवस्थायां सिद्धायां सिध्येत् । ४३६-१
तदसिद्धावसिद्धिः, हेतु-तदाभासव्यवस्थानियमस्य पक्षादिव्यवस्थाश्रयत्वात् । पक्ष एव तावदव्यस्थित 'उ[6]भयतोऽप्यभवनपरमार्थत्वात्' इत्युक्तत्वात् । सपक्षस्तु अनन्तरन्या[7]यो नास्ति । असपक्षस्तु स एव पक्षस्त्वन्मताभ्युपगमात् स्यात् सपक्षाभावमात्रत्वात्, इतरथा नैव स्यादुक्तवदेव । तस्माद्धेत्वादिनियमादसपक्षवृत्तिगतदोषापत्तिस्तदवस्थैव । **आपत्त्यनभ्युपगमे** त्वित्यादि । यद्येवमापत्तिदोषं ना[8]भ्युपैषि असपक्षवृत्तिगतं ततो**ऽन्यापोहान्यथात्वं** दोषः, अन्यापोहोऽपि तर्हि अन्याभावात् तदपोहाभावाच्च स्वार्थापोह एव स्यात् । कस्मात् ? **सपक्षावच्छिन्नस्यापि सपक्षत्वात्**, सपक्षादन्यः पक्षस्ततोऽवच्छिन्नोऽसपक्षो वा स एव सपक्षः[9] ततः पक्षादन्यः । पक्ष एव पक्षादन्यः सपक्षादन्यत्वात् । ततोऽन्यापोहः पक्षापोहः स्वार्थापोह इत्यापन्नः ।

किञ्चान्यत्, **सपक्षापक्षेपणक्षीणशक्तेश्च**, सपक्षादन्योऽसपक्षः[10] पक्ष इत्युक्ते सपक्षव्यावृत्तिमात्रे चरितार्थत्वात् पक्षा[स]पक्षयोर्विशेषं गमयितुं नालं 'पक्ष एवायं नासपक्षः' इति । कस्मात् ? **उक्तकारणात्** । किमिव ? **साध्यनिर्देशवत्**, यथा **साध्यनिर्देशः प्रतिज्ञा** [ न्यायसू० १।१।३३ ] इत्यक्षपादपक्षलक्षणं सिद्धिनिवृत्तौ चरितार्थत्वात् साध्यविशेषं पक्षमेवा[11]सिद्धहेतु-दृष्टान्तेभ्यो व्यतिरिक्तं न गमयितुमलं विपक्षापक्षेपणक्षीणशक्तित्वात् तथा 'सपक्षादन्योऽसपक्षः' इत्यसपक्षात् पक्षं विशेष्य न गमयितुमलं सामान्यमात्रवृत्तेः । त्वया तु विशेषवृत्तेः पक्ष एवासपक्षावच्छिन्नवृत्तिरिष्यते, तत्तु न सिध्यतीत्थं न्यायात् । ४३६-२

---

१ **सपक्षः सपक्षादन्यः** य० ॥ २ 'पक्षादन्यः पक्षाभावोऽपक्ष एव सपक्षः' इत्यपि पाठो भवेत् । 'पक्षादन्यः पक्षाभावोऽपक्षः, पक्ष एवासपक्षः' इत्यपि पाठोऽत्र चिन्त्यः ॥ ३ दृश्यतां टिपृ० ७४ पं० ४–टिपृ० ७५ पं० १ ॥ ४ °**द्वृत्ति**° य० ॥ ५ **हेतुहेतुत्वाभास**° य० । **हेत्वाभास**° भा० ॥ ६ पृ० ६५५ पं० २ ॥ ७ °**न्यायो नास्ति** प्र० । (°न्यायेन नास्ति ? ) ॥ ८ **नाभ्युपैष्यसपक्ष**° भा० । **अभ्युपेत्यसपक्ष**° य० ॥ ९ **सपक्षादन्यः** भा० ॥ १० **सपक्षः पक्ष इत्युक्ते** प्र० ॥ ११ °**वासिद्धतुदृष्टान्तेभ्योऽव्यति**° प्र० । दृश्यतां पृ० ६१४ टि० १ । "ननु साध्यनिर्देशः प्रतिज्ञेत्युक्ते साध्ययोर्हेतुदृष्टान्तयोरपि प्रसङ्गो यथा[ऽ?]नित्यः शब्दश्चाक्षुषत्वात्, नित्यः शब्दोऽस्पर्शत्वाद् बुद्धिवच्चेति ।"—**न्यायवार्तिक.** १।१।३३ ॥

**तद्विषयपक्षधर्मत्वादेव तुल्ये वृत्तिर्वृक्षार्थ इति चेत्, अननुमानं तर्हि शब्दः पक्ष एव वृत्तत्वाद् द्विलक्षणत्वादसाधारणवत्, [[1]एकलक्षणत्वाद्वा अन्वयव्यतिरेकाभावाद् विरुद्धवत्] तद्विषयमात्रार्थत्वादन्यापोहशब्दार्थत्वस्य । व्यतिरेकस्य स्वार्थासम्भवादपि व्यर्थतैव[2] वा, पक्षमात्रस्याप्यलक्षणत्वात्, अव्यक्तश्रुतिवत् । गुणसमुदायो हि वृक्षाख्योऽर्थ इति वृक्षस्य[3] मूलकोटराद्यानन्त्ये वाच्यत्वाभावः संवृतिमात्रत्वात् समुदायस्य तदर्थागतेः। तस्मात् तद्द्वारेणानुमानासम्भव उक्तवत्। [4]तस्मात् तदेकलक्षणतापि नास्ति, कुत एवान्यापोहः**

**[5]यच्च वृक्षशब्दो [वृक्षार्थवृत्तिः] तत् कथम्? गुणसमुदायसंवृत्यर्थत्वात्, सेनाशब्दवत्।**

---

स्यान्मतम्—**तद्विषय** इत्यादि यावच्चेदिति । स एव वृक्षार्थो विषयः पक्षः, तस्य पक्षस्य धर्मो वृक्षशब्दः, तस्मात् तद्विषयपक्षधर्मत्वादेव तुल्ये वृत्तिर्वृक्षार्थे, तच्च दृष्टम्, '[6]पक्षस्य धर्मो हेतुः' इत्यनयैवोक्त्या गतत्वाद् विशेषार्थगतिरेवे[7]त्यर्थः ।

अत्रोच्यते—**अननुमानं तर्हि शब्दः**, [8]अनुमानाभास इत्यर्थः, **पक्ष एव वृत्तत्वात्**, [9]तच्च कारणत्वेनाह, **द्वि[10]लक्षणत्वादसाधारणव**दित्यादि गतार्थं यावत् **तद्विषयमात्रार्थत्वादन्यापोहशब्दार्थत्वस्येति**, स एव विषयस्तद्विषयो वृक्षः, 'तन्मात्रमेव वाच्यम्' इत्युक्तमन्यापोहशब्दार्थत्वम् । अतोऽसाधारणविरुद्धते ।

किञ्चान्यत्, **व्यतिरेकस्य स्वार्थासम्भवादपि व्यर्थतैव वा,** अन्यापोहो हि व्यतिरेकमात्रम्, '**न भवति न भवति**' इत्यभवनपरमार्थत्वादुभयतोऽप्यभाव एव वन्ध्यापुत्रवत्, न स्वार्थः कश्चित्' इत्युक्तम्[11] । तस्माद् वृक्षशब्दस्य व्यर्थतैव **पक्षमात्रस्याप्यलक्षणत्वादव्यक्तश्रुतिवत्**, यथा म्लेच्छप्रयुक्तशब्दार्थो व्यावृत्तिमात्रार्थत्वात् स्वार्थमात्रस्याप्यलक्षणाद् व्यर्थो '[12]हिस्तमिस्' इत्यादि तथा वृक्षशब्दः स्यादिति तदर्थाभावप्रदर्शनार्थमाह—**[13]गुणसमुदायो ही**त्यादि । **तस्मात् [14]तद्द्वारेणानुमानासम्भव उक्तव**दिति प्रागुक्तं तन्मतमेव स्मारयति, संवृतिसतः सामान्यसमुदायाख्यस्यासत्त्वाद् विशेषाणामृजु-वक्र-निर्विवरकोटरादीनामवाच्यत्वादिति । **तस्मात् तदेकलक्षणतापि नास्ति, कुत एव** स्वार्थाद्भिन्नस्याभूतस्य प्रतिपत्तिरन्य[15]स्य यतो**ऽन्यापोहः** सिध्येत्, स तु नास्त्यन्यः, तदभावात् [16]तत्प्रतिपत्तिनिश्चयलभ्यप्रतिपत्तिलभ्योऽन्यो नास्ति, तत्प्रतिनिश्चयलभ्यो हि तुल्यातुल्यविवा(वे)कात्मेति ।

४३७-१ **यच्च वृक्षशब्द** इत्यादि । वृक्षार्थस्य पक्षस्या[17]भावात् पक्षधर्मत्वाभावो वृक्षशब्दस्येति । तद्भावनाग्रन्थः **तत् कथम्** इत्यादि यावत् **सेनाशब्दव**दिति गतार्थः । **गुणसमुदायसंवृत्यर्थत्वा**दिति हेतुः । वृक्ष-

---

१ तुलना–पृ० ६७० पं० १४॥ २ तुलना–पृ० ६७१ पं० १॥ ३ तुलना–पृ० ६७१ पं० १२॥ ४ तुलना–पृ० ६७१ पं० ४; पृ० ६७३ पं० २॥ ५ तुलना–पृ० ६७३ पं० ५॥ ६ तुलना—"साध्यधर्मो यतो हेतुः" **प्र० समु०** ३।७। दृश्यतां टिप्पृ० ७४ पं० ३ टि० ३॥ ७ °**गतिरिवेत्यर्थः** प्र०॥ ८ **अननुमाना**° प्र०॥ ९ (तत्र ?)॥ १० दृश्यतां पृ० ६७० पं० १॥ ११ पृ० ६५५ पं० २, ३॥ १२ **हिस्तमिश्र** य०॥ १३ तुलना–पृ० ६५२ पं० १४, पृ० ६७१ पं० ३, पृ० ६७३ पं० १॥ १४ तुलना–पृ० ६७१ पं० १४॥ १५ °**रतस्य** भा०॥ १६ (तत्प्रतिनिश्चय° ?)॥ १७ °**स्य भावात्** भा०॥

**वृक्षशब्दस्य समुदायार्थवृत्तितैवेति चेत्, न, अभ्युपगतमूलादिसपक्षत्वात् तदतुल्यत्वाद् वृक्षार्थस्य तुल्यातुल्यवृत्त्यवृत्त्यादिवचनवैयर्थ्यमेव। संवृत्तिसत्यत्वाच्च समुदायस्यापि वृक्षवदनर्थत्वात् सेनावनादेरपि व्यर्थत्वमेव।**

**रूपादिसत्यत्वप्रतिपादनार्थेऽपि च डित्थाद्युदाहरणे रूपादिपरस्परव्यावृत्त्याऽन्वयाभावे व्यतिरेकस्याभावात् न किञ्चित् सत्यम्, सजातीयासजातीयव्यावृत्त स्वरूपत्वादत्यन्तापूर्वत्वादनिर्देश्यस्वलक्षणत्वात्। तस्मादतुल्ये पक्ष एव वृत्तिः शब्दस्य। नास्त्येव वार्थे वृत्तिः**

शा[1]स्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
अनागमविकल्पा तु स्वयं विद्योपवर्तते॥ [ वाक्यप० २।२३५ ]

**एवं सर्वत्रातुल्ये [ पक्ष एव वृत्तेः ] लिङ्गवच्छब्दोऽनुमानं न भवति प्रमाणमेव वा न भवति।**

---

**शब्दस्य समुदायार्थवृत्तितैवेति चेत्।** स्यान्मतम्—वृक्षशब्दः समुदायेनार्थेनार्थवान्, मूलादीनां च समुदायो वृक्ष उच्यते, तस्मात् समुदायार्थवत्त्वाददोष इति। एतच्च **न, अभ्युपगते**त्यादि, अभ्युपगतानां मूलादीनां तदात्मत्वेनैकत्वे स[2]पक्षत्वम्, सपक्षादन्यत्वं पक्षत्वम्, तेनातुल्य[त्व]मन्यत्वं स[3]पक्षाद् वृक्षार्थस्य, तदतुल्यत्वात् तुल्यातुल्यवृत्त्यवृत्त्यादिवचनवैयर्थ्यमेव। किञ्चान्यत्, संवृतिसत्यत्वाच्च समुदा[4]यस्यापि वृक्षवदनर्थत्वात् सेनावनादेरपि व्यर्थत्वमेव। 'अ[5]वृक्षो न भवति वृक्षः' इत्यस्य मूलादिस्व[6]रूपसत्तामात्रत्वेनाप्यतुल्य एव वृत्तिः, रूपादिभेदसमु[7]दायसंवृत्यर्थत्वात्।

रूपादि[8]सत्त्वादर्थवान् स्यादिति चेत्, तदपि न, रूपादिसत्यत्वप्रतिपादनार्थेऽपि च डित्थाद्युदाहरणे त्वयैव काण-कुण्टादिगुणसमुदा[9]यान्वयाभावोक्त्याऽन्यापोहप्रयासे क्रियमाणे रूपादिपरस्परव्यावृत्त्याऽन्वयाभावे व्यतिरेकस्याभावात् 'न भवति न भवति' इत्यभवनपरमार्थत्वाद् न किञ्चित् सत्यम्। तत्कारणमाह— **सजातीयासजातीयव्यावृत्तस्वरूपत्वा**दिति, तत्सत्यस्यापि पुनः क्षणातिपातित्वात् क्षणे क्षणेऽत्यन्तान्यत्वाद् द्वितीयक्षणे तदभावात् कतमद् रूपम्, अत्यन्तापूर्वत्वाद् निर्बीजत्वादनिर्देश्यस्वलक्षणत्वात्?

स्वलक्षणमनिर्देश्यं रूपमिन्द्रियगोचरः [ प्र[10]० समु० १।११? ]　४३७-२

इति ह्युक्तम्। तस्मादतुल्ये पक्षे सपक्षासपक्षव्यावृत्त्या तत्रैव वृत्तिः शब्दस्य। नास्त्येव वा[11]र्थे वृत्तिः, अथवा शब्दस्याप्रामाण्यं प्रतिपन्नमेव त्वया, यस्मादेतत् त्वन्मतानुसार्येव ज्ञापकम्—**शास्त्रेषु प्रक्रियाभेदै**रित्यादि श्लोको गतार्थः।

**एवं सर्वत्रातुल्य** इत्यादि। लिङ्गवच्छब्दोऽनुमानं [ न ] भवति प्रमाणमेव वा न भवतीत्युक्तस्यार्थस्य य[12]थाप्रतिज्ञं प्रतिपादितस्योपसंहारः प्रोक्तार्थक्रमसङ्ग्रहात्मकः।

---

१ दृश्यतां पृ० २४२ पं० ३, टिपृ० ७९॥ २ सपक्षादन्यत्वं तेनातुल्य° भा०॥ ३ सपक्षाद् वृक्षास्यर्थ तद° य०। सपक्षाद् स्यर्थ तद° भा०॥ ४ °दयस्यापि प्र०॥ ५ अवृक्षे इत्यस्य भा०॥ ६ °रूपासत्ता° य०॥ ७ °दायासंवृत्त्य° प्र०॥ ८ °सत्वा° प्र०। (°सत्यत्वा?)॥ ९ °दायाभावो° य०॥ १० दृश्यतां पृ० ६०९ टि० ८ पं० १४॥ ११ चार्थे प्र०॥ १२ °यथाप्रतिज्ञां प्रतिपादित° य०। यथाप्रतिपादित° भा०॥

**शब्दवत्तु लिङ्गे द्वैलक्षण्यमेव स्यात्, [पक्ष एव वृत्तत्वात्, असाधारणवत्]। एकलक्षणत्वमन्वयव्यतिरेकाभावाद् विरुद्धवत्। सपक्षवृत्त्यभावादन्यत्र वृत्त्यसम्भवादन्वयाभावाद् व्यतिरेकव्यापारावकाशाभावादेकलक्षणं वा शब्दवल्लिङ्गमपि।**

**सन्निहिततायामप्यननुमानत्वम्, तावन्तरेणाप्यनुमानत्वोपपत्तेः, साध्यधर्मसाधनव्याप्तिवत्।**

**ततस्तयोरकारणत्वादेकलक्षणं शब्दवल्लिङ्गमपि। अनुमानत्वादेकलक्षणत्वाच्च**

---

'लिङ्गमपि शब्दवन्न भवति' इत्युपपादयिष्यामीत्यत आह—**शब्दवत्तु लिङ्गे द्वैलक्षण्यमेव स्यादि**त्यादि। प्रथममेव तावदनुमानत्वाच्छब्दवद् द्विलक्षणं लिङ्गमिति साधयति, ततो [1]'द्विलक्षणत्वादसाधारण इत्यादि यदुक्तमनन्तरं शब्दे दोषजातं तत् सर्वं लिङ्गस्य शब्दवदित्येवोक्तक्रमेण ज्ञेयम्।

एकलक्षणत्वमन्वयव्यतिरेकाभावात् पक्षधर्मत्वमात्रं विरुद्धवदिति शब्दे यदुक्तं[2] तद् लिङ्गे स्यात्[3]। तद्व्याख्या—**सपक्षवृत्त्यभावात्**, किमुक्तं भवति? **अन्यत्र वृत्त्यसम्भवात्**, पक्षादन्यत्रावृत्तेरित्यर्थः। अत एवान्वयाभावाद् व्यतिरेकव्यापारावकाशाभावः, तस्माद् व्यतिरेकव्यापारावकाशाभावादेकलक्षणं[4] वा शब्दवल्लिङ्गमपि, शब्दस्य चैकलक्षणं प्रागुक्तं[5] विरुद्धवदन्वयव्यतिरेकाभावादिति।

४३८-१ [6]**सन्निहि[त]तायामप्यननुमानत्व**मर्थप्रतिपत्तावकारणत्वम्, **तावन्तरेणाप्यनुमानत्वोपपत्तेः**, विनापि ताभ्यामर्थगतेस्तयोः सन्निधानमप्यकारणम्। किमिव? **साध्यधर्मसाधनव्याप्तिवत्**, यथा 'यत् कृतकं तदनित्यम्' इति कृतकत्वस्यानित्यत्वेनाविनाभावेन व्याप्तत्वादविनाभाविनोऽनित्यत्वस्य गतिः कृतकत्वादिष्टा, न तु 'यदनित्यं तत् कृतकम्' इत्यनित्यत्वस्य कृतकत्वेनाविनाभाविना, व्याप्तौ सत्यामप्यगतेः[7] अन्यत्र तदभावे सत्यविवक्षितत्वात् प्रयत्नानन्तरीयकत्वादौ[8] त्वन्मतेन यथा तथेहाप्यन्वयव्यतिरेकौ सन्निहितावप्यकारणम्, शब्दार्थे ताद्धर्म्यमात्रात्[9] तद्गतेः। तस्मादन्वयव्यतिरेकसन्निधानेऽपि अकारणत्वान्नार्थः शब्दार्थगतौ ताभ्याम्। यथानुमानविचारेऽभिहितम्—

> [10]प्रतिषेध्याप्रचारेण यस्माद् व्याप्तिरपेक्ष्यते[11]।
> [12]लिङ्गस्य लिङ्गिनि व्याप्तिस्तस्मात् सत्यप्यकारणम्॥ [प्र० समु० २।२२ $\frac{1}{2}$]

इत्यादिकारिकार्थानुगमः[13] कार्यः।

ततः किम्? ततस्तयोरकारणत्वात् पक्षधर्मत्वमात्रकारणत्वादेकलक्षणं शब्दवल्लिङ्गमपि[14], अनुमानत्वादेकलक्षणत्वाच्च 'विरुद्धोऽपि तेऽनुमानम्' इत्यापन्नम् एकलक्षणत्वाच्छब्दवदभिमतत्रिलक्षणलिङ्गवच्च[15]। मा [16]शंकिष्ठा एकलक्षणत्वमसिद्धमित्यत आह स्मारणार्थमुक्तन्यायसिद्धस्यैकलक्षणत्वस्य — उक्तवच्छब्दवदिति।

---

१ पृ० ६६८ पं० २॥ २ पृ० ६६८ पं० २,३॥ ३ स्याद्व्याख्या य०॥ ४ °लक्षणं शब्द° य०॥ ५ दृश्यतां पृ० ६६८ पं० २॥ ६ संनिहितायामप्य° भा०। संनिहियामप्य° य०॥ ७ गतेरत्र तदभावे य०॥ ८ प्रतिपन्नान्तरीय° प्र०॥ ९ तात्वर्म्य° भा०। त्वर्म्य° य०॥ १० दृश्यतां पृ० ४४३-२, ४५८-२॥ ११ °रपेहते प्र०। दृश्यतां पृ० ४५९-१॥ १२ लिंगल्य लिं° भा०। लिंगलिं° य०॥ १३ °नुसमः प्र०॥ १४ शब्दलिंग° भा०। शब्दलिंग° य०॥ १५ °लक्षलिंगवत्व य०॥ १६ °शंष्ठो एक° प्र०॥

**विरुद्धोऽपि तेऽनुमानं स्यात् उक्तवत् । शब्दोऽपि वा नानुमानं विरुद्धवत् । व्यर्थतैव वा, स्वार्थस्याप्यभावोऽनध्यवसायवद् विपर्ययवद्वा । अग्निरत्र धूमादिति स्वार्थानुमाने गुणसमुदायो हि धूमाख्योऽर्थः । बहलकुटिलत्वाद्यानन्त्ये च धूमत्वाभावः । [1]तस्मात् तद्द्वारेणानुमानासम्भव इति तदेकलक्षणतापि नैव, [2]कुत एवान्यापोहः ?**

**[3]पक्षधर्म्यैव वा धर्मस्याधारः प्राप्नोतीति तस्मिन्नेव वृत्तिः स्यात् पक्षधर्ममात्रलक्षणा, न तुल्यान्वयात्मिका । अन्यत्र च वृत्तौ सत्यां व्यतिरेकाकाङ्क्षा स्यात् । सा तु सपक्षाभावान्नास्तीत्यन्वयव्यतिरेकाभावः ।**

---

**शब्दोऽपि वा नानुमानं विरुद्धव**दिति शब्दस्यानुमानत्वाभावे लिङ्गस्यापि प्राप्तमेवा[न]नुमान[त्वम्], द्वयोरपीत्यभिप्रायः ।

**[4]व्यर्थतैव** वेत्यादि शब्दवद् लिङ्गस्य वैयर्थ्यं प्राग्व्याख्यातविधिना योज्यम् । **स्वार्थस्येति** पक्षधर्ममात्रस्याप्य**[5]भावोऽनध्यवसायवत्** म्लेच्छशब्दज्ञानवत्, **[6]विपर्यय[व]द्वे**ति विरुद्धज्ञानवत् । तद् भावयति–**अग्निरत्र धूमादि**त्यस्मिन्नपि **स्वार्थानुमाने गुण[7]समुदायो हि धूमाख्योऽर्थ** इति, वृक्षस्य मूलादिकोटराद्यानन्त्ये वाच्यत्वा[8]भाववत् **बहल-कुटिलत्वाद्यानन्त्ये च धूमत्वाभावः** ज्ञातसम्बन्धत्वा- ४३८-२ भावात् संवृतिमात्रत्वाच्च समुदायस्य तदर्थागतेः । **[9]तस्मात् तद्द्वारेणा[न]नुमान**मित्यलक्षणं लिङ्गं स्वार्थमात्रस्यापीति । **इति तदेकलक्षणतापि नैव,** इत्थमुक्तं स्वार्थ[10]मात्रालक्षण[त्वम् । स्वार्थमात्रालक्षण]त्वे **कुत एव** [11]तस्यागृहीतत्वात् 'स भवति धूमो [12]नाधूमोऽन्यो भवति' इतिविषयत्वादुभयप्रतिपत्तेरभावेऽन्याभावा**दन्यापोहः ?** कुतः 'अग्निरित्यनग्निर्न भवति, धूम इत्यधूमो न भवति' इति च ? दूरत एवैतन्न घटा[13]मियर्ति ।

**[14]पक्षधर्म्यैव वे**त्यादि । यथैव 'वृक्ष एव, न कश्चित् सपक्षः' इति प्रसञ्जिता शब्दार्थवृत्तिस्तथा 'अग्निः' इति [15]पक्षो धर्मी धूमस्य धर्मस्याधारः प्राप्नोति अनुमेयत्वादिति सपक्षस्य तुल्यादेरभावः, तदभ्युपगमे पक्षाभावः प्रागुक्तशब्दानुमानविषयवत्, इति तस्मिन्नेव वृत्तिः स्यात् पक्षमात्रे सपक्षाभावात् । सा कीदृशी ? इति चेत्, उच्यते–**पक्षधर्ममात्रलक्षणा** । किमुक्तं भवति ? **न तुल्यान्वयात्मिका,** अन्वयार्थाभावाद् न स्याद् वृत्तिः । **अन्यत्र** [16]**चे**त्यादि, पक्षधर्मस्य **चान्यत्र** सपक्षे सत्यां वृत्तौ तुल्ये 'तद्वदतुल्येऽपि वृत्तिः स्यात्' इत्याशङ्काया व्यावृत्तये व्यतिरेकाकाङ्क्षा स्यात्, सा तु सपक्षस्यैवाभावान्नास्ति व्यतिरेकाकाङ्क्षा । तस्मादन्वयव्यतिरेकौ न स्तः ।

---

१ तुलना पृ० ६६८ पं० ६ ॥ २ तुलना–पृ० ६६८ पं० ७, पृ० ६७३ पं० २ ॥ ३ 'पक्षधर्म्यैव **च** धर्मस्याधारः' इत्यपि भवेत् पाठः ॥ ४ **व्यर्थत्तेत वे**° प्र० ॥ ५ **भावो........नध्य**° य० ॥ ६ **विपर्ययद्वेति** भा० । **विपर्ययाद्वेति** य० ॥ ७ तुलना पृ० ६५२ पं० १४, पृ० ६६८ पं० ५, पृ० ६७३ पं० १ ॥ ८ °**भावावत्** भा० । °**भावात्** य० ॥ ९ 'तस्मान्न तद्द्वारेणानुमानम्' इत्यपि पाठो भवेत् ॥ १० °**मात्रत्वालक्षण**° य० ॥ ११ **तस्य गृ**° भा० ॥ १२ **नाधूमोन्यो न भवति** य० ॥ १३ °**सियत्ति** प्र० ॥ १४ **पक्षधर्म्यैच वेत्यादि** प्र० । ( पक्षधर्म्यैव चेत्यादि ? ) ॥ १५ **पक्षो धर्मा** भा० । **पक्षधर्मो** य० ॥ १६ **नेत्यादि** य० ॥

**अथ च भवति ज्ञानं ततः प्राप्ते प्रत्यक्षे शाब्दलैङ्गिकेऽपि ज्ञाने, अन्वयव्यतिरेकवियुततथ्यज्ञानत्वात् अविकल्पकत्वात्, सन्निकृष्टार्थवत् ।**

**अत इदं पूर्वापरासमीक्ष्यैवोक्तं** न प्रमाणान्तरं शाब्दमनुमाना**दिति ।**

**[1]नाप्रमाणान्तरं शाब्दमनुमानात् तथाहि तत् ।**
**कृतकत्वाद्यपि स्वार्थमात्मापोहेन नाशयेत् ॥**

**यदि न प्रमाणान्तरं [शाब्दमनुमानात्, तथाहि—तत् स्वार्थमन्यापोहेन भाषते] कृतकत्वादिवत् ततोऽन्यापोहार्थकृता दोषा न शब्द एवैकस्मिन्, किं तर्हि ? तद्विधदोषजालोपनिपातसम्बन्ध्येव तेऽनुमानमपि । नन्वेवं कृतकत्वाद्यप्यनुमानं स्वार्थमात्मापोहेन नाशयेदेव, अन्यापोहेन········, अन्यापोहशब्दार्थवत् ।**

**धूम इत्यधूमो न भवतीति निरन्वया प्रतिपत्तिरप्रतिपत्तिरेव, [2]ग्राह्यदर्शनरहितत्वात् स्थाण्वस्थाण्वप्रतिपत्तिवत् ।**

---

**अथ च भवति ज्ञान**मिति । विनाप्यन्वयव्यतिरेकाभ्यां भवति ज्ञानम् 'धूमोऽयम्, अग्निरयम्, वृक्षोऽयम्' इति । ततः किम् ? **ततः प्राप्ते प्रत्यक्षे ।** कतमे ते प्राप्ते ? **शाब्द-लैङ्गिकेऽपि ज्ञाने** प्रत्यक्षे
४३९-१ एव प्राप्तुतः । कस्मात् ? **अन्वयव्यतिरेकवियुततथ्यज्ञानत्वात् अविकल्पकत्वात् सन्निकृष्टार्थवदि**ति व्याख्यातो(ता)र्थ[3]सङ्ग्रहः । साधनं स्वार्थपरार्थानुमानयोः शाब्दलैङ्गिकयोः प्रत्यक्षत्वासञ्जनं गतार्थम् ।

किञ्चान्यत्, **अत इदमि**त्यादि । 'स्वप्रतिपाद्यवस्तुधर्मत्वे सति अन्वयव्यतिरेकाभ्यां तस्य गमकत्वात् अनुमानं शाब्दम्, नानुमानादन्यत् प्रमाणम्' इत्येतदपि अत एव पूर्वापरासमीक्ष्यैवोक्तम्, अन्वयव्यतिरेकरहितत्वस्योक्तत्वात् प्रत्यक्षत्वस्यो[4]पपादितत्वात् ।

एष तु पाठो घटमान उपलक्ष्यते—**[5]नाप्रमाणान्तरमि**त्यादि श्लोकः । **यदि न प्रमाणान्तरमि**त्यादि तदेव प्रत्युच्चारयति यावत् **कृतकत्वादिव**दिति । **ततोऽन्यापोहार्थे**त्यादि दोषोपन्यासः । **न [6]शब्द एवैकस्मिन्नि**ति यथा मयोक्ताः [7]शाब्दप्रत्यक्षप्रसङ्गादिदोषाः अन्यापोहार्थकृताः केवले, किं तर्हि ? **तद्विधदोषजालोपनिपातसम्बन्ध्येव तेऽनुमानमपि ।** तत् कथमिति [8]चेत्, तर्हि तदेवं प्रकाश्यते—**नन्वेवं कृतकत्वाद्यप्यनुमानं** स्वार्थं परार्थं वा त्रिलक्षणं लिङ्गं शब्दवदुक्तविधिना **स्वार्थमात्मापोहेन नाशयेदेव,** न न नाशयति, इयं प्रतिज्ञा । हेतुः—**अन्यापोहेने**त्यादि गतार्थः, दृष्टान्तश्च याव**दन्यापोहशब्दार्थवदि**ति साधनम् ।

तस्य भावना साधनम्—**धूम [9]इति अधूमो न भवति इति निरन्वया [10]प्रतिपत्तिरप्रतिपत्तिरेवे**ति प्रतिज्ञा । **[11]ग्राह्यदर्शनरहितत्वा**दिति हेतुः । **[12]स्थाण्वस्थाण्वप्रतिपत्तिव**दिति दृष्टान्तः, यथा

---

१ पृ०६७४ ॥ २ 'ग्राह्यधूमदर्शन°' इत्यपि पाठोऽत्र भवेत् । ( ग्राह्याग्राह्यदर्शन° ? ॥ ) ३ °**संग्रहः स्वार्थपरार्थ°** य० ॥ ४ °**पयादित्वात्** भा० । °**पयाचितत्वात्** य० ॥ ५ **नाप्रमाणमित्यादि** य० ॥ ६ ( शाब्द ? ) ॥ ७ **शब्दिप्रत्यक्ष°** भा० । ( शाब्दे प्रत्यक्ष° ? ) ॥ ८ **चेत् एतर्हि** भा० ॥ ९ **इति धूमो** भा० ॥ १० **प्रतिपत्तिरेवेति** य० ॥ ११ **ग्राह्यामदर्शन°** प्र० । 'ग्राह्यधूमदर्शन°' इत्यपि पाठोऽत्र भवेत् । ( ग्राह्याग्राह्यदर्शन° ? ग्राह्यस्य दर्शन° ? ) ॥ १२ **स्थाण्वप्रतिपत्ति°** भा० ॥

**गुणसमुदायो हि धूमाख्योऽर्थः [ बहलपाण्डुत्वाद्यानन्त्ये च धूमत्वाभावः, तस्मात् तद्द्वारेणानुमानासम्भव इति तदेकलक्षणतापि नैव ] कु[1]त एवान्यापोहः, अगृहीतब्राह्मणाब्राह्मणार्थाप्रतिपत्तिवत् । एवं तावद्धूमार्थ एव न निश्चीयते, किं पुनर्यत्रासौ वर्तते ?**

**यच्च धूमोऽग्निमत्प्रदेशधर्म इति तदपि नन्वल्पबहुताप······················ गुणसमुदायोऽसौ, नाग्निदेशौ नाम कौचिदपि स्तः । तज्ज्ञानाभ्यां तु तदर्थाध्यारोपणेन······················इत्यादि यावद[2]न्योपादानमात्मनश्च त्यागः । सपक्षासपक्षयोरप्येवमेव यावदात्मनश्च ।**

---

स्थाण्वस्थाणुविषयविज्ञानरहितस्य ग्रा[3]ह्यस्य [ द]र्शनाभावादप्रतिपत्तिर्निरन्वयत्वात् तथा धूम इत्यधूमो न भवतीति ।

तद्व्याख्या—[4]**गुणसमुदायो ही**त्यादि पूर्ववदेव भावनीयं पौ[5]ण्डुत्वाद्यक्षरविशेषं यावत् **कुत एवान्यापोहः, अगृहीतब्राह्मणाब्राह्मणार्थ(र्था)प्रतिपत्तिव**दिति साधनेनैव भावितमप्रतिपत्तित्वम् । **एवं तावद्धूमार्थ एव न निश्चीयते, किं पुनर्यत्रासौ** धूमो गुणसमुदाये परमार्थेऽग्नौ **वर्तते ?** सोऽपि न निश्चीयतेऽग्निरित्यर्थः । ताभ्यां चाग्निधूमाभ्यां ततोऽन्ययोरनग्न्यधूमयोरपोहौ स्याताम्, तदभावात् कुतस्तावपि ? इति । ४३९-२

**यच्च धूम** इत्यादि *[6]धर्मेऽग्नौ सिद्धे तद्वति प्रदेशे च धर्मिण्यग्निमति सिद्धेऽग्निमत्प्रदेशधर्मो धूमः सिध्येत्, तत् सर्वमसिद्धमिति तद्दर्शयति—**तदपि नन्वल्पबहुताप**ेत्यादि* समासदण्डको यावद् **गुणसमुदायोऽसौ, नाग्निदेशौ नाम कौचिदपि स्त** इति तमेव तदुक्तं न्यायं दर्शयति ।

**तज्ज्ञानाभ्यां त्वि**ति अग्निदेशज्ञानाभ्यां **तदर्थाध्यारोपणेने**त्यादिना तमेवाशेषमतीतं ग्रन्थमतिदिशति **यावदन्योपादानमात्मनश्च त्याग** इति ग्र[7]न्थावधिं च दर्शयति समानप्रचर्चत्वादिति । एवं तावत् पक्षधर्मस्य चानुपपत्तिर्व्याख्याता 'किं भवदेव भवति उताभवत्, अन्यदनन्यत्, अपोहश्च गुणसमुदायपरमार्थश्च स्वार्थः' इत्यादिविकल्पैरात्मापोहात् । **सपक्षासपक्षयोरप्येवमेवे**त्यतिदिशति, तैरेव विकल्पैर्विचार्यमाणयोः सपक्षासपक्षयोरप्यभावात् । सपक्षासपक्षावपि भवन्तावेव भवत उताभवन्तौ अन्या[8]वनन्यावपोह्यो(हौ) गुणसमुदायस्वार्थौ [9]चेत्यादिविकल्पैरात्मापोह इति समानत्वात् । आ कुत आरभ्य ग्रन्थ इति चेत्, उच्यते—**किम[10]न्यत्वे न सामान्य-भेद-पर्याय वा[11]च्यनुत ? विधिः । न[12]नु** इत्येतस्माद् ग्रन्थावधेरारभ्यातीतो ग्रन्थो योज्यः । कियद[13]वधिरिति चेत्, उच्यते—इ[14]दमस्मिन्नन्तरे **यावदात्मनश्चे**ति । ४४०-१

---

१ तुलना–पृ० ६६८ पं० ७, पृ० ६७१ पं० ४ ॥ २ पृ० ६५७ इत्यत्र कदाचिद् भवेदतिदिष्टः पाठः ॥ ३ **ग्राह्यस्पर्शनाभावा°** प्र० ॥ ४ तुलना–पृ० ६६८ पं० ५ पृ० ६७१ पं० ३ ॥ ५ **पाण्डुरत्वाद्य°** भा० ॥ ६ * * एतच्चिह्नान्तर्गतः पाठो य० प्रतौ नास्ति ॥ ७ **ग्रन्थाविधिं** य० । **ग्रन्थाविविधिं** भा० ॥ ८ **°वनन्यापोह्यो** भा० । **°वन्यापोह्यो** य० ॥ ९ **वेत्यादि°** इति सम्यग् भाति ॥ १० पृ० ६३७ पं० ५–पृ० ६३८ पं० १ ॥ ११ **°बाध्यतुत्** प्र० ॥ १२ **न तु** प्र० ॥ १३ **°दवधेरिति** प्र० ॥ १४ **इयम°** य० ॥

**यथा कृतकत्वादेर्न पक्षस्तेनैव न्यायेन न पक्षोऽन्यापोहवादिनः । एवं नास्य सपक्षो नासपक्षः ।**

**एवमनुमानमप्रमाणमेव, अतत्तत्प्रत्ययात्मकत्वात्, अलातचक्रधीवत् । शाब्दमपि नाप्रमाणान्तरम्, अप्रमाणमेवानुमानवत् ।**

**इदमपि चात एव पूर्ववदलक्षणं यत् त्वयोक्तम्—**

तथाङ्गं येन रूपेण लिङ्गिनं नातिवर्तते ।
तेनैवानेकधर्मापि गमकं[1] नेतरेण तु ॥

---

एतस्य ग्रन्थस्योपरि उपसंहारग्रन्थः प्रागुक्तन्यायप्राण एव–**यथा कृतकत्वादेर्न पक्षः** 'अनित्यः शब्दः, अग्निरत्र'[2] इति वा स्वार्थपरार्थयोस्**तेनैव न्यायेन न पक्षो**ऽग्निविशिष्टो देशोऽनित्यत्वविशिष्टः शब्दो वाऽन्यापोहवादिनः[3] 'न भवति न भवति' इत्यभवनपरमार्थत्वादुभयतोऽप्यभावमात्रत्वात् । तस्मिंश्चासति प्रदेश-शब्दादिधर्मिणि पक्षे कुतस्तस्य पक्षधर्मः ? इति पक्ष-धर्मौ न स्तः । **एवं नास्य सपक्षो नासपक्ष** इति तथा भावितार्थमेव बहुधा ।

**एवमनुमानमप्रमाणमेव,[4] अतत्तत्प्रत्ययात्मकत्वात्, अलातचक्रधीव**दिति । पक्ष-सपक्षाऽसपक्षव्यवस्थानाद्धि[5] त्रैलक्षण्यव्यवस्थातश्चानुमानप्रामाण्यमिष्यते[6] । तदेवं पक्षाद्यतथार्थत्वात् 'अतस्मिंस्तदिति प्रत्ययोऽनुमानम्' इति सुभावितार्थम् । तस्मादतत्तत्प्रत्ययात्मकत्वादनुमानमप्रमाणम्, अलातचक्रे भ्रमद्दृष्टेः पुंसोऽचक्रे 'चक्रम्' इति प्रत्ययवदिति । तस्मात् साधूक्तम्–

नाप्रमाणान्तरं[7] शाब्दमनुमानात् तथाहि तत् ।
कृतकत्वाद्यपि स्वार्थमात्मापोहेन नाशयेत् ॥ इति ।

अप्रमाणादनुमानात् परपरिकल्पितं **शाब्दमपि नाप्रमाणान्तरं** नार्थान्तरम्, **अप्रमाणमेवानुमानव**दिति प्रकृतोपसंहारार्थः ।

४४०-२ **इदमपि चात एव पूर्ववदलक्षणम्** । न प्रमाणान्तरं शाब्दम् [ प्र० समु० ५।१ ] इति श्लोको यथा[8] न [ ल]क्षणं तथेदमपि लिङ्ग-लिङ्गिनोर्गमक-गम्यनियमार्थकम् । कतमत् तदिति चेत्, उच्यते– **यत् त्वयोक्तम् तथाङ्ग**मित्यादि । लिङ्गमङ्गं धूम-कृतकत्वादि **लिङ्गिनम्** अग्न्यनित्यत्वादिविशिष्टं देश-शब्दादिमर्थं[9] **नातिक्रम्य वर्तते येन रूपेण,** केन च नातिवर्तते ? 'धूम इत्यधूमो न भवति, कृतक इत्यकृतको न भवति' इत्यधूमाकृतकनिवृत्त्यात्मना नातिक्रामति, **तेनैव** च रूपेणान्यतो व्यावृत्त्यात्मकेन गमयति, सत्त्व-द्रव्याद्यनेकधर्मापि [10]संस्तैस्तु व्यभिचारान्न गमयति सत्त्वादिसामान्यधर्मैरिति । एष तावद् गमकनियमः । गम्यनियमोऽपि **गम्यन्त** इत्यादि । लिङ्गिनः अनुबन्धिनः[11] सामान्यधर्माः सत्त्व-द्रव्यत्वादयो गम्यन्ते

---

१ ( गमयतीतरैर्न तु ? ) ॥ २ °**रत्रेति रत्रेति वा** प्र० ॥ ३ **वान्योपोह**° प्र० ॥ ४ °**णमेव तत्तत्प्र**° प्र० ॥ ५ °**नाद्धित्रै**° प्र० ॥ ६ °**सिष्येते** य० । दृश्यतां पृ० ६६६ टि० २ ॥ ७ दृश्यतां पृ० ६७२ पं० ४ ॥ ८ **यथा नक्षणं** प्र० । ( यथाऽलक्षणं ? ) ॥ ९ तुलना—पृ० ६५३ पं० ५ ॥ १० **संस्तैस्त्वाव्यभि**° य० । **संस्तैस्त्वाद्यभि**° भा० । ( संस्तैस्तद्व्यभि° ) ॥ ११ **अनुबन्धनः सान्यधर्माः** प्र० ॥

गम्यन्ते तेऽपि लिङ्गेन [1]लिङ्गिनो येऽनुबन्धिनः ।
[2]विशेषा न तु गम्यन्ते तस्यैव व्यभिचारिणः ॥
लिङ्गानुबन्धिनस्त्वर्था गमयन्ति न लिङ्गिनम् ।
[3]व्यभिचाराद् विशेषास्तु प्रतीताः प्रतिपादकाः ॥ [प्र० १६½ समु० २।१८½]

**किमङ्गम्** ··········। ··············॥ ··········। ··············॥ ··········। ··········॥

**यत्तूक्तं** [4]न सर्वत्र लिङ्गिनि लिङ्गं सम्भवति यथा अग्निरत्र धूमात् [　　] **तदिदमप्यप्रेक्ष्यवादितया । यदि लिङ्ग्येव तत् सर्वं कथं तस्य लिङ्गं नास्ति ? अथ नास्ति लिङ्गं कथं तद्वान् ।**

**अग्निधूमोदाहरणे च 'अग्निरत्र' इति निर्देशादग्निमत्त्वेन देशस्य साध्यत्वादग्निमति प्रदेशे सर्वत्र धूमवत्त्वं लिङ्गमस्त्येव ।**

---

तैरविनाभावाल्लिङ्गस्य । **विशेषास्तु**ष-कारीषादयो **न गम्यन्ते तस्यैव, व्यभिचारित्वाद्** लिङ्गस्य विशेषैः सहादृष्टत्वात् । एवं लिङ्गस्यान्यव्यावृत्तं सामान्यं गमकम्, नाव्यावृत्तमन्यतः सत्त्वादि । लिङ्गिनः सामान्यं गम्यं निवृत्तमनग्न्यादिभ्योऽग्नित्वं सत्त्वादि [5]चाग्नित्वानुबद्धमव्यभिचारादिति ।

लिङ्गे त्वयं पुनर्विशेषः—**लिङ्गानुबन्धिनस्त्व[6]र्था** इत्यादिश्लोकः । पूर्वोदाहृताः सामान्यधर्माः सत्त्वादयो लिङ्गस्य धूमस्य **न गमयन्ति,** उक्तकारणत्वात् । **विशेषास्तु** केचिद् लिङ्ग्यविनाभाविनः **प्रतीताः प्रतिपादकाः** पाण्डुत्व-बहुलत्वादय इति ।

एतत् पुनः कथं पूर्ववदलक्षणम् ? इत्यत आह—**किमङ्ग**मित्यादि श्लोकत्रयं [7]क्षेपप्रस्तारेणोपन्यस्तं समस्तस्य त्वदुक्तस्यार्थजातस्य [9]पूर्वोक्तेन 'न भवति, न भवति' इत्यभवनपरमार्थत्वात् खपुष्पवद[8]भावेन गम्यगमकनियमो नास्त्येवेति गतार्थम् ।

किञ्चान्यत्, **यत्तूक्त**मित्यादि पूर्वपक्षप्रत्युच्चारणं यावद्धूमादिति । यत् स्वार्थस्यांशेऽपि **दर्शनाद्** गमकत्वं समर्थयतोक्तं **'न सर्वत्र लिङ्गिनि लिङ्गं सम्भवति'** इति, **तदिदमप्यप्रेक्ष्यवादितया,** ४४१-२
न वादि[10]तांकौशलमित्यभिप्रायः । तद् व्याचष्टे—**यदि लिङ्ग्येवे**त्यादि । लिङ्गमस्यास्तीति लिङ्गि, **यदि तत् सर्वं लिङ्गि** भस्माङ्गारायोगुडपाकाद्यग्न्याख्यं वस्तु **कथं तस्य लिङ्गं नास्ति** लिङ्गाभावे लिङ्गित्वस्यैवाभावात् ? मत्वर्थी[11]यनिर्देश्यस्य लिङ्गित्वाभ्युपगमादेव लिङ्गास्तित्वमित्यभिप्रायः । **अथ नास्ति लिङ्गं कथं तद्वान् ?** 'लिङ्गमस्यास्ति' इति लिङ्गवान् लिङ्गीत्यर्थः, मत्वर्थीयनिर्देश्यो न भवितुमर्हति सोऽर्थस्तन्निमित्तत्वाभावादिति स्ववचनविरोधि ते वचनमिति ।

**अग्निधूमोदाहरणे चे**त्यादि । इदं तावत् प्रष्टव्योऽस्ति—'अग्निरत्र धूमात्' इति इदमः प्रत्यक्षविषयस्य प्रातिपदिकस्य सप्तम्यन्तनिर्देशे 'अत्र' इति प्रत्यक्षोपलभ्यधूमाधारप्रदेशाभिसम्बन्धो धूमवत्त्वाद्धूमादिति यथा 'अग्निरत्र' इति [12]धूमाधारप्रदेशप्रत्यक्षनिर्देशादग्नेः परोक्षस्य जिज्ञासितत्वात् तद्वत्त्वेन देशस्य

---

[1] ( ये लिङ्गिन्यनुबन्धिनः ? ) ॥ [2] दृश्यतां पृ० ४५७-२ ॥ [3] सांख्यकारिका**युक्तिदीपिका**याम् [ पृ० ४५ ] उद्धृतमेतत् ॥ [4] दृश्यतां पृ० ६५२ पं० १३, पृ० ६६२ पं० १ ॥ [5] **चाग्निनानुव**° य० ॥ [6] °**स्त्वार्था** प्र० ॥ [7] **क्षेपप्रश्नारे**° भा० । **प्रेपप्रस्तारे**° य० ॥ [8] **भावे गम्य**° भा० ॥ [9] पृ० ६५२ पं० १ ॥ [10] **नवाधिवाकौशल**° प्र० । ( न वादिवाकौशल° ? ) ॥ [11] °**यनिर्देशस्य लिंगि**° भा० । °**यनिर्देश्य लिंगि**° य० ॥ [12] **समाधार**° प्र० ॥

**अयोगुडाङ्गाराद्यग्नौ धूमासम्भवादिति चेत्, न, अग्निसत्त्वस्य सिद्धत्वात् तद्विषयलिङ्गालिङ्गत्वात् तदलिङ्गित्वात् प्रत्यक्षाविषयवत्। तदसिद्धौ पक्षधर्मादिनिर्मूलत्वात्।**

**'अत्र' इत्यभिधेयस्य लिङ्गित्वादग्निधूमवत्तयोश्च विभागविवक्षायां साध्य-**

---

साध्यत्वात्, इतरथा 'अत्र' इत्यनर्थको निर्देशः स्यात्, तस्मात् सर्वलोकप्रसिद्धेऽग्निमति प्रदेशे साध्ये सर्वत्र धूमवत्त्वं लिङ्गमस्त्येव। न च सर्वाग्निमत्प्रदेशसाध्यत्वम्, तत्र दृष्टान्ताभावादसाधारणतादिदोषप्रसङ्गात्।
४४१-२ तस्मादस्ति सर्वत्र लिङ्गिनि लिङ्गमिति।

[1]**अयोगुडाङ्गाराद्यग्नौ धूमासम्भवादिति चेत्।** स्यान्मतम्—सर्वत्र लिङ्गिनि लिङ्गं नास्ति, अयोग्नौ गुडाग्नावङ्गाराग्नौ च[2] कन(ज्वल)त्स्वपि धूमस्य प्रत्यक्षत एवादर्शनादिति। एतच्च **न, अग्निसत्त्वस्य सिद्धत्वात्।** न हि 'अग्निरत्र' इति प्रतिज्ञायां [3]प्रतीतमग्निसामान्यं साध्यते, अग्निसत्तायाः प्रतीतत्वाल्लोके प्रत्यक्षोपलब्धधूमबलेन 'अत्र' इति देशविशिष्टस्याप्रत्यक्षस्य सिसाधयिषितत्वात् [4]अयोगुडाङ्गारभस्मच्छन्नाद्यग्निष्वपि धूममात्रायाः कस्याश्चिद् दर्शनात् तदविनाभावात्। **तद्विषयलिङ्गालिङ्गत्वा**दिति, [5]अयोगुडाङ्गारादिविषयस्य लिङ्गस्य धूमस्यालिङ्गत्वात् असत्त्वादविवक्षितत्वादप्रत्यक्षत्वाद्वेत्यर्थः। [7]**तदलिङ्गित्वात् प्रत्यक्षविषयव**दिति, ते ह्ययो[8]गुडाङ्गाराद्यग्नयो न लिङ्गिनो लिङ्गाभावात् तेषां तस्यामवस्थायाम्, देशे च [9]तस्मिन्नतिज्ञातत्वात्। लिङ्ग्यते च लिङ्गदर्शनबलेन लिङ्गि वस्तु। न हि ते लिङ्ग्यन्ते [10]लिङ्गादर्शनाद् लिङ्गनिरपेक्षप्रसिद्धेश्च, यथा प्रत्यक्षोपलब्धिकाले। तस्मात् तेषामलिङ्गित्वात् प्रत्यक्ष[11]वदलिङ्गं धूमस्तेषाम्। यत्र चासौ लिङ्गं तत्र [12]लिङ्गिनि देशे सिद्धत्वादेव लिङ्गम्, [13]तत्राऽसिद्धेरग्नित्वेन [14]देशे लिङ्ग्येवेति।

स्यान्मतम्—अयोग्न्यादीनामप्यसिद्धत्वात् पक्षान्तर्गतत्वे सति उच्यते—न सर्वत्र लिङ्गिनि अग्निमति दृश्यते धूम इति। एतदयुक्तम्, **तदसिद्धौ पक्षधर्मादिनिर्मूलत्वात्,** तेषामप्ययोग्न्यादीनां साध्यत्वे धूमः सर्वत्र धर्मिण्यभावादव्यापी पक्षधर्मो[15]ऽसिद्धौ वनस्पतिचैतन्ये स्वापवत् स्यात्। देशविशेषानपेक्षाग्नि-
४४२-१ *[16]सामान्यसाध्यत्वे सपक्षाभावादसाधारणत्वम् 'अत्र' इत्यभिधानवैयर्थ्यं च स्यात्। तन्मा भूदिति '[17]अत्र' शब्दवाच्यस्याग्निविशिष्टस्य धूमविशिष्टत्वेन स्वयमात्मनैव आत्मनः साध्यत्वात् साधनत्वाच्च लिङ्गित्वं लिङ्गत्वं चेत्यत आह—**'अत्र' इत्यभिधेयस्य लिङ्गित्वादग्निमद्धूमवत्तयोश्[18]च विभागविवक्षायां साध्यसाधनधर्मभावा**दिति। स एव हि प्रदेशोऽग्निमत्त्वेन साध्योऽप्रत्यक्षाग्निकै*त्वात्,

---

१ °गुंडागारा° भा०। °गुंडागारा° य०॥ २ 'च सत्स्वपि धूमस्य' इत्यपि पाठोऽत्र स्यात्॥ ३ ऽप्रतीत° प्र०॥ ४ अयोगुंडागारा° भा०। अयोगुडागारा° य०॥ ५ वयोगुंडांगारा° भा०। अयोगुंडागारा° य०॥ ६ अविवक्षि° भा०॥ ७ तदलिंगत्वात् प्र०॥ ८ °गुंडांगारा° भा०। °गुडागारा° य०॥ ९ 'तस्मिन् विज्ञातत्वात्' इत्यपि पाठो भवेत्। यदि त्वत्र लिंगेन सम्बन्धो विवक्षितस्तर्हि 'तस्मिन्नविज्ञातत्वात्' इत्यपि पाठो भवेत्॥ १० लिंगदर्शनाद् प्र०॥ ११ °वदिलिंगं भा०। °वतिलिंगं य०॥ १२ लिंगिनिर्देशे भा०॥ १३ तत्रात्सिद्धे° भा०। तत्रत्सिद्धे° य०॥ १४ (देशो?)॥ १५ 'पक्षधर्मोऽसिद्धो' इत्यपि पाठः स्यात्। तथा चायं प्रतिज्ञार्थैकदेशासिद्धो हेतुर्ज्ञेयः। दृश्यतां पृ० ६६५ टि० १॥ १६ * * एतच्चिह्नान्तर्गतः **सामान्य°** इत्यत आरभ्य ऽप्रत्यक्षाग्नि° इत्यन्तः पाठो य० प्रतौ द्विर्भूतः॥ १७ दृश्यतां पृ० ६६६ टि० २॥ १८ °श्चाविभाग° भा०॥

**साधनधर्मभावाल्लिङ्गिनि लिङ्गस्यासम्भवो न सम्भवति तयोस्तत्रैव प्रधानोपसर्जनभावेन परस्परं नियतभावत्वात्।**

**अग्निमत्प्रदेशपरिचिच्छित्सायाम्·········तत्सम्बन्धिमत्प्रतिपत्तिश्च, यदि च तस्य देशस्य·········तल्लिङ्गतां लभते, तयोरेकवस्तुधर्मत्वात्। नासम्भवन् धूमो लिङ्गतां लभते अपक्षधर्मत्वात्। वनस्पतिचैतन्ये स्वापवद् धूमः सन्देहहेतुः स्यात् पक्षाव्यापिसाधनधर्मत्वात् तत्प्रतिपत्त्याधानाधारधर्मभावात्मकप्रत्ययाव्यवस्थानकारणत्वात् स्थाणुपुरुषभावाभावप्रतिपत्तिवत्।**

---

धूमवत्त्वेन साधनं प्रत्यक्षधूमकत्वात्। तस्माद्विशिष्टदेशसाध्यसाधनधर्मभावाद् **लिङ्गिनि** साध्ये **लिङ्गस्य** साधनस्य **असम्भवो न सम्भवति,** सम्भव एव सम्भवतीत्यर्थः। कस्मात्? **तयोस्तत्रैव प्रधानोपसर्जनभावेन परस्परं नियतभावत्वात्,** अग्निः प्रधानं धूमनिर्वृत्तौ, धूमस्याग्निपरिणामत्वात् तन्निर्वर्त्यत्वात्। धूम उपसर्जनमग्निनिर्वृत्तौ, तत्परिणामत्वाभावादतन्निर्वर्त्यत्वात्। धूमः प्रधानमग्निगतौ, तल्लिङ्गत्वात् तमन्तरेणानिर्वृत्तेरनुपपत्तेरविनाभावात्। उपसर्जनमग्निर्धूमगतौ, अप्रत्यक्षत्वात् तत्कालदेशयोः, अन्यथा भवत्येवेत्युक्तत्वात् तेनान्योन्यप्रधानोपसर्जनभावेन नियमेन भवन्तौ तौ धर्मावग्निधूमाख्यौ देशस्यैकस्य भेदविवक्षायां साध्य-साधने भवतः।

तद्व्याख्या–**अग्निमत्प्रदेशपरिचिच्छित्साया**मित्यादि[1] पूर्वं गमकत्वेन लिङ्गस्य धूमस्य प्राधान्यं गम्यस्य लिङ्गिनोऽग्नेर्गुणभावं दर्शयति यावत् **तत्सम्बन्धिमत्प्रतिपत्तिश्चे**ति। ततः परं **यदि च तस्य देशस्ये**त्यादिना निर्वृत्तावग्नेः प्राधान्यं धूमाप्राधान्यं च यावत्[2] **तल्लिङ्गतां लभत** इति। पक्षधर्मत्व-सपक्षानुगति-विपक्षव्यावृत्तिरूपतां व्याख्याय धूमस्य पूर्वेणाग्निसाध्यतां गमयति। उत्तरेणाग्निविशिष्टदेशसाध्यत्वं व्याख्याय तद्वलनिर्वृत्तधूमप्रत्यक्षतायां त्रैलक्षण्येन गमकत्वं धूमस्य व्याचष्टे। **तयोरेकवस्तुधर्मत्वा**[3]दिति, एतदुक्तं भवति–सम्भवतोरेव लिङ्गलिङ्गिनोः साध्यसाधनभावोऽन्वयप्राधान्यात्[4] नापोहप्राधान्यात्। न चेदिच्छसि[5] ततोऽनिष्टापादनसाधनम्–**नासम्भवन् धूमो लिङ्गतां लभते, अपक्षधर्मत्वात्।** त्वन्मतादेव सर्वलिङ्गिन्यसम्भवात् सिद्धमपक्षधर्मत्वम्। यत्र यत्रापक्षधर्मत्वं तत्र तत्र तल्लिङ्गत्वाभावः, यथा तस्मिन् प्रदेशेऽनग्निधूमादेरधूमायोग्न्यादिकाले[6] वा। किञ्चान्यत्, प्राक्छब्दे[7] व्याख्यातमधुना लिङ्गेऽप्युच्यते **वनस्पतिचैतन्ये स्वापवदि**त्यादि। 'अग्निमानयं देशः धूमवत्त्वात्' इत्यस्मिन् साधने त्वदभिमत्या **धूमः सन्देहहेतुः स्यात्, पक्षाव्यापिसाधनधर्मत्वात्,** तद्व्याख्या–**तत्प्रतिपत्त्याधाने**त्यादि दण्डकहेतुः। तस्य प्रतिपत्तिस्तत्प्रतिपत्तिः, तस्या आधानं तत्प्रतिपत्त्याधानम्, तस्याधारो धर्मः, तस्य भाव आत्मा यस्य स भवति तत्प्रतिपत्त्याधानाधारधर्मभावात्मकः प्रत्ययो यथास्माभिर्व्याख्यातः। तस्य प्रत्ययस्याव्यवस्थाने कारणीभवति स धूमस्त्वन्मतेन पक्षाव्यापिसाधनधर्मत्वात् सर्वत्र लिङ्गिन्यभावादनियतलिङ्गिसम्भवत्वात्। किमिव? **स्थाणु-पुरुषभावाभावप्रतिपत्तिवत्।** यथा स्थाणावभवन् वस्त्रसंयमनादिधर्मः पुरुषे च भवन्

४४२-१

---

१ °मत्प्रदेशपरिविच्छित्साया° भा०। °मत्प्रक्षेपरिविच्छित्साया° य० ॥ २ यावाल्लिंगतां य० ॥ ३ दृश्यतां पृ० ६८१ ॥ ४ °न्यान्यापोह° य० ॥ ५ °न्यतनुवेदमिच्छसि भा०। °न्यनन्तु चेदिच्छसि य० ॥ ६ प्रदेशेरग्नप्रमादेर्धूमायोऽग्यादि° प्र० ॥ ७ पृ० ६६५ पं० १ ॥

**यत्तु तदन्यत्रायोगुडाङ्गाराग्न्यादावदर्शनं तर्क्यते धूमस्य तत्र दर्शनाभावे लिङ्गत्वाव्याख्यानाददोष एव। लिङ्गिन्यदर्शने तु स्याद् दोषः।**

**एवं चानेनैव न्यायेन यस्तद्विपरीतः प्रकाश्यप्रकाशकत्वभेदपाठः सोऽप्यसम्यक्—**

**सम्बन्धो यद्यपि द्विष्ठः सहभाव्यङ्गलिङ्गिनोः।**
**आधाराधेयवद्वृत्तिस्तस्य संयोगिवन्न तु ॥**[1]

---

४४३-१ 'स्थाणुः' इति प्रतिपत्त्याधानाधारभावात्मकप्रत्ययाव्यवस्थानकारणत्वात् द्विविषयसन्देहकृदेकदोभयत्राभावात् 'किं स्थाणुः स्यात् किं पुरुषः स्यात्' तथा वयोनिलयनादिः पुंसि अभवन् स्थाणौ भवन्नुभयविषयं संशयं करोति। यत्र दृष्टस्तत्र निश्चयहेतुरेव स्थाणौ वयोनिलयनं पुरुषे च वस्त्रसंयमनम्, तत्र भवनात्। तथायमपि 'अग्निरत्र धूमात्' इति सन्देहहेतुः स्यात् साध्ये भवनानियमात्।

**यत्तु त**दित्यादि। यत् त्वयेदं साध्यादन्यत्रायोगुडाङ्गाराग्न्यादावदर्शनं प्रत्यक्षतस्तर्क्यते धूमस्य तत्र सपक्षे लिङ्गस्य सर्वत्र दर्शनाभावे लिङ्गत्वाव्याख्यानाददोष एव। लिङ्गिन्यदर्शने तु स्याद् दोषः, लिङ्गी चात्र प्रदेशः प्रत्यक्षधूमसम्बन्धी, तत्र सर्वत्र दृश्यत एव। तस्माद् भ्रान्तवचनमेतत् सर्वत्र लिङ्गिन्यदर्शनान्न दृष्टवत् प्रतिपत्तिः [ ] इति।

किञ्चान्यत्, **एवं चे**त्यादि। अनेनैव न्यायेन 'दर्शबलादेव गमयति' इत्युक्तेन **यस्तद्विपरीतः प्रकाश्यप्रकाशकत्वभेदपाठः सोऽप्यसम्यक्।** कतमोऽसाविति चेत्, उच्यते–**सम्बन्धो यद्यपि द्विष्ठ** इत्यादिकारिकाः **सभाष्याः।** तद्यथा–'**ननु द्विगतत्वात् सम्बन्धस्य संयोगिवद् लिङ्गिधर्मिणा लिङ्गेन भवितव्यम्**' इति चोदिते '**नैतदस्ति, सम्बन्धो यद्यपि द्विष्ठः**' [प्र० समु० वृ० २।१९] इत्यादि। यथा हि

---

१ "ननु द्विगतत्वात् सम्बन्धस्य संयोगिवल्लिङ्गिधर्मिणा लिङ्गेन भवितव्यमिति चेत्, नैतदस्ति, **सम्बन्धो यद्यपि द्विष्ठः सहभाव्यङ्गलिङ्गिनोः।…… ॥"—प्र० समु० वृ०** २।१९ ॥ २ दृश्यतां पृ० ४४९–२ ॥ ३ "न हि यादृशी व्यापकधर्मे व्याप्तिः तादृश्येव व्याप्यधर्मे इति। तथा चाह— सम्बन्धो यद्यपि द्विष्ठः सहभाव्यङ्गलिङ्गिनोः। आधाराधेयवद्वृत्तिस्तस्य संयोगिवन्न तु ॥"—**हेतुबिन्दुटीका** पृ० १९। "द्विष्ठत्वात् सम्बन्धस्य कथमुभयत्रैकाकारता व्याप्तेर्न स्यादित्याशङ्क्य 'यद्यपि' इत्यनेन द्विष्ठं सम्बन्धं वास्तवमभ्युपगम्यापि प्रतिविधत्ते। कयोरसावित्याह—अङ्ग इति। अंगेञ्ञ(र्ज्ञान)-परस्य ग्रहणादंग्यते लिङ्ग्यते प्रतीयतेऽनेन परोक्षार्थ इति अङ्गं लिङ्गम्, तेन लिङ्गलिङ्गिनोरित्यर्थः। किंभूतः स इत्याह—सहेति। तयोरेव युगपद्भावाविप्रकृतत्वात् द्विष्ठत्वाभ्युपगमादेव च सहभावित्वाभ्युपगमोऽप्यायातः। 'यद्यपि'शब्दसान्निध्यात् 'तथापि' इत्यर्थतो द्रष्टव्यम्। तस्य सम्बन्धस्य वृत्तिर्वर्तनम्, तयोर्लिङ्गलिङ्गिनोरित्यर्थात्। कयोरिव सेत्यत आह—आधाराधेययोरिवेति सप्तम्यन्तत्वाद् वतिः। यथा आधाराधेयभावलक्षणः सम्बन्धो द्विष्ठोऽपि नैकरूपया वृत्त्या द्वयोर्वर्तते। यत एवैकसम्बन्धयोगेऽपि नाधारस्याधेयत्वमाधेयस्य वाधारत्वं तथा लिङ्गलिङ्गिनोर्व्याप्तिरपि धूमत्वादावन्यथा अन्यथा च वह्नित्वादौ। अत एव धूमत्वादिरेव व्याप्यतया गमको न प्रमेयत्वादिः। वह्नित्वादिरेव व्याप्यतया गम्यो न तु तार्णत्वादिर्नापि धूमो गम्यो वह्निर्गमक इति।"—**हेतुबिन्दुटीकालोक**. पृ० २६४ ॥ ४ °**त्रायोगुंडागारा**° य०। °**त्रायोगुडांगारा**° भा० ॥ ५ °**नात्वदिष्टवत्** य० ॥ ६ **प्रकाशाप्रकाशकत्वभेदपाठः** य०। **प्रकाशकत्वभेदः** भा० ॥ ७ **समाप्याः** य०। '**भाष्य**'-शब्देनात्र दिङ्नागरचिता **वृत्ति**र्विवक्षिता भाति ॥ ८ °**धर्मिणा** भा० ॥ ९ इत आरभ्य **गम्यतैव स्यान्न गमकत्वम्** [पृ० ६८० पं० १६] इत्यन्तः प्रायः सर्वोऽपि पाठः प्रमाणसमुच्चयवृत्तौ दृश्यते ॥

[1]यथा हि सत्यपि द्विगतत्वे सम्बन्धस्य न कदाचिदाधार आधेयधर्मो भवति नाप्याधेय आधारधर्मा तथा न कदाचिल्लिङ्गं लिङ्गि भवति लिङ्गि वा लिङ्गम् । संयोगी तु यथैकस्तथा द्वितीय इति [2]न तद्वदिह । तथाहि—

लिङ्गे लिङ्गि भवत्येव लिङ्गिन्येवेतरत् पुनः ।
नियमस्य विपर्यासे [4]सम्बन्धो लिङ्गलिङ्गिनोः ॥

[5]यस्माल्लिङ्गे लिङ्गि भवत्येव तस्माद्युक्तं यदग्निवद् धूमो द्रव्यत्वादीनामपि प्रकाशको न तैक्ष्ण्यादीनाम् । यस्माच्च लिङ्गिन्येव लिङ्गं भवति नान्यत्र तस्माद् युक्तं यद् धूमो धूमत्वेनेव पाण्डुत्वादिभिरपि प्रकाशयति न द्रव्यत्वादिभिरिति । एवं हि अवधारणवैपरीत्येन सम्बन्धो लिङ्गलिङ्गिनोः ।

ननु च लिङ्गमपि लिङ्गिनि भवत्येव यथा कृतकत्वमनित्यत्वे—

[6]कामं लिङ्गमपि व्यापि लिङ्गिन्यङ्गि तु तत्ततः ।
व्यापित्वान्न तु तत्तस्य गमकं गोविषाणवत् ॥

यद्यपि किञ्चिल्लिङ्गं लिङ्गिनि भवत्येव न तु तत्तेन व्यापित्वेन लिङ्गिनं गमयति । तद्यथा—विषाणित्वेन गोव्यापित्वेऽपि न गोप्रकाशकत्वम्, व्यापित्वात्तु तदेव गोत्वेन प्रकाश्यं भवति, [7]तद्वदिहेति । '[8]किं

---

सत्यपि द्विगतत्वे सम्बन्धस्य न कदाचिदाधार आधेयधर्मा भवति नाप्याधेय आधारधर्मा तथा न कदाचिल्लिङ्गं लिङ्गि भवति लिङ्गि वा लिङ्गम् । संयोगी तु यथैकस्तथा द्वितीय इति न तद्वदिह ।

तथाहि–**लिङ्गे लिङ्गि भवत्येवे**त्यादि श्लोकः । यस्माच्च लिङ्गे लिङ्गि भवत्येव तस्माद् युक्तं यदग्निवद् धूमो द्रव्यत्वादीनामपि प्रकाशको न तैक्ष्ण्यादीनाम् । यस्माच्च लिङ्गिन्येव लिङ्गं भवति नान्यत्र तस्माद्युक्तं यद् धूमो धूमत्वेनेव पाण्डुत्वादिभिरपि प्रकाशयति न द्रव्यत्वादिभिरिति । एवं हि अवधारण- ४४३-२
वैपरीत्येन सम्बन्धो लिङ्गलिङ्गिनोः ।

ननु च लिङ्गमपि लिङ्गिनि भवत्येव यथा कृतकत्वमनित्यत्वे, **कामं लिङ्गमपि व्यापी**त्यादि । यद्यपि किञ्चिद् लिङ्गं लिङ्गिनि भवत्येव, न तु तत्वे(**त्ते**)न व्यापित्वेन लिङ्गिनं गमयति । तद्यथा– [10]विषाणित्वेन गोव्यापित्वेऽपि न गोप्रकाशकत्वम्, व्यापित्वात्तु तदेव गोत्वेन प्रकाश्यं भवति तद्वदिहेति ।

---

१ दृश्यतां पृ० ४४५-२ ॥ २ **'तद्वदिह न भवति'** इत्यपि पाठो भवेत् ॥ ३ कारिकेयं **हे**तुबिन्दुटीका[ पृ० १८ ]-प्रमाणमीमांसा[ पृ० ३८ पं० १९ ]दिष्वप्युद्धृता । इदं पुनरत्रावधेयम्—पृ० **४५५**–२, **४५७**–१, **४५७**–२, इत्यादावत्र **'लिङ्गी'** इति पाठो वक्ष्यते । प्रमाणमीमांसादिष्वपि **'लिङ्गी'** इति पाठः । अत्र तु **'लिङ्गि'** इति पाठदर्शनादस्माभिः स एव पाठोऽत्रादृतः ॥ ४ अत्र **'सम्बन्धो'** इति पाठ एव नयचक्रवृत्तौ सम्मतः । **प्र**माणसमुच्चयटीकायां **वि**शालामलवत्यामपि स एव पाठः । हेतुबिन्दुटीकाया **आलोके**ऽप्येवमस्य व्याख्या—"**लिङ्गे** साधने सति **लिङ्गी** साध्यं **भवत्येव**। अनेन व्यापकधर्मगता व्याप्तिर्दर्शिता । **इतर**ल्लिङ्गं पुन**र्लिङ्गिन्येव** साध्य एव भवतीति । अनेन व्याप्यधर्मगता व्याप्तिरुक्ता । उक्तेन प्रकारेण **नियमस्य** अवधारणस्य **विपर्यासे** वैपरीत्ये, विपर्यासश्चैकत्रायोगव्यवच्छेदेन विशेषण[म]परत्रान्ययोगव्यवच्छेदेन । तस्मिन् विपर्यासे सति लिङ्गलिङ्गिनोरस(स्स)म्बन्धो व्याप्तिरित्यर्थः ।"—पृ० २६३ । किन्तु मुद्रितायां प्रमाणमीमांसायां हेतुबिन्दुटीकायां च **'ऽसम्बन्धो'** इति पाठान्तरं दृश्यत इति ध्येयम् ॥ ५ दृश्यतां पृ० **४५५**—२ ॥ ६ दृश्यतां पृ० **४**१८–१ ॥ ७ **'तद्वदिहेति'** **प्र**माणसमुच्चयवृत्तौ न दृश्यते ॥ ८ **'कस्मात्'** इति **'कुतः'** इति वा पाठः **प्र**माणसमुच्चयवृत्तेर्भोटभाषानुवादानुसारेणात्र भाति । तथापि **'किं कारणम्'** इति पाठोऽत्र स्यादिति संभाव्यते, दृश्यतां पृ० **४५८**–२ ॥ ९ **°नामस्ति प्रका°** प्र० ॥ १० **विषाणत्वेन** प्र० ॥

कारणम् ?

[१]प्रतिषेध्याप्रचारेण यस्माद्व्याप्तिरपेक्ष्यते ।
लिङ्गस्य लिङ्गिनि व्याप्तिस्तस्मात् सत्यप्यकारणम् ॥

कृतकत्वस्य हि अनित्यार्थव्यापित्वेऽपि नित्यत्वप्रतिषेधेन गमकत्वम् । एवमनित्यत्वस्य कृतकार्थव्यापित्वेऽपि अकृतकत्वप्रतिषेधेन गमकत्वम् । तस्माद् यदनित्यार्थेऽपि कृतकत्वव्यापित्वं तेनाकृतकत्वानवकाशादनित्यत्वेन कृतकत्वस्याकृतकत्वप्रतिषेधेन गम्यतैव स्याद् न गमकत्वम् ।

*[२]तुल्यमिति चेत्, न, विषाणित्वे व्यभिचारात्* । आह च—

[३]नाशिनः कृतकत्वेन व्याप्तेरकृतकं न तत् ।
[४]नित्याभावस्तु व्याप्तत्वात् कृतकार्थे न दृश्यते ॥
विषाणित्वेन [५]गौर्व्याप्तोऽविषाणित्वं निवर्तयेत् ।
विषाणित्वेन [६]गौर्व्याप्तोऽगवार्थं न निवर्तयेत् ॥

[७]इति निर्दिष्टं स्वार्थानुमानम् [ [८]प्र० समु० वृ० २।१९½-२४½ ] ।

---

किं कारणम् ? **प्रतिषेध्याप्रचारेणे**त्यादि श्लोकः । कृतकत्वस्य हि अनित्यार्थव्यापित्वेऽपि नित्यत्वप्रतिषेधेन गमकत्वम्, तथा अनित्यत्वस्य कृतकार्थव्यापित्वेऽपि अकृतकत्वप्रतिषेधेन गमकत्वम् । तस्माद् यदनित्यार्थेऽपि कृतकत्वव्यापित्वं तेनाकृतकत्वानवकाशादनित्यत्वेन कृतकत्वस्याकृतकत्वप्रतिषेधेन गम्यतैव स्यान्न [९]गमकत्वम् । तुल्यमिति चेत्, न, [१०]विषाणित्वे व्यभिचारादिति ।

**आह चे**त्यादि एतस्यार्थस्य निदर्शने भावनार्थे कारिके—**नाशिनः [११]कृतकत्वेने**त्यादि **विषाणित्वेने**त्यादि च । [१२]पूर्वया कारिकया कृतकत्वेनानित्यत्वं व्याप्तं न साधनमविवक्षितत्वात् । यस्माद् नित्याभावोऽनित्यत्वं [१४]कृतकेऽर्थे न प्रदर्श्यते—यदनित्यं तत् कृतकमिति, किं तर्हि ? नित्याभावेनाकृतकाभावस्य कृतकस्य व्याप्तेर्विवक्षितत्वात् कृतकत्वे[१५]ऽर्थेऽनित्यत्वं प्रदर्श्यते—यत् कृतकं तदनित्यमपि(मिति) । द्वितीयया तस्यार्थस्य स्फुटीकरणार्थं विवक्षिताविवक्षितयोर्व्याप्त्योर्व्यभिचाराव्यभिचारनिदर्शनं क्रियते । 'विषाणित्वाद् गौः' इति व्यभिचरति, 'गोत्वाद् विषाणी' इति न व्यभिचरति, अतो न गमयति [ गमयति ] चेति प्रतिषेध्या-
४४४-१ प्रचाररूपा व्याप्तिर्गमयति न विधेयप्रचाररूपेति **निर्दिष्टं स्वार्थमनुमानं** गम्यगमकनियमव्यवस्थोक्तेर्मयैव न **वादविधिकारा**दिभिरित्याहोपुरुषिकयोपसंहरत्यान्यापोहिकः ।

---

१ दृश्यतां पृ० ६७७ पं० २२ । पृ० ४५८-२ ॥ २ एतदन्तर्गतः पाठः **प्रमाणसमुच्चयवृत्तौ** न दृश्यते ॥ ३ उक्तमर्थं कारिकाद्वयेन सङ्गृह्णाति—**नाशिनः कृतकत्वेने**त्यादि । अनित्यत्वस्य कृतकत्वेन व्याप्तेः 'अनित्यत्वात् तदकृतकं न' इत्ययमप्रस्तुत एवार्थः प्रतीयते इति क्रियालोपेन निर्दिशति । यः प्रस्तुतो नित्यत्वाभावोऽनित्यत्वं स तेन व्याप्तत्वात् कृतकत्वार्थे न दृश्यते । इममेवार्थं स्फुटीकर्तुं द्वितीयया कारिकया दृष्टान्तमाह । **अविषाणित्वं निवर्तये**दिति विषाणित्वं गमयेदित्यर्थः । **अगवार्थं न निवर्तये**दिति गवार्थस्य न साधनमित्यर्थः ।"—**विशाला॰** D. ed. पृ० १०४ B–१०५ A । P. ed. पृ० ११८ A ॥ ४ ( नित्याभावो न व्यापित्वात् कृतकार्थे प्रदर्श्यते ? ) । ( व्यापित्वात् कृतकार्थे तु नित्याभावो न दर्श्यते ? ) । ( अनित्यत्वं त्वभिव्याप्त्या कृतकेऽर्थे न दृश्यते ? ) ॥ ५ ( गौर्व्याप्तोऽविषाणित्वनिवर्तकः ? ) ॥ ६ ( गौर्व्याप्तो नागवार्थनिवर्तकः ? ) ॥ ७ इत्यन्तरश्लोकौ [ इति सङ्ग्रहश्लोकौ PSV² ] । निर्दिष्टं स्वार्थानुमानम् ।' इति **प्रमाणसमुच्चयवृत्तौ** पाठः ॥ ८ PSV¹ C. ed. पृ० ३१ B–३२ A । PSV² P. ed. पृ० ११३ B–११४ । दृश्यतां पृ० ४५५-२ ॥ ९ **गमकत्वे** भा० । **गमत्वे** य० ॥ १० **विषाणत्वे** य० ॥ ११ **कृतकत्वेत्यादि** प्र० । दृश्यतां पृ० ४५९-१ ॥ १२ दृश्यतां पृ० ४५९-२ ॥ १३ **पूर्विकया** य० ॥ १४ **कृतकोर्थे** भा० । **कृतकोर्थः** य० ॥ १५ °**कत्वेऽर्थ** य० ॥

**अत्रोच्यते—**

**तद्भावदर्शनादेव साध्यसाधनधर्मयोः ।**
**विधेः संयोगिवद्वृत्तिराधाराधेयवन्न तु ॥**

**तद्भावदर्शनं यत् तद् भवति तेनैव भूयते तद्भावस्य दर्शनादेव धूमोऽग्निं गमयति । अतदभावान्वयशब्दार्थतायामधूमस्य पटस्याभावो घटो वन्ध्यापुत्रो वा स्यात्, तथानग्नेः पवनस्याभाव उदकं खपुष्पं वा स्यादसम्बद्धम् । 'तत्र' इत्यभूतान्वयसाधनार्थातथार्थत्वात् । तद्भावदर्शनादेव तु साध्यसाधनधर्मयोस्तथाभूतान्वयदर्शनात् संयोगिनोरिव वृत्तिरिष्टा, न त्वाधाराधेयवदतुल्या, द्वयोरपि लिङ्गिन्याधारे परस्परप्रत्ययाधाराधेयप्रधानोपसर्जनभावेनाविनाभावादेकवस्तुधर्मत्वात् कृतकानित्यत्ववत् ।**

---

अत्रास्माभिरुच्यते—**तद्भावदर्शनादेवे**त्यादि श्लोकस्तद्विपरीतार्थः संयोगिवद् नाधाराधेयवदिति । **तद्भावदर्शनं यत् तदि**त्यादि, स एवाग्निर्धूमो भवति, तेनैवाग्निना धूमेन भूयते तद्देशेन्धनादिसम्बद्धेन[1], नान्येन अयोध्यादिनाऽबादिना वा धूमेन भूयते, न [2]सोऽग्निर्धूमो न भवति भवत्येवेति **तद्भावस्यास्वनिवृत्तिहेतु**[3]भावाभूतस्य **दर्शनादेव** [4]**धूमो** धूमो भवन्नेवाग्निं **गमयति,** न यत्र न दृष्टस्तदवच्छेदेन त्वन्मतेन 'अधूमो न भवति यतस्तस्मादनग्निर्न भवति' इति, तद्भावाग्रहणे दोषदर्शनात् । को दोष इति चेत्, उच्यते—**अतदभावान्वयशब्दार्थतायां** विधिरूपतद्भावान्वयशब्दार्थविपरीतकल्पनायाम् 'अग्निरत्र धूमात्' इत्यस्मिन्ननुमानेऽग्निधूमविपक्षव्यावृत्तिमात्रेष्टावनिष्टम् **अधूमस्य पटस्याभावो घटो वन्ध्यापुत्रो वा स्यात्,** अनिष्टं चैतत् । एष लिङ्गे दोषः । लिङ्गिन्यपि **तथान**[5]**ग्नेः पवनस्याभाव उदकं खपुष्पं वा स्यादसम्बद्धम्,** अनिष्टं चैतदपि । किं कारणम्? **तत्रेत्यभूतान्वयसाधनार्थातथार्थत्वात्,** 'यत्र धूमस्तत्राग्निः' इत्यन्वयसहितः साधनार्थस्तथार्थः सत्यस्तद्भावात् तत्प्रदेशसम्बन्ध्यग्निधूमभावात्, अन्यथा त्वदिष्टातदभावात्मकस्य अभूतान्वयसाधनार्थस्यातथार्थत्वादनन्तरनिर्दिष्टा[6]निष्टप्राप्तिः । [7]अत एव तर्हि अस्मदिष्टतद्भावदर्शनादेव **तु साध्यसाधनधर्मयोः** अग्निधूमयो**स्तथाभूतान्वयदर्शन**हेतोः **संयोगिनो**- ४४४-२ रज्ज्वोरिव य[8]थैकस्य तथा द्वितीयस्यापि तद्भावाविशिष्टा **वृत्तिरिष्टा, न त्वाधाराधेय**[9]*****व**दतुल्या,** यथा आधार [ आधार ] एव, [10]आधेय आधेय एव, न विपर्ययेणेति । कस्मात्? **द्वयोरपि लिङ्गिनि आधारे** देशेन्धनादौ **परस्परप्रत्ययाधाराधेय*प्रधानोपसर्जनभावेनाविनाभावात्,** प्रा[11]ग्व्याख्याते[12]निर्वर्तकगम्यभावेन **एकवस्तुधर्मत्वात्, कृतकानित्यत्ववत्,** यथा हि प्रागभाव-प्रध्वंसाभावलक्षण एक एव ह्यभूत्वा भवन् भूत्वा चा[13]भवन् कृतकश्चानित्यश्च भावः साध्य-साधनाख्यां लभते तथेह अग्नि-धूमाख्य एक एव

---

१ °नादिसंबंधेन य० । °नातादिसंबंधेन भा० ॥ २ सोग्निधूमो प्र० ॥ ३ °तुतावाभूत्यस्य य० । °तुताथाभूत्यस्य भा० । '°तुभावभूतस्य' इत्यपि पाठोऽत्र भवेत् । ( °तुतयाभूतस्य ? ) ॥ ४ धूमो भवन्नेवाग्निं भा० ॥ ५ °नग्नेरपवनस्य प्र० ॥ ६ °ष्टानिर्दिष्टप्राप्तिः य० ॥ ७ अत एतर्हि य० । अयमपि पाठः संगच्छेत ॥ ८ यथैवास्य तथापि द्वितीय° प्र० ॥ ९ * * एतदन्तर्गतः °वदतुल्या इत्यादिः °धाराधेय° इत्यन्तः पाठो य० प्रतौ नास्ति ॥ १० आधेयोधेय एव भा० ॥ ११ पृ० ६७७ पं० १० ॥ १२ निर्वनक° य० ॥ १३ राभवन् प्र० ॥

**एवं च सपक्षे साध्यसाधनधर्मयोः सहभावदर्शनार्थमन्वयवृत्त्या साधर्म्यदृष्टान्त उच्यते तथाप्रत्यक्षसम्बन्धित्वविवक्षायाः ।**

**प्रसिद्धस्य धर्मस्य साधनत्वादप्रसिद्धस्य साध्यत्वात् कुतो लिङ्गलिङ्गिव्यतिकरदोषाशङ्का ? धर्मिण एवैकस्य लिङ्गत्वाल्लिङ्गित्वाच्च, अलिङ्गत्वाद् धूमस्यापि अलिङ्गित्वाच्चाग्नेः ।**

**यत् पुनरिदं सम्बन्धवादिनः प्रति लिङ्गलिङ्ग्यैकरूप्यापादनमेषोऽन्यायः । कोऽयं नियमः सम्बन्धिना द्वितीयसम्बन्धिरूपेण भवितव्यमिति । न हि चैत्रा-**

---

साध्य-साधनव्यपदेशं लभते प्रदेशेन्धनादिर्भावः । तस्मात् साध्य-साधनधर्मयोर्लिङ्गिन्याधारे परस्परप्रत्यया-धाराधेयप्रधानोपसर्जनभावेनाविनाभावात् संयोगिवद्वृत्तिः, न तु कुण्डबदरयोराधाराधेययोरिव [1]वृत्तिः, अनुमाने तुल्यकक्षत्वादुभयोरिति ।

**एवं च सपक्षे**त्यादि । [2]एतमेव चास्मदुक्तं न्यायमुपोद्बलयति साधर्म्यदृष्टान्तप्रयोगो लोकप्रसिद्धो न्यायशास्त्रे च । तद्यथा–'यत्र धूमस्तत्राग्निः, यत् कृतकं तदनित्यम्' इति सपक्षे **साध्य-साधनधर्मयोः** अग्निधूमयोः कृतकानित्यतयोश्च तद्वति देशान्तरे वस्त्वन्तरे वा घटादौ **सहभावदर्श[3]नार्थमन्वयवृत्त्या साधर्म्यदृष्टान्त उच्यते** । कस्मात् ? **तथाप्रत्यक्षसम्बन्धित्[4]वविवक्षाया** हेतोः, प्रसिद्धस्य [5]साधनधर्मत्वेन अप्रसिद्धस्य च साध्यधर्मत्वेन विवक्षितत्वादित्यर्थः ।

४४५-१ यत् पुनरत्राश[6]ङ्क्यते त्वया–लिङ्गस्य लिङ्गित्वं लिङ्गिनो वा [7]लिङ्गत्वं प्रसक्तम् [ ] इति, एतस्या आशङ्काया अनुपपत्तिरेव, **प्रसिद्धस्य धर्मस्य साधनत्वादप्रसिद्धस्य साध्यत्वात् कुतो लिङ्गलिङ्गिव्यतिकरदोषा[8]शङ्का** लिङ्गैकदोषाशङ्कानुपपत्तिरेवेत्यर्थः । धर्मिण एवैकस्य प्रदेश-[9]शब्दादेर्लिङ्गत्वाद् लिङ्गित्वा[10]च्चालिङ्गैकदेशत्वाद्वा लिङ्गिनः, [11]धर्म्येव लिङ्गं लिङ्गी चेति कृत्वा नाग्निर्लिङ्गी न धूमो लिङ्गं तथा कृतकानित्यत्वे । तस्माद**लिङ्गत्वाद् धूमस्यापि** नालिङ्गित्वादेव, **[12]अलिङ्गित्वाच्चाग्नेः** नालिङ्गत्वादेव । तस्मात् [13]प्रत्यक्षेतरसम्बन्धित्वविवक्षितत्वाद् न सङ्कीर्येयातां लिङ्गलिङ्गिनौ । अतः प्रसिद्धधर्मलिङ्गद्वारेण अप्रसिद्धधर्मलिङ्गिद्वारेण चैकस्यैव साधनत्वात् साध्यत्वाच्च व्यवस्थितमेव लिङ्गलिङ्गित्वमिति ।

**यत् पुनरिदं सम्बन्धवादिनः प्रती**त्यादि । यदेतद् लिङ्गलिङ्ग्यैकरूप्यापादनमेषोऽन्यायः, **कोऽयं नियमः–सम्बन्धिना द्वितीयसम्बन्धिरूपेण भवितव्यम् इति** ? नैष नियमोऽस्ति प्रत्यक्षाप्रत्यक्षत्वविशेषदर्शनाद् धूमाग्न्यादिषु । तद्दर्शयति–**न हि चैत्राश्वे**त्यादि, स्व-स्वाम्यादिसप्तविधसम्बन्धेषु चैत्राश्वादिसम्बन्धिनां प्रत्यक्षाप्रत्यक्षाणां न हि नियमोऽस्ति – एकः प्रत्यक्ष इति द्वितीयेनापि प्रत्यक्षेण

---

१ **प्रवृत्तिः** प्र० ॥ २ **एवमेव** भा० ॥ ३ °**नासमन्वय**° य० । °**नामन्वय**° भा० ॥ ४ °**विवक्षया** प्र० । 'हेतोः' इति पञ्चम्यन्तनिर्देशाद् '°विवक्षायाः' इति पाठो युक्तः प्रतीयते, तुलना पृ० ६९२ पं० २२ ॥ ५ **साधर्म्यत्वेन** प्र० ॥ ६ तुलना पृ० ६९० पं० २७ पृ० ६७८ पं० १७ ॥ ७ **लिंगित्वं** प्र० ॥ ८ °**शंकायांति लिंगैक**° भा० । °**शंकायां लिंगैक**° य० । (°शङ्का आयाति । लिङ्गैक° ?) (°शङ्का । लिङ्गिलिङ्गैक्य° ?) ॥ ९ °**शब्दादेर्लिंगत्वाद्** य० ॥ १० °**च्चाल्लिङ्ग**° भा० । (°चालिङ्गैकदोषत्वाद्वा ?) । '°**च्च लिङ्गैकदेशत्वाद्वा**' इत्यपि पाठोऽत्र चिन्त्यः ॥ ११ **धर्म्यैस्येव** भा० । **धर्मस्येव** य० ॥ १२ **अन्यालिंगित्वा**° प्र० ॥ १३ **प्रत्यक्षतर**° प्र० ॥

**श्वादिसम्बन्धिनामेकः प्रत्यक्ष इति द्वितीयेनापि प्रत्यक्षेण भवितव्यम् । तथा संयोगित्वसाध्यसाधकत्व ······ यथैकः संयोगी तथा द्वितीयः ।**

**अत एव चैवं वक्तुमयुक्तम्**—यथाहि सत्यपि द्विगतत्वे सम्बन्धस्य न कदाचिदाधार आधेयधर्मा भवति नाप्याधेय आधारधर्मा तथा न कदाचिल्लिङ्गं लिङ्गि भवति लिङ्गि वा लिङ्गम् । संयोगी तु यथैकस्तथा द्वितीय इति तद्वदिह न भवति [ प्र० समु० वृ० २।१९३ ] **इति ।**

**तन्न घटते । ननु तद्वदेवेह । संयोगिनोरपि न यथैकस्य संयोगस्तथा द्वितीयस्य, संयोगित्वात्, स्थाण्वादिसंयोगवत् ।**

**यत्तूक्तम्**—[2]इदं पुनर्वक्तव्यम् - केन प्रकारेण सम्बन्धादेकस्मात् प्रत्यक्षादिति । यदि स्वत्वादिना [1]भवितव्यं चेति । **तथा संयोगित्वसाध्यसाधकत्वे**त्यादि गतार्थे यथासङ्ख्यं निदर्शने यावद् **यथैकः संयोगी तथा द्वितीय** इति, **'न हि'** इति वर्तते, उक्तादेव न्यायादयुक्तमेवं भवितुम् ।

**अत एव चैवं वक्तुमयुक्तं** यथा त्वया यत एवं विस्रब्धमुच्यते गुणदोषविचारनिरपेक्षेण निःशङ्केन । कतम[द्]युक्तमिति चेत्, इदं तद् दर्श्यतेऽस्माभिः—**यथा हि सत्यपि द्विगतत्व** इत्यादि ४४५-२
यावत् **तद्वदिह न भवती**ति संयोगिनोरतुल्य आधाराधेयोरिव न भवतीति ।

**तन्न घटत** इति । तत्र वयं तन्न घटत इति ब्रूमः । तद्यथा—**ननु तद्वदेवेह** आधाराधेयवदेव, **संयोगिनोरपि** लिङ्गलिङ्गिनोर्धूमाग्न्योर्न **यथैकस्य** प्रत्यक्षस्य **संयोगस्तथा द्वितीयस्या**प्रत्यक्षस्येति पक्षः, **संयोगित्वा**दिति हेतुः । **स्थाण्वादिसंयोगिव**दिति दृष्टान्तः, यथा हि स्थाणुश्येनयोः संयोगिनोः स्थाणोर-कर्मणः श्येनस्य सकर्मणश्च संयोगः सकर्माकर्मकत्वाभ्यामतुल्यः तथा मल्ल-द्व्यङ्गुलाकाशादिसंयोग-संयोगिनां तथा चैत्राश्वादीनामप्यत्यन्तप्रियवाहनादित्वाद्युपलक्षितत्वे प्रत्यक्षाप्रत्यक्षादित्वैनैव विशेष इति ।

**यत्रूणा(यत्तूक्त)**मित्यादि सम्बन्धवादिनमेव प्रति आन्यापोहिकेन पर्यनुयुज्य यदुक्तं दोषजातम्—

---

१ दृश्यतां पृ० ६७९ पं० १-३ ॥ २ "**स्वार्थालोचनमात्रत्वादव्युत्पन्नस्य तद्गतेः** । [ प्र० समु० २।३७ ], ········इदं पुनर्वक्तव्यम्—केन प्रकारेण सम्बन्धादेकस्मात् प्रत्यक्षादिति । यदि स्वत्वादिना ततः स्वामिसम्बन्धित्वात् स्वस्य स्वाम्यायत्तत्वादुत्तरकालं स्मृतिरनर्थिका । अथान्यथा, तन्नोक्तम् । लिङ्गग्रहणे तुल्यमिति चेत्, न, तस्य सम्बन्धित्वेनाग्रहणात् । अनुमेयस्थं लिङ्गं धूमादित्वेन पूर्वं गृह्यते पश्चात् तस्याग्न्यादिभिरविनाभावित्वं स्मर्यते । स्वस्वाम्यादिसम्बन्धात् [ एकस्मात् PSV[1] ] शेषसिद्धिरनुमानमिति यदुक्तं तदयुक्तम् । कस्मात् ? **अव्युत्पन्नस्य तद्गतेः** । दृष्टः स्वस्वाम्याद्यनभिज्ञानामप्यविनाभावित्वमात्रोपलब्धेर्निश्चयः । न चागृहीतः सम्बन्धोऽनुमानस्य कारणम्, ज्ञानकारणत्वेन तस्य ज्ञापकत्वात् । न चावश्यं सर्वत्र स्वस्वाम्यादीनामव्यभिचारः । तस्मात् सम्बन्धादनुमानं न भवति । उपलब्धसम्बन्धस्य न पुनरव्यभिचारापेक्षानुमितिर्युक्ता तस्यैवाभिव्यञ्जकत्वापत्तेः । अत्र चाग्नितोऽपि धूमानुमितिप्रसङ्गः, सम्बन्धाविशेषात्, अविशिष्टो ह्यग्निधूमयोर्निमित्तनैमित्तिकसम्बन्धः । यस्य त्वविनाभावित्वं सम्बन्धोऽभिमतस्तस्यायमदोषः ।" इति **प्रमाणसमुच्चयवृत्तौ** द्वितीये स्वार्थानुमानपरिच्छेदे PSV[1] c. ed. D. ed. पृ० ३६, N. ed. पृ० ३९ B–४० A । PSV[2] N. ed. पृ० १२१ B, P. ed. पृ० ११९ B–१२० A । अस्य **विशालामलवती** व्याख्या–"**इदं पुनर्वक्तव्य**मित्यादि । स्वादिसम्बन्धिनः स्वत्वादिरूपेणैव आहोस्विद् रूपान्तरेण ग्रहणं स्यात् ? यदि स्वत्वादिरूपेण 'स्वम्' इत्येवं गृह्यते तर्हि स्वामिसम्बन्धित्वात् स्वस्य स्वाम्यभावे स्वत्वस्यानुपपत्तेः स्वामिनिश्चयापेक्षत्वात् लिङ्गदर्शनात् पूर्वमेव स्वामिप्रतिपत्त्या भवितव्यम्, अन्यथा 'इदमस्य स्वम्' इत्येवं ग्रहणं न सम्भवति । ततश्चोत्तरकालं सम्बन्धस्मृतिरनर्थिका स्यात्, स्वामिनः प्रागेव सिद्धत्वात् शेषानुपपत्तेः । शेषेण सिद्धेश्चानुमानत्वस्येष्टत्वात् । **अथान्यथा** प्रकारान्तरेण ग्रहणमिष्यते **तन्नोक्त**मिति लक्षणस्यापरिपूर्णत्वम् । **लिङ्गग्रहणे तुल्य**मिति यद्यविनाभावित्वेन लिङ्गं गृह्यते अविनाभावित्वमपि प्रतियोग्यन्तरापेक्षमेवेति लिङ्गग्रहणात् पूर्वमेव साध्यप्रतिपत्त्या भवितव्यम् । तथा च साध्ये

ततः स्वामिसम्बन्धित्वात् स्वस्य स्वाम्यायत्तत्वादुत्तरकालं स्मृतिरनर्थिका । अथान्यथा, तन्नोक्तम् । [प्र० समु० वृ० २।३७] इति ।

**अत्र ब्रूमः—न किञ्चिदत्र नोक्तम् । तत्सम्बन्धिप्रत्यक्षात् तथैवानुमानाव-**

---

यदि स्वस्वामिभावेन [1]प्रत्यक्षः सम्बन्ध्येकस्ततो द्वितीयस्य स्वस्य स्वामिनो वा तेन सहैव गतत्वा[2]दन्योन्या-
पेक्षत्वाच्च सम्बन्धस्य शेषसिद्ध्यर्थं स्मृत्यानर्थक्यम् । दृश्यते च स्मृतिबलेन शेषसिद्धिः । तस्मात् स्वत्वादि-
प्रत्यक्षत्वाद[3]युक्तमुक्तम् । **अथान्यथा,** अथ मा भूदेष दोष इति स्वस्वामित्वादिभ्योऽन्येन केनचित् प्रकारेण
प्रत्यक्षः सम्बन्ध्येकः [4]ततस्तत्सम्बन्धस्मरणादनुमानमिति मन्येथाः **तन्न** भवति तस्य प्रकारस्या**नुक्तत्वात्**
**'स्वस्वाम्यादिभावेन सम्बन्धात्' इति वचनात्** स्व-स्वामिभावेन वा प्रकृति-विकारभावेन वा कार्य-
४४६-१ कारणभावेन वा निमित्त-नैमित्तिकभावेन वा मात्रा-मात्रिकभावेन वा [ सहचरिभावेन वा ] वध्य-घातक-
भावेन वा कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्षो [5]भवति इति तेभ्योऽतिरिक्तस्यावचनादेतेषामेव वचनादिति ।

एतस्मिन् परोक्ते दोषजाते परिहारं ब्रूमः-**न किञ्चि[6]दत्र नोक्तम् ।** वक्तव्यमशेषमुक्तमित्यभिप्रायः ।

---

प्रतियोगिनि सिद्धे सम्बन्धस्मृतेरानर्थक्यम् । अथान्यथा, तन्नोक्तमिति तुल्यम् । **न, तस्ये**त्यादि । **अनुमेयस्थ**मिति । धर्मिणि धूमादेः सत्त्वमात्रं गृह्यते, न सम्बन्धित्वमिति । कदा तर्हि तद् गृह्यत इत्याह-**पश्चा**दित्यादि । **अव्युत्पन्नस्य तद्गते**रिति स्वस्वामिसम्बन्धाद्यनभिज्ञस्यापि शेषप्रतिपत्तेरित्यर्थः । कथं पुनस्तद्गतिरित्याह-**दृष्ट** इत्यादि । कार्यकारणभावसम्बन्धे हि यथा कार्यकारणभावसम्बन्धः शास्त्रे विवेचितः तथैवाप्रतीतत्वमत्र विवक्षितम्, न सर्वथेति वेद्यम् । शास्त्रे ह्येकस्यैव भावस्य स्वरूपात्यागात् परिणामेन कार्यकारणभावो व्यवस्थाप्यते । य एवं कार्यकारणभावसम्बन्धं न प्रतिपादयन्ति तेऽप्यन्यथा तं प्रतिपद्य अविनाभावित्वमात्रोपलब्धेरनुमेयं निश्चिन्वन्ति । शास्त्रदृष्टः कार्यकारणभावोऽनुपपन्न एव । यस्मात् कार्यकारणयोरेकत्वे इदं कार्यमिदं कारणमित्येतदेव न स्यात् । अथ तयोर्येनैवं स्वभावातिशयः कश्चिदस्ति, भेदप्रसङ्गः । सत्त्वादिष्वपि स्वभावभेद एव भिन्नप्रकारान्तरकारणम् । ननु कार्यकारणभावत्वे सत्यपि न भेदः, त्रैगुण्यजात्यभेदादेकत्वमिति चेत्; न, कार्यकारणाभ्यां भिन्नस्य त्रैगुण्यस्यानुपलक्षणात् । नित्यस्य क्रमेण युगपद्वा परिणामो न सम्भवति । ततस्तत्कारणवत्कार्यकारणव्यवस्था कुत इत्यलं प्रसङ्गेन । स्यादेतत्-सोऽगृहीत एव तदनुमानस्य कारणमित्याह-**ने**त्यादि सुगमम् । **नावश्य**मित्यादि । ननु स्वस्वरूपसिद्धिः स्वाम्यपेक्षैव, तद्व्यभिचारः कुत इति चेत्, अयमाशयः-अनुमानकाल एव स्वत्वेन गृहीतं लिङ्गं प्रतियोगिनं प्रतिपादयति, आहोस्वित् सम्बन्धग्रहणकाले तथा परिच्छिन्नमनुमानकाले चान्यथोपलभ्यमानमिति । यद्यनुमानकाले 'इदमस्य स्वम्' इत्येवं निश्चितं गमकमिष्यते, अत्रोक्तो दोषः-स्वामिसम्बन्धित्वात् स्वत्वस्य [पृ० ६८३ पं० ३१] इत्यादिना । तस्माद् द्वितीयं दर्शनमभ्युपगन्तव्यम्, ततश्च व्यभिचारः, स्वस्वामिनोः परम्परया व्यतिरेकभावसम्भवात् तथाऽनुमातुं न शक्यते-अत्रात्मना तत् पूर्वं स्वत्वेन गृहीतं तस्माद् यत्रेदमस्ति तत्रास्य स्वामी नियमेन भवितुमर्हतीति । भूपतेः सम्पत्त्याद्यभावेऽपि केवलस्य छत्रादेरधिपत्यभावे च दर्शनसम्भवात् । एवमन्यत्रापि यथासम्भवं व्यभिचारः कल्पनीयः । स्यादेतत्-स्वस्वामिभावादिना सर्वः सम्बन्धो न गमकः, किं तर्हि ? यत्राव्यभिचार इत्याह-**उपलब्धसम्बन्धस्य ने**त्यादि । यदि यथोक्तसम्बन्धग्रहणेऽपि पुनर्लिङ्गस्य व्यभिचारित्वमव्यभिचारित्वं चापेक्षते ततोऽविनाभावित्वमेवानुमानस्य कारणं भवेत्, न स्वस्वाम्यादिसम्बन्धाः । अविनाभावस्यानुमानकारणत्वे स्यादेतत्, स यथोक्तसम्बन्धे सति भवति, ततो निर्देश इति चेत्, तदयुक्तम्, तस्मिन् सत्यपि तदभावात् **सम्बन्धस्याविशिष्टत्वा**दिति निमित्तनैमित्तिकसम्बन्धो द्विष्ठ इति स यथैकत्र तथा द्वितीयेऽपीति उभयत्र गमकभावः स्यात् ।"-VT. P. ed. पृ० १३६ A—१३८ A ॥ ३ **'भवितव्यमेवेति'** इति **'भवितव्यमिति'** इति वा पाठः सम्यक् प्रतीयते ॥ ४ **विश्रब्ध**° य० ॥ ५ **घटवदिति** य० ॥ ६ °**स्य प्रत्यक्षस्येविवक्षः** प्र० ॥ ७ °**दिसंयोगिसंयोगिनां** भा० । °**दिसंयोगिनां** इत्यपि पाठोऽत्र भवेत् ॥ ८ **पर्यनुयुज्यता यदुक्तं** भा० ॥ ९ **दोषयुक्तम्** य० ॥

१ **प्रत्यक्षतः** य० ॥ २ **दन्योपेक्ष**° य० । दृश्यतां पृ० ६८५ पं० २६ ॥ ३ °**दयुक्तम् । अथा**° भा० ॥ ४ **ततस्तंबंध**° भा० । **तत् संबंध**° य० । **ततः सम्बन्ध**° इति **तत्सम्बन्ध**° इति वा पाठोऽप्यत्र समीचीन एव ॥ ५ **वार्षगणतन्त्रभाष्ये**ऽभिहितमिदम् । दृश्यतां पृ० ६८५ पं० ३, २०, टि० १, पृ० २४० पं० १२ ॥ ६ °**दत्त** प्र० ॥

**तारणात् । द्वयोस्तु सम्बन्धिनोरुपलब्धे सम्बन्धेऽन्यतरप्रत्यक्षत्वोत्तरकालमुपलब्धचरसम्बन्धानुसारिणी स्मृतिः किमित्यनर्थिका स्यात्, अग्न्यपेक्षधूमवत् ?**

**एवं च कृत्वोक्तम्**—कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्षो भवति । तस्मादिदानीमिन्द्रियप्रत्यक्षादर्थात् पूर्वं समुदाये कृतसम्बन्धमतिरविशिष्टस्यार्थस्यास्तित्वं प्रतिपद्यते, यथा पूर्वं धूमाग्न्योः सम्बन्धं दृष्ट्वा धूमदर्शनादग्नेरस्तित्वं प्रतिपद्यते [[1]        ] **इति ।**

**यत्तु तेन प्रत्युच्यते**—लिङ्गग्रहणे तुल्यमिति चेत् [[2] प्र० समु० वृ० २।३७ ], **तत् तथैव । अहमप्येवं ब्रुवे—लिङ्गिसम्बन्धित्वाल्लिङ्गस्य [ लिङ्ग्यपेक्षमेव लिङ्गत्वमिति यदि लिङ्गं गृहीतं तेन सहैव ] लिङ्गी गृहीतः । अथान्यथा, तन्नोक्तम् ।**

---

यस्मादुक्तभेदात् सम्बन्धादनुमानम्, तच्च तत्सम्बन्धिप्रत्यक्षात् [3]ऐकस्मात् प्रत्यक्षात् [        ] इति वचनात् तेनैव प्रकारेणानुमानावतारणात् । तद्व्याचष्टे—**द्वयोस्तु सम्बन्धिनो**रित्यादि यावदग्न्यपेक्षधूमवत् । यथा धूमः प्रत्यक्ष एको बहुल-[4]वर्तुलोर्द्ध-पाण्डुत्वादिविशेषणाग्न्यविनाभाविरूपेण विशिष्टः प्रत्यासन्ने देशेऽग्निं गमयति विशेषाणामविनाभाविनां गमकत्वादश्वस्याभरण-मर्दनप्रियत्वादिविशेषाश्चैत्राविनाभाविनश्चैत्रं सम्बन्धादेव गमयन्ति तथा चैत्रस्य वा विशेषा आरोहक-पोषक-तद्गुणरक्तत्वादयोऽश्वाविनाभाविनोऽश्वं गमयन्त्येवेत्युपलब्धे [5]सम्बन्धेऽन्यतरप्रत्यक्षत्वोत्तरकालं 'यत्रायं प्रत्यक्षोऽश्वश्चैत्रो वा तत्रेतरोऽपि' इति या उपलब्धचरसम्बन्धानुसारिणी स्मृतिः सा किमित्यनर्थिका स्यात् ? नैवानर्थिकेत्यर्थः । किमिव ? **अग्न्यपेक्षधूमवत्** । यथाग्निजन्यात्मलाभो धूमः प्रोक्तविशेषयुक्तोऽग्नेः सम्बन्धस्मरणात् प्रत्यक्षोऽप्रत्यक्षस्य सम्बन्धिनोऽनु[6]मानायालम्, अग्निर्वा प्रत्यक्षोऽप्रत्यक्षस्य तत्परि[7]णामत्वाद् भावि-भूतदेशकालसम्बन्धी सम्बन्धिन एवैकस्य प्रत्यक्षत्वात् [8]**सम्बन्धा(द्धा)देकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानम्**[9] [        ] इति वा पाठात् सम्बन्धिन एव प्रत्यक्षस्य [10]समानाधिकरणोक्तेः ।

**एवं च कृत्वोक्तमि**त्यस्यैव लक्षणस्य **भाष्यं** ज्ञापकमाह **कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्ष** इत्यादि सामान्यवाचिना किंवृत्ते[न] याव**दग्नेरस्तित्वं प्रतिपद्यत** इति । [11]**अवशिष्टस्याविशिष्टस्ये**ति वा ४४६-२ पाठः, [12]**अवशिष्टस्य** अप्रत्यक्षस्य, **अविशिष्टस्य** दर्शनकाल[13]तुल्यस्य तद्देशवर्तिनो वेति । शेषो गतार्थो ग्रन्थः ।

**यत्तु तेने**त्यादि । '[14]स्वामिसम्बन्धित्वात् स्वस्य स्वाम्यपेक्षमेव स्वत्वमित्युत्तरकालं स्मृतेरानर्थक्यं प्राप्तम्' इत्यत्र **तेन** आन्यापोहिकेन **प्रत्युच्यते** परमतमाशङ्क्य – **लिङ्ग[15]ग्रहणे तुल्यमिति चेत्** । स्यान्मतम्—'स्मृतेरानर्थक्यं स्व-स्वाम्यादिसम्बन्धिप्रत्यक्षत्वात्' इत्येतल्लिङ्ग-लिङ्गिनोः सम्बन्धाविशेषात् समानं दोषजातमिति । **तत् तथैव,** यद्येष दोषः स्यात् स्वस्वाम्यादित्वे लिङ्गेऽपि स्यादेवायं लिङ्गलिङ्गिनोरन्योन्यापेक्ष[16]त्वात् । अथ तत्र नेष्यते, स्वस्वाम्यादिष्वपि मा भूदिति सुष्ठुच्यते—**अहमप्येवं [17]ब्रुवे,** कस्मात् ? **लिङ्गि-**

---

१ **वार्षगणतन्त्रभाष्ये**ऽभिहितमेतदिति प्रतीयते । दृश्यतां पृ० २४० पं० १२ टिप्पृ० ७८ पं० १९ । तुलना "'कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्षो भवति' इति **भाष्य**वचनात् ।"–**विशाला०** D. ed. पृ० ११९ B ॥ २ दृश्यतां पृ० ६८३ टि० २ ॥ ३ दृश्यतां पृ० २४० पं० ११ ॥ ४ °**वर्तलोद्रपाण्डु**° भा० । °**वर्तलोच्चपाण्डु**° य० ॥ ५ **संबंधिन्यतर**° प्र० । '**सम्बन्धिनीतर**° इत्यपि पाठोऽत्र स्यात् ॥ ६ °**मानावालामग्निर्वा** प्र० ॥ ७ °**णामद्** य० ॥ ८ **संबंधादेक**° प्र० ॥ ९ दृश्यतां पृ० २४० पं० ११ ॥ १० **समाधिक**° भा० ॥ ११ **अविशिष्टस्याविशिष्टस्येति** भा० । **अविशिष्टस्याविशिष्टश्चेति** य० ॥ १२ **अविशिष्टस्य** प्र० ॥ १३ °**तुल्यस्यातद्देश**° य० ॥ १४ तुलना पृ० ६८४ पं० १ ॥ १५ °**ग्रहे तुल्य**° य० ॥ १६ °**त्वादत्र तत्र** प्र० ॥ १७ **ब्रूते** प्र० ॥

**यत्तूच्यते—न**[1], तस्य सम्बन्धित्वेनाग्रहणात् । लिङ्गमनुमेयस्थं पूर्वं धूमादित्वेन गृह्यते पश्चात्तस्याग्न्यादिभिरविनाभावित्वं स्मर्यते [ प्र० समु० वृ० २।३७ ] **इति । तदिहापि तुल्यम्, अनुमेयस्थं [ स्वं पूर्वं गृह्यते पश्चात् तत्रस्थश्चैत्रोऽविनाभावीति स्मर्यते ] न तद्देशसम्बन्धीति, देशादिस्थानग्निधूमवत् ।**

**यत्तूक्तम्**—'स्वस्वाम्यादिसम्बन्धाच्छेषसिद्धिरनुमानम्' इत्ययुक्तमिदम्, कस्मात्? अव्युत्पन्नस्य तद्गतेः । दृष्टः स्वस्वाम्यादिसम्बन्धानभिज्ञानामपि अविनाभावित्वमात्रोपलब्धेर्निश्चयः, न चागृहीतः सम्बन्धोऽनुमानस्य कारणम्, ज्ञानकारणत्वेन तस्य ज्ञापकत्वात् [ प्र० समु० वृ० २।३७ ] **इति ।**

**एतदयुक्तम्, अविनाभावित्वस्य सहचरिभावसम्बन्धत्वात् तस्मादपि यो निश्चयः सोऽपि स्वाम्याद्यर्थव्युत्पन्नानामेव भवति तदादित्वात् सहचरिभावस्य ।**

---

**सम्बधित्वाल्लिङ्गस्ये**त्यादि तत्तुल्यत्वप्रदर्शनं गतार्थं यावद् **लिङ्गी गृहीत** इति । [2]**अथान्यथा तन्नोक्त**मिति, यथान्यांस्त्वमुद्दूषयसि स्वाम्यादित्वेनाग्रहणेऽन्यथा ग्रहणं चेत् तन्नोक्तमिति तथा वयमपि त्वामुद्दूषयामः—अन्यथा लिङ्गे ग्रहणं स्वस्वाम्यादिषु अन्यथेति चेन्मन्यसे तन्नोक्तमिति ।

अत्र **यत्तूच्यते** त्वया—मा मंस्था लिङ्गग्रहणे[3] तुल्यमिति, लिङ्गे त्वस्ति विशेषः—**न, तस्य सम्बन्धि[त्वे]नाग्रहणात् ।** न हि लिङ्गं सम्बन्धित्वमात्रेण गृह्यते, किं तर्हि? **अनुमेयदेशस्थं धूमादित्वेन पूर्वं गृह्यते, पश्चात् तस्याग्न्यादिभिरविनाभावित्वं स्मर्यते,** आदिग्रहणाच्छब्दस्य कृतकादित्वेन प्राग् ग्रहणं पश्चादनित्यत्वाविनाभावित्वेन स्मर्यत इति सर्वत्र व्यापीति । अत्रोच्यते—**तदिहापि तुल्य**मित्यादि ।
४४७-१ तत्तुल्यत्वभावनम्[4]—**अनुमेयस्थ**मित्यादि यावन्न **तद्देशसम्बन्धी**ति गतार्थम् । देशादिस्थानग्निधूमवदिति दृष्टान्तः, यथाऽग्निरभवन् धूमो देशादिस्थः प्राग् गृह्यते प्रत्यक्षोऽप्रत्यक्षाग्नेरन्यत्वात्[5] ततः पश्चात् 'अग्निरिह' इत्यनुस्मर्यते तथाश्वः स्वं चैत्रादन्यो गृह्यते ग्रामादिस्थः ततः पश्चात् तत्रस्थश्चैत्रोऽविनाभावीति स्मर्यते 'इहाग्निः' इति धूमसम्बन्ध्यग्निस्मरणवदिति तुल्यमिति ।

**यत्तूक्त**मित्यादि । **'स्वस्वाम्यादिसम्बन्धेन सम्बन्धाच्छेषसिद्धिरनुमानम्'** इत्यस्य लक्षणस्य दोषस्तेनोक्तः, अत्र ब्रूमः—**अयुक्तमिदम् । कस्मात्? अव्युत्पन्नस्य तद्गते**रित्यादि तन्मतप्रत्युच्चारणं याव**ज्ज्ञापकत्वा**दिति, स्वस्वाम्यादिसम्बन्धानभिज्ञा अपि धूमादग्निमविनाभावसम्बन्धाद् निश्चिन्वन्तो दृश्यन्ते, स च मा भूदगृहीतसम्बन्धत्वान्निश्चयः[6], ज्ञानकारणत्वं हि ज्ञापकस्य हेतोर्लिङ्गादेर्गृहीतस्वरूपस्य नोत्पादकबीजादिवदिति[7] ।

**एतदयुक्तम् ।** कस्मात्? **अविनाभावित्वस्य सहचरिभावसम्बन्धत्वात्**[8], न विना भवति सह भवति सह चरतीत्येकोऽर्थः[9] । तस्मादपि सहचरिभावसम्बन्धाद्[10] यो निश्चयः सोऽपि स्वाम्याद्यर्थव्युत्पन्नानामेव भवति, नाव्युत्पन्नानाम् । कस्मात्? **तदादित्वात्** स्वस्वाम्यादित्वात्[11] **सहचरिभावस्य,** सप्तानां सम्बन्धाना-

---

१ दृश्यतां पृ० ६८३ टि० २ ॥ २ तुलना-पृ० ६८४ पं० १ ॥ ३ ग्रहणतुल्य° प्र० ॥ ४ °भावम् य० ॥ ५ प्रत्यक्षे प्रत्यक्षाग्ने° प्र० ॥ ६ °संबंधात्वान्नि° भा० ॥ ७ °जादिति भा० ॥ ८ सहचारि° प्र० । दृश्यतां पृ० ६९६ पं० १६ ॥ ९ चरतीत्यर्थः य० ॥ १० °चरितभावसंबंधत्वाद् य० ॥ ११ स्वाम्यादित्वात् सहचरितभावस्य य० ॥

**अविनाभावगम्यातिरिक्तार्थविषयत्वेन तु सहचरिभावादृतेऽपि स्वस्वाम्यादिसम्बन्धव्युत्पन्नबुद्धेरेवानुमानं दृश्यते । तद्यथा—काकभवन-तत्स्वीकृततत्प्रसवकाल-तत्कृतनीडप्रसवा-ऽण्डभेद-विवृद्धि-पोषण-काकशावकसहचरण-काकीपृष्ठगमनानि न कारणानि कोकिलत्वज्ञानस्य व्यापित्वाविनाभाविरूपोपेततायामपि स्वस्वामिभावप्रत्यवगमनादारात् । पश्चात् तत्प्रतिपत्तिः स्वस्वामिसम्बन्धेन भवति 'कोकिलशावकोऽयम्, तत्स्वभाषासमन्वितत्वात्, इतरकोकिलवत् ।'**

**एवं स्वस्वाम्यादिसम्बन्धा अनुमापकाः, अनुमेयव्यक्तिकाले तथोपलभ्यमानत्वात्, तत्प्रसिद्धलिङ्गवत् ।**

.........

मन्यतमत्वात् तस्यापि । **स च** सहचरिभावोऽविनाभावो **गृह्यमाण एवानु[1]मानकारणं** [2]ज्ञातज्ञानोत्पत्तिहेतुत्वाज्ज्ञापकस्य । तस्मादविनाभावसम्बन्धज्ञानं स्वस्वाम्याद्यन्तःपाति व्युत्पन्नानामेव नाव्युत्पन्नानामिति ।

अथवा विनाप्यविनाभावित्वेन स्व[3]स्वाम्यादिव्युत्पत्तेरनुमेत्यत आह—**अविनाभावगम्यातिरिक्ता- ४४७-२
र्थविषयत्वेन** त्वित्यादि याव**दितरकोकिलव**दिति साधनेनोपसंहारोऽस्यार्थस्य ।

व्यापको यः स एवांशो ग्राह्यो व्याप्यस्तु सूचकः ।
अनेकधर्मणोर्नान्यो ग्राह्य-ग्राहकधर्मणोः ॥ [ ]

इत्येतल्लक्षणवैपरीत्येन सहचरिभावादृतेऽपि स्वस्वाम्यादिसम्बन्धव्युत्पन्नबुद्धेरेवानुमानं दृश्यते, **तद्यथा—काकभवने**त्यादि समासदण्डको व्यापक-व्याप्यत्वाभ्यां सहचरिभावप्रदर्शने यावद् **व्यापित्वाविनाभाविरूपोपेततायामपी**ति, [4]काकाज्जन्म व्यापीति तत्स्वीकृतस्तत्प्रसवकालः, तत्कृतनीडप्र[5]सवः, अण्डभेदः, विवृद्धिः, काकेन काक्या च पोषणं वात्सल्येन, तस्य द्वितीयेन काकशावकेन सहचरणम्, काक्याः पृष्ठतो गमनमित्येतानि पूर्वपूर्वकाणि व्यापकानि साध्यानि उत्तरोत्तराणि व्याप्यानि साधकाभिमतानि अविनाभावसम्बन्धीनि धर्मान्तराणि सन्त्यपि न कारणानि तानि कोकिलत्वज्ञानस्य । यावदा कुतः ? **स्वस्वामिभा[6]वप्रत्यवगमनादारात्**, यावत् स्वस्वामिसम्बन्धं नावैति तावत् कोकिलत्वाप्रतिपत्तेः पश्चात् तत्प्रतिपत्तिः स्वस्वामिसम्बन्धेन भवति, तत उत्तरकालं 'कोकिलशावकोऽयं न काकशावकः' इति परित्यज्याविनाभाव्यभिमतांस्तांस्तान् धर्मान् व्यापकान् व्याप्यांश्च तथा लोके प्रतिपत्तारो वक्तारश्च भवन्ति, **'कोकिलशावकोऽयम्'** इत्यनुमिमते च **तत्स्वभाषासमन्वितत्वात्** विशिष्टमाधुर्योपेतस्वरत्वात्, **इतरकोकिलव**दिति । **आ[7]दि**ग्रहणात् स्वस्वामिसम्बन्धवत् प्रकृतिविकारादिशेषसम्बन्धा अपि व्युत्पन्नानामेवानुमानकारणम् ।

४४८-१
अतोऽत्र साधनं संहृतार्थमुच्यते—**एवं स्वस्वाम्यादिसम्बन्धा अनुमापका** इत्थमुक्तन्यायेन । कस्मात् ? **अनुमेयव्यक्तिकाले तथोपलभ्यमानत्वात्**, अनुमेयस्य अग्नि-कोकिला-ऽनित्यत्वादेरर्थस्य व्यक्तिकाले तेनैव स्वस्वाम्यादिप्रकारेणोपलभ्यमानत्वात् । किमिव ? **तत्प्रसिद्धलिङ्गवत्**, तेन तेन प्रकारेण प्रसिद्धं धूमादिलिङ्गं तस्य सम्बन्धिनोऽनुमापकमग्न्यादेः स्वस्वाम्यादिप्रकारेणैव सम्बन्धात्, यथा कोकिलशावकस्तज्जातीयानुकारिस्वरेणैवेति ।

---

१ °नुमाकारण° य० ॥ २ ज्ञातं ज्ञानोत्प° य० । ३ °स्वासित्वादि° य० ॥ ४ काकाजन्मध्यापीति प्र० । (काकजन्मव्यापीनि ?) ॥ ५ °प्रसवोर्णभेदः प्र० ॥ ६ °भावा प्रत्य° प्र० ॥ ७ पृ० ६८७ पं० १ ॥

**यदप्युक्तम्**—न[1] चावश्यं सर्वत्र स्वस्वाम्यादीनामव्यभिचारः । तस्मात् सम्बन्धादनुमानं न भवति। उपलब्धसम्बन्धस्य न पुनरव्यभिचारापेक्षानुमितिर्युक्ता, तस्यैवाभिव्यञ्जकत्वापत्तेः [ प्र० समु० वृ० २।३७ ] **इति, एतदपि न, शेषसिद्धिवचनेनाव्यभिचारिविधिवृत्तेरुपात्तत्वात्। इदं हि सर्वाभासव्युदासेन सम्बन्धानुमानविधानम् । प्रत्यक्षेतरसम्बन्ध्यनुमेयः प्रत्यक्षाद्यविरुद्धार्थः पक्षो धर्मधर्मिसमुदायाख्यो निर्दोष एवानेन शेषसिद्धिवचनेन गृहीतः । यथायोगं सम्बन्धादेकस्मात् प्रत्यक्षात् प्रत्यक्षवद्वा प्रसिद्धात् पक्षधर्मसम्बन्धाच्छेषेण शेषस्य सिद्धिरिति शेषसिद्धिवचनादेव विरुद्धासाधारणधर्मव्युदासः । सिद्धिवचनं साधारणानैकान्तिकवदसिद्धिर्मा भूदिति । असिद्धिर्व्यभिचारिधर्मता । तद्यथा—स्वाम्यसम्प्रदानचैत्रान्यथात्वम्……अतिप्रियसुतवत् ।**

---

किञ्चान्यत्–**यदप्युक्त**मित्यादि सम्बन्धवादिनो दोषवचनम् । **न चावश्य**मित्यादि प्रत्युच्चारणम् । एतदुक्तं भवति–स्वस्वाम्यादिसम्बन्धादनु[2]मानं न भवति, तदव्यभिचारार्थं विशेषाकाङ्क्षित्वात् उपलब्धेऽपि स्वे स्वामिनि वाश्वे चैत्रे वा स्वतन्त्रजीवदत्यन्ता[3]वियोगा आकाङ्क्ष्यन्ते । तेषामेवाव्यभिचारात् त एव हि अनुमापकाः स्युः, न स्वस्वाम्यादिसम्बन्धः सत्यपि तस्मिन्ननुमानाभावाद् व्यभिचारीति । एवं प्रत्युच्चार्य आचार्य उत्तरमाह–**एतदपि न, शेषसिद्धिवचनेनाव्यभि[4]चारिविधिवृत्तेरुपात्तत्वात्, सम्बन्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानम्** [ ] इत्यस्मिन् स्वार्थानुमानलक्षणे शेषसिद्धिवचनेन विधिवृत्तिरव्यभिचारिण्येवोपात्ता, तस्मादयमदोषः ।

तत् कथमिति भाव्यत इति चेत्, उच्यते–**इदं हि सर्वाभासव्युदासेने**त्यादि । पक्ष-हेतु-दृष्टान्ताभासाः सर्वे तेनैव सम्बन्धानुमानविधानेनापोद्यन्ते । प्रत्यक्षादितरः शेषः सम्बन्धी स्वादिना विशिष्यमाणो
४४८-२ देशादिः सम्बध्यतेऽनु[5]मेयोऽनुमानाभासभेदैः प्रत्यक्षादिविरोधैरविरुद्धार्थः पक्षो धर्मधर्मिसमुदायाख्य उत्तरत्रावय[व]विधाने परार्थानुमाने वीताख्ये 'साध्याभिधानम्' इति वक्ष्यमाणो निर्दोष एवानेन शेषसिद्धिवचनेन गृहीतः । यथायोगं स्व-स्वामि-निमित्त-नैमित्तिकादिषु तेन तेन सम्बन्धेन सम्बन्धात् प्रत्यक्षादिति प्रत्यक्षस्य धर्मादुपलब्धात् प्रसिद्धादिति यावत् । [6]तत्रैको यः प्रत्यक्षः स पक्षधर्मः, शेषोऽनुमेयः । कृतकत्वाद्यप्रत्यक्षत्वादव्यापीति चेत्, अत आह–**प्रत्यक्षवद्वा,** प्रत्यक्षवत् प्रत्यक्षः प्र[7]सिद्धः, तस्मात् प्रसिद्धत्वात्, सम्बन्धी पक्षधर्मोऽश्वः स्वम्, तस्य पक्षधर्मस्य सम्बन्धात् प्रागुपलब्धादनुस्मर्यमाणाच्छेषेण शेषस्य चैत्रस्य सिद्धिरिति शेषसिद्धिवचनादेव विरुद्धासाधारणधर्मव्युदासः 'यत्र यत्राश्वः स्वं तत्र तत्र देवदत्तः स्वामी' इत्यत्यन्तावियोगादिसम्बन्धान्वययुक्तत्वात् सपक्षावृत्तिः विपक्ष एव वा वृत्तिः कुतः ? 'शेषाय शेषे वा प्रत्यक्षादेकस्मात् सम्बन्धात्' इत्येतावता सिद्धे सिद्धिवचनं 'सिद्धिरेव नासिद्धिः' इत्यवधारणात् 'प्रमेयत्वाद् नित्यः' इति साधारणानैकान्तिकवदसिद्धिर्मा भूदिति । का पुनरसिद्धिः ? **व्यभिचारिधर्मता । तद्यथा–स्वाम्यसम्प्रदाने**त्यादि याव[8]**दतिप्रियसुतव**दिति । **चैत्रान्यथात्वं** मरणम् । शेषं गतार्थम् ।

---

१ तुलना–पृ० ६८३ टि० २ ॥ २ °**मानं भवति** प्र० ॥ ३ °**न्तावियोषा** प्र० ॥ ४ °**चारविधि**° प्र० ॥ ५ °**नुमेवोनुमा**° भा० । °**नुमेवानुमा** य० ॥ ६ °**तत्रैवकायः** प्र० ॥ ७ 'अथवा केचिदेवमाहुः—**एकस्मात् प्रत्यक्षा**दिति प्रत्यक्षशब्दोऽयं प्रसिद्धत्वस्योपलक्षणम् । प्रत्यक्षात् प्रसिद्धादित्यर्थः ततः प्रत्यक्षात् प्रत्यक्षकार्याच्चान्यस्यापि ज्ञानस्य विषये लिङ्गे प्रत्यक्षव्यपदेशो भवति ।"–**विशालामलवती** P. ed. पृ० १३५ B–१३६ A ॥ ८ °**दितिप्रि**° प्र० ॥

**इत्थं हि व्यभिचारिविशेषव्यावर्तनेनापि स एव सम्बन्धी गमकः सम्बन्ध्यन्तरस्य । न ते विशेषा गमकाः, तत्समर्थनार्थत्वात् । न हि वात्याप्रसङ्गव्यावर्तनेन धूमस्य व्यञ्जकत्वम्, बह्वेव ह्यवात्या घटपटादि; न हि तद्वदग्नेरगमको धूमः । न वाऽवात्येति व्यञ्जकमग्नेर्भवितुमर्हति घटपटाद्यधूमतायामसत्यामेव । धूमतैव हि सती वह्नितायाः व्यञ्जिका ।**

**तथा कृतकत्वस्य [ अनित्यत्वोपलब्धसम्बन्धस्य ] अनित्यत्वाव्यभिचारप्रदर्शनार्थं व्यतिरेक उच्यते । यद्युपलब्धसम्बन्धस्य पुनरव्यभिचारित्वापेक्षमनुमानं न स्यात् व्यतिरेकवचनं न स्यात् । नापि च तस्यैवाभिव्यञ्जकत्वमापद्यते । तथा च कृतकत्वस्यानित्यत्वोपलब्धसम्बन्धस्य पुनरव्यभिचारापेक्षानुमितिर्युक्ता, तस्यैवा-**

---

**इत्थं हि व्यभिचारिविशेषव्यावर्तनेनापि स एव सम्बन्धी** धूमादिरश्वादिर्वा **गमकः सम्बन्ध्यन्तरस्य** प्रत्यक्षोऽनुमेयस्य द्वितीयस्यैकः सम्बन्ध्यन्तरस्य सम्बन्धित्वात् । **न ते विशेषा** व्यावर्त्या विधेया वा **गमकाः तत्समर्थनार्थत्वात्**, यथा **न हि वात्याप्रसङ्गव्यावर्तनेन धूमस्य[1] व्यञ्जकत्वम्**, 'अधूमो वात्या, सा न भवत्ययं धूमः' इति वात्यायां निवर्तितायामग्नेर्न[2] गमको भवति धूमो यत्रादृष्टस्तद्व्य- ४४९-१
वच्छेदमात्रेण, यस्माद् वह्नेवावात्या[3] घट-पटादि, न हि तद्वदग्नेरगमको धूमः, न वाऽवात्येति व्यञ्जकं गमक**मग्नेर्भवितुमर्हति घटपटाद्यधूमतायामसत्यामेव**[4], किं तर्हि ? **धूमतैव हि सती वह्नितायाः** सम्बन्धिनी सम्बन्धिन्या[5] **व्यञ्जिके**ति । तस्माच्छेषसिद्धिवचनाद् निरस्तव्यभिचाराशङ्कं सम्बन्धानुमानमेव प्रत्यक्षैकत्वविशेषणाभ्यां निरस्तसर्वाभासम् ।

किञ्चान्यत्, त्वयापीष्यत एतत् प्रसिद्धसम्बन्ध्येवाप्रसिद्धसम्बन्धिनो गमक[6](कं य)दव्यभिचारस्वरूपावधारणार्थं व्यभिचारिविशेषव्यावृत्तिरुच्यत इत्यतस्तत्प्रदर्शनार्थमाह—**तथा कृतकत्वस्ये**त्यादि । 'अनित्यः शब्दः, कृतकत्वात्, यद् यत् कृतकं तत् तदनित्यम्' इति सम्बन्धविधिना प्रदर्श्य कृतकत्वस्यैवानित्यत्वाव्यभिचारप्रदर्शनार्थं यदनित्यं न भवति तत् कृतकमपि न भवति' इति व्यतिरेक उच्यते, यद्युपलब्धसम्बन्धस्य पुनरव्यभिचारित्वापेक्षमनुमानं न स्यात् व्यतिरेकवचनं पक्षधर्मसाध्यानुगतिसमर्थनार्थं[7] न स्यात्, तत्तु दृष्टम्, नापि च तस्यैव व्यतिरेकवचनस्याभिव्यञ्जकत्वमापद्यते । **तथा च** एवं च कृत्वास्मन्न्यायेन कृतकत्वस्यानित्यत्वोपलब्धसम्बन्धस्य व्यतिरेके पुनरव्यभिचारापेक्षाऽनुमितिर्युक्ता, न तु त्वन्मतेन । किं कारणम् ? **तस्यैवाभिव्यञ्जकत्वव्यक्तेः,** योऽसौ पुनरव्यभिचारः स तस्यैव पक्षधर्मस्याभिव्यञ्जकत्वमभिव्यनक्ति, न स्वयमेवानुकंपा[8](कम्पते) । **तथेहापीति** ४४९-२

---

१ **धूमस्याव्यञ्जकत्वम्** प्र० ॥ २ °**तायामग्नेर्नामको** भा० । °**तामग्नेर्नामको** य० ॥ ३ **वह्नेवावात्या**° य० । **बह्ववात्या**° भा० ॥ ४ विधिरूपा धूमतैव गमिका, न त्वधूमताया अभावः । न हि वात्यादिगता या अधूमता तदभाववत्त्वेऽपि घटपटादेरग्निगमकत्वं दृश्यते । तस्माद् धूमतैव गमिकेत्याशयः । यदि त्वयमाशयो न रोचते तदा 'न वाऽवात्येति व्यञ्जकं गमकमग्नेर्भवितुमर्हति घटपटादि धूमतायामसत्यामेव' इति पाठः कल्पनीयः ॥ ५ °**न्यां व्यञ्जकेति** भा० । °**न्यां व्यञ्जकतेति** य० ॥ ६ **गमकमुदव्यभि**° प्र० ॥ ७ °**नार्थना स्यात्** प्र० ॥ ८ ( स्वयमेवाभिव्यञ्जकः ? स्वयमेवाभिव्यनक्ति ? ) ॥

**भिव्यञ्जकत्वव्यक्तेः। तथेहापि, चैत्राश्वोदाहरणं स्वस्वामिसम्बन्धस्योपलक्षणार्थमग्निधूमानित्यकृतकत्वादिषु। सोऽत्र, तद्वत्सत्त्वात्, पूर्ववत्।**

**नन्वेवमविनाभावोपवर्णनमेवेदम्। एवमेवैतत्, आधाराधेयसंयोगिवद्वृत्त्यभेदात् त्वदुक्तस्य व्यावर्तितत्वादस्मदभिहितेस्तु पूर्वत्वात्। त्वया न ज्ञातमनुमानस्वरूपं सत् मया ज्ञातम्। यथा त्वमाह तथा सम्बन्धानुमानैकदेशस्य भाष्यमात्रमेवेदम्, तदनतिरिक्तार्थत्वात्, वृद्धिरादैजर्थव्याख्यानवत्। एवं च द्रव्यार्थासत्यो-**

---

तत्साधर्म्यं योजयति। **चैत्राश्वे**त्यादि, यच्चैत्राश्वोदाहरणमत्रानुमानलक्षणभाष्ये तत् स्वस्वामिसम्बन्धस्योपलक्षणार्थमग्निधूमानित्यकृतकत्वादिषु तुल्यन्यायत्वात्। **सोऽत्र** स इत्यप्रत्यक्षो[1]ऽग्निचैत्रानित्यत्वादिधर्मः 'अत्र' इति प्रदेशे प्रत्यक्षाद् धूमाश्वकृतकत्वादेः पक्षधर्मात् साध्यार्थः पक्षोऽवगम्यताम्। **तद्वत्सत्त्वा**दिति हेतुः, सोऽस्मिन् सम्बन्धी वह्निचैत्रशब्दादिरस्तीति तद्वान्[2] धूमाश्वकृतकत्वादिः, स एव धर्मः सन्[3] तस्य भावात् तद्वत्सत्त्वात्। यत्र यत्र तद्वत्सत्त्वं तत्र तत्र सोऽस्ति, **पूर्ववत्**, यथा पूर्वोत्तर[4]धूमादिरग्न्यादिना सम्बन्धात् तत्स्वामिक एव तथेहापी[5]त्येवमादीनामुपलक्षणार्थं चैत्राश्वोदाहरणमिति।

अत्राह—**नन्वेवमविनाभावोपवर्णनमेवेदम्**[6]। नन्वित्थमविनाभावसम्बन्धो मदिष्ट एव, अव्यभिचाराकाङ्क्षानुमानत्वादिति। अत्रोच्यते—वयमपि ब्रूमः—**एवमेवैतत्** अविनाभावसम्बन्धात् स्वस्वाम्यादिविकल्पादनुमानम्। कस्मात्? **आधाराधेयसंयोगिवद्वृत्त्यभेदात्**, आधाराधेयवद्वृत्तेः संयोगिवद्वृत्तेश्चाभेदात् यत्त्वयोक्तम्—आधाराधेयवद्वृत्तिस्तस्य संयोगिवन्न[7] तु [प्र० समु०] इति, तस्य व्यावर्तितत्वात्। किञ्चान्यत्, **अस्मदभिहितेस्तु पूर्वत्वात्**, दिन्न-वसुबन्ध्वादिभ्यो बुद्धाच्च पूर्वकालत्वात् कापिलस्य तत्रस्य आर्हतैकदेशनयमतानुहारित्वाच्च तदनुमानस्य तच्चास्मन्मतोपजीवनमेव। **त्वया न ज्ञातमनुमानस्वरूपं सत् मया ज्ञातमिति।**

तद्व्याख्या—**यथा त्व**मित्यादि। भाष्यमात्रमेवेदमिति पक्षः, सम्बन्धानुमानैकदेशस्यैवैतल्लक्षणस्य
४५०-१ भाष्यमात्रं *त्वत्प्रयासफलम्, **तदनतिरिक्तार्थत्वात्**, यद् यतोऽनतिरिक्तार्थव्याख्यानं तत् तदेकदेशस्यैव भाष्यमात्रम् यथा 'वृद्धिरितीयं संज्ञा भवति आदैचां वर्णानाम्, संज्ञाधिकारः संज्ञासम्प्रत्ययार्थः' इत्यादि **वृद्धिरादैच्** [पा० १।१।१] इत्यस्य, तथेदं त्वदीयमविनाभावसम्बन्धव्युत्पादनमस्मज्ज्ञातस्य सम्बन्धानुमानैकदेशस्य भाष्यमात्रम्, तदपि सर्वं न विदितमित्यभिप्रायः। कापिलमपि चास्मदुपज्ञमेव द्रव्यार्थविकल्पैकदेशत्वादिति चाभिप्रायः। अत आह—**एवं च द्रव्यार्थासत्योपाधिसत्यार्थव्याख्यानुज्ञा कृता त्वया** 'सामान्योपसर्जनो विशेषः शब्दार्थः' इति द्रव्यार्थस्याप्यनुज्ञानादभ्युपगतं भवति द्रव्यार्थवादिमतानुमान[9]लक्षणानुज्ञानात्। तस्यां[10] चासत्योपाधिसत्यार्थव्याख्यानुज्ञायां 'लिङ्गिनो[11] लिङ्गत्वं प्रसक्तम्' इत्यस्याभावः, न

---

१ इत्यत्रप्रत्यक्षो° प्र०। (इत्यत्राप्रत्यक्षो°)॥ २ तद्वानुमाश्व° प्र०॥ ३ स्वत्तस्य प्र०॥ ४ (पूर्वोऽत्र धूमादि° ?)॥ ५ तत्वेहा° प्र०॥ ६ °भावोपर्णन° प्र०॥ ७ °वन्निति भा०। °वन्निति य०। दृश्यतां पृ० ६७८ पं० ६॥ ८ * * एतच्चिह्नान्तर्गतः पाठो य० प्रतौ नास्ति॥ ९ °नुमानं लक्ष° य०॥ १० तस्या प्र०॥ ११ दृश्यतां पृ० ६८२ पं० १६॥

**पाधिसत्यार्थव्याख्यानुज्ञा कृता त्वया । तस्यां च नहि लिङ्गिनो लिङ्गत्वं प्रसञ्ज-यितुं शक्यम् ।**

**तथापि स्यात् विवक्षाभेदात् तथा तथा स्वस्वाम्यादिगम्यगमकत्वात् । तद्यथा देवदत्त यज्ञदत्तयोः संयुक्तयोरन्योन्यं लिङ्गत्वं लिङ्गित्वं च भवति तथा स्वस्वाम्या-दिषु । तथाहि राज्ञो लाजपेयातरणं तत्करणाज्ञया............ ।**

**न, संयोगित्व एकरूपत्वाद्** अ[1]ग्नितोऽपि धूमानुमितिप्रसङ्गः । **तत्काल एव च धूमोऽस्ति । न, असम्भवात् । प्रत्यक्षत्वाद्धूमोऽसाध्यः, साध्यस्त्वग्निरप्रत्यक्षत्वात् संयोग्येकरूपत्वाच्चानिष्टापादनमनपेक्षितार्थम् । संयोगित्व....... ।**

**यत् पुनरिदमुक्तम्**—य[2]स्य त्वविनाभावित्वं सम्बन्धोऽभिमतस्तस्यायमदोषः [ प्र० समु० वृ० २।३७ ] **इति । अत्र गुणदोषाभिमानः...................................................... ।**

---

हि लिङ्गिनोऽप्रत्यक्षस्य लिङ्गत्वं प्रत्यक्षत्वं प्रसञ्जयितुं शक्यमृद्धिम[3]द्भिर्बुद्ध-बोधिसत्त्वादिभिरपि यथोक्तोऽस्माभिर्व्य[4]तिकर इति ।

**तथापि स्या**दित्यादि । न हि लिङ्गस्य लिङ्गित्वे लिङ्गिनो वा लिङ्गत्वे कश्चिद् दोषोऽस्ति **विवक्षा-भेदात् तथा तथा स्व-स्वाम्या[5]दिगम्यगमकत्वात्**, स्वं वा गम्यत्वेन गमकत्वेन वा विवक्ष्येत स्वामी वा यदा तदा विवक्षितस्यान्यतरस्य गम्यत्वं गमकत्वं वा यथाविवक्षं दृश्यते, **तद्यथा–देवदत्ते**त्यादि दृष्टान्तः, यथा कस्मिंश्चित् कालेऽन्यतरकर्मणा देवदत्तो यज्ञदत्तेन युक्तो भवति यज्ञदत्तो वा देवदत्तेन तयो[6]श्चान्योन्यं लिङ्गत्वं [ लिङ्गित्वं ] च पर्यायेण विवक्षावशाद् भवति युगपद्वोभयकर्मजसंयोगित्वात् तथा ४५०-२ स्वस्वाम्यादिष्विति । **तथाही**त्यादि **राज्ञो** विशेषितस्य **ला[7]जपेयातरणं त[8]त्करणाज्ञ**येत्यादि गतार्थमग्निना धूमानुमानमिति ।

अत्राह—**न, संयोगित्वं[9] एकरूपत्वादि**त्यादि । नाग्नेः पूर्वं पश्चाद्वा धूमः संयोगी न धूमो वाग्नेरिति मत्वाऽनिष्टमापाद्यते–**अग्नितोऽपि धूमानुमितिप्रसङ्ग** इति; किं तर्हि ? **तत्काल एव** चाभ्यु-पलब्धिकाल एव **'धूमोऽस्ति'** इति भवत्येवानिष्टापादन[10]मिदं व्यतिकरप्रसङ्ग इति ।

अत्रोच्यते-**न, असम्भवा[11]त्**, न सम्बन्धाविशेषादग्निलिङ्गत्वं [ धूमलिङ्गित्वं ] च प्राप्तम्, किं तर्हि ? **प्रत्यक्षत्वाद्धूमोऽसाध्यः** साधनं तु, **साध्यस्त्वग्निरप्रत्यक्षत्वा**दनुमेयत्वादसाधनम् । धूमोऽपि साध्यश्चेत् प्रत्यक्षमप्रमाणं स्यात् तदप्रामाण्ये चानुमा निर्बीजा स्यात् । 'अनुमितिः' इत्यपशब्देन परानुकरणं दोषश्चैष स्यादिति । किञ्चान्यत्, संयोग्येकरूपत्वानुमानाच्चानिष्टापादनम् 'अग्नितोऽपि धूमानुमानप्रसङ्गः' इति यदेतद् भवत्साधनमेतद[12]नपेक्षितार्थम् । तत्प्रदर्शनार्थं साधनम्–**संयोगित्वे**त्यादि गतार्थमनिष्टापादनम् ।

**यत् पु[13]नरिद**मित्यादि स्वपक्षे दोषाभावप्रदर्शनार्थं यदुक्तं त्वया **यस्य त्वविनाभावित्व**मित्यादि

---

१ दृश्यतां पृ० ६८३ टि० २ ॥ २ दृश्यतां पृ० ६८३ टि० २ ॥ ३ °**मद्भिर्बुधबोधि**° प्र० ॥ ४ °**व्यति-करमिति** य० । °**व्यति** भा० ॥ ५ °**म्यादीगम्य**° प्र० ॥ ६ °**श्चान्यलिंगत्वं** य० ॥ ७ **त्वाजपेया**° प्र० ॥ ८ **तत्कारणा**° प्र० । दृश्यतां पृ० ६९५ पं० १५ ॥ ९ °**त्वरूपत्वा**° य० ॥ १० °**नमितिदं** य० ॥ ११ °**वात् सत्यं बंधाविशे**° प्र० ॥ १२ °**दनुपेक्षि**° य० ॥ १३ **पुनरित्यादि** य० ॥

अग्न्यादिसम्बन्धी ············ लिङ्गी ।

इत्थमुक्त्वा यत् पुनरिदमुच्यते—'[1]अग्नितोऽपि धूमानुमितिप्रसङ्गः' इति न्यायदिग्मूढेन तत्। इह देशसाध्यतामुक्त्वा लिङ्गिलिङ्गतत्त्वव्यवस्थानवृत्तेरेवं वक्तव्यम्—अग्निमतोऽपि धूमवदनुमाप्रसङ्गः ················ उभयतोऽपि तन्मतुबर्थस्य तथा तथेष्टवद्वृत्तेः । धूमविषय एतदेव स्यात् । अथ(त्र) पुनर्नास्ति दोषगन्धोऽपि । [2]धूमवत्त्वस्य हि लिङ्गत्वं युक्तम्, लिङ्गित्वमपि तद्देशविवक्षाया अग्निमत्त्वविशिष्टस्य देशस्यैव । न ह्यग्निमत्त्वस्य युक्तं लिङ्गत्वं साध्यत्वात् । अत एव मया तत्प्रधानमेवोच्यते—अग्नितोऽपि धूमानुमितिप्रसङ्ग इति ।

---

यावददोष इति । वयं तु ब्रूमोऽत्र **गुणदोषाभिमान** इत्यादि साध्य-साधनधर्मवद्देशाद्यनुमेयत्वमुक्त्वा पुनस्तस्यैव दोषाभिधानादप्रत्यभिज्ञातम् **अग्न्यादिसम्बन्धी**त्यादिना त्वयैवाभ्युपगतमिति दर्शयति तस्यैव देशस्य लिङ्गत्वं [ लिङ्गित्वं ] च न धर्मयोरग्निधूमयोरिति यावद् **लिङ्गी**ति त्वन्मतमेवेदमिति प्रत्यभिज्ञापयति ।

४५१-१ **इत्थमुक्त्वा यत् पुनरिदमुच्यते—अग्नितोऽपि धूमानुमितिप्रसङ्ग इति, न्यायदिग्मूढेन तद**िति । कथं पुनरमूढा ब्रुवत इति चेत्, [3]ब्रूमस्त्वां शिक्षां ग्राहयन्तः, तद्यथा—**इह देशसाध्यतामुक्त्वा [4]लिङ्गिलिङ्गतत्त्वव्यवस्थानवृत्तेरेवं वक्तव्य**मित्यादि, तां न्यायव्यवस्थामनुवर्तमानेन त्वयेत्थं वक्तव्यम् **अग्निमतोऽपि धूमवदनुमाप्रसङ्ग** इत्याद्युपदेशग्रन्थो याव**दुभयतोऽपि [5]तन्मतुबर्थस्य तथा तथेष्टवद्वृत्ते**रिति [6]तत्कारणोक्तिम् । धूमविषय [7]एतदेव **स्याद्** धूम एव देशविशेषानपेक्षोऽनुमापकः स्यादग्निरेव वानुमेयस्तदाऽग्नितो धूमानुमानं धूमादग्न्यनुमानवत् स्यात् प्रसङ्गः संयोगिनोरविशेषात् । [8]अथ पुनर्देशस्य साध्य-साधनत्वान्नास्ति दोषगन्धोऽपीति ।

तद् भावयति—**धूमवत्त्वस्य ही**त्यादि । धूमवत्त्वधर्मविशिष्टस्य देशस्यैव **लिङ्गत्वं युक्तम्**, धूमवत्त्वेन सिद्धस्य तस्य साधकत्वात् । [9]**लिङ्गित्वमपि तद्देशवि[10]वक्षाया** हेतोः **अग्निमत्त्वविशिष्टस्य देशस्यैव** लिङ्गित्वं युक्तम् । अग्निविषये तु देशे लिङ्गत्वं न युक्तम्, किं कारणम् ? **न ह्यग्निमत्त्वस्य युक्तं लिङ्गत्वं साध्यत्वात्**, साध्यत्वं लिङ्गित्वात्, लिङ्गित्वमसिद्धत्वात् । अस्मन्मतेन तु [11]लिङ्गत्वमपि अग्निमत्त्वविशिष्टस्य देशस्यैव शक्यं भावयितुम्, अग्निप्रत्यक्षत्वे धूमाप्रत्यक्षत्वे च कदाचित् । **अत एव मया तत्प्रधानमेव** देशप्रधानमेवोच्यते—**अग्नितोऽपि धूमानुमितिप्रसङ्ग** इति ।

---

१ दृश्यतां पृ० ६८३ टि० २ ॥ २ 'धूमवत्त्व[विशिष्ट]स्य हि देशस्यैव लिङ्गत्वं युक्तम्' इत्यपि पाठोऽत्र स्यात् ॥ ३ **ब्रूवस्त्वा शिक्षां** प्र० ॥ ४ **लिंगिलिंगितत्त्व**° य० । **लिङ्गलिङ्गितत्त्व**° इत्यपि पाठोऽत्र भवेत् ॥ ५ **तन्मतुपर्यस्य** भा० । **तन्मनुपर्यस्य** य० ॥ ६ **तत्कारणोक्तिं** प्र० । ( तत्कारणोक्तिः ? ) ॥ ७ **'एतदेवं स्यात्'** इत्यपि भवेत् पाठः ॥ ८ **'अत्र'** इत्यपि भवेत् पाठः । 'अथ पुनर्देशस्य साध्यसाधनत्वं नास्ति दोषगन्धोऽपीति' इत्यपि पाठः सम्भवेत् ॥ ९ **लिंगत्व**° प्र० ॥ १० °**वक्षया** य० ॥ ११ **लिंगित्वमपि** प्र० ॥

**नन्वेवं देशमुपेक्ष्याग्नेरेव लिङ्गित्वं स्यादनुमेयत्वात् । न चासौ लिङ्गी भवितुमर्हति लोके सिद्धत्वादननुमेयत्वात् । तथा चोक्तम्—**

न धर्मी धर्मिणा साध्यो न धर्मस्तेन धर्म्यपि ।
धर्मेण धर्मः साध्यस्तु साध्यत्वाद्धर्मिणस्तथा ॥ [ प्र० समु० ३।१३ ]

**उपचारादेवेदमुच्यत इति चेत्, अत्र तत्त्वं मृग्यते, सुहृत्सूपचारः……… साध्यत्वाद्धर्मिणस्तथा ।**

**एवं त्वग्निमद्देशस्य लिङ्गत्वम्, धूमवत्त्वसाधकलिङ्गानन्यत्वात्, धूमवत्त्वस्वात्मवदेव ।**

---

अत्राह—**नन्वेवं देशमुपेक्ष्य** अनादृत्य **अग्नेरेव लिङ्गित्वं स्याद्** भवितुं योग्यम् । कस्मात् ? **अनुमेयत्वा**दिति । अत्रोच्यते–**न चासौ लिङ्गी भवितुमर्हति** अग्निः, कस्मात् ? **लोके सिद्धत्वात्**, अतो**ऽननुमेयत्वात्** ।

**तथा चोक्तं**[1] त्वया यथास्मन्मतं 'धर्मविशिष्टो धर्म्येव साध्यः साधनं च' इत्यत्र त्वद्वचनमेव ज्ञापकम् । **न धर्मी**[2] **धर्मिणे**त्यादि श्लोकः । **न धर्मी**[3] **धर्मिणा साध्यो** यथाग्निर्धूमेन, सिद्धत्वादग्नेस्तद्धर्म- ४५१-१
त्वाभावाद् धूमस्य । **न धर्मो** 'धर्मिणा' इति वर्तते, यथाग्निनोष्णस्पर्शः, सिद्धत्वात् तद्धर्मत्वाभावाच्च[4] । **तेन धर्म्यपि** तेन धर्मेणा[5]ऽनन्तरनिर्दिष्टेन [6]विभक्तिपरिणामनिर्देशात् **धर्म्यपि** न साध्यः, यथा–अस्ति प्रधानम्, भेदानामन्वयदर्शनादिति, धर्म्यसिद्धेरेव धर्मासिद्धेः । पारिशेष्याद् **धर्मेण**[7] **धर्मः साध्यस्तु ।** ननु धर्मयोरपि परस्परं धर्मत्वासिद्धिर्धर्मित्वाभावे, तस्मादयुक्तं साध्य-साधनत्वमिति । नेत्युच्यते **साध्यत्वाद्धर्मिणस्तथा,** तेन प्रकारेण तथा [8]अनेकधर्मणो धर्मिणो वस्तुनः सिसाधयिषितधर्मविशिष्टस्य साध्यत्वात्[9] सिद्धधर्मविशिष्टस्य साधनत्वात् । तथा चाह–**साध्यत्वापेक्षया चात्र धर्म-धर्मिव्यवस्था न गुण-गुणित्वेने**त्यदोषः [ ] इति ।

**उपचारादेवेदमुच्यत इति चेत् ।** स्यान्मतम्–सत्यम्, परमार्थतो लिङ्गलिङ्गिभाव एकस्य वस्तुनः सिद्धसाध्यधर्मविशिष्टस्य तथापि उपचारकृताद्धर्मभेदाद् भिन्नमिवाभिन्नमप्युच्यते इति । एतच्चायुक्तम्, यस्माद**त्र तत्त्वं मृग्यते सुहृत्सूपचार** इत्यादि यावत् **साध्यत्वध(त्वाद्ध)र्मिणस्तथे**ति गतार्थं सव्याख्यानम् । तस्मात् सिद्धमग्निमत्त्व-धूमवत्त्वविशिष्टस्यैव देशस्य लिङ्गत्वं लिङ्गित्वं च ।

तदुपसंहृत्य त्वां प्रति यदसिद्धं प्रस्तुतमग्निमद्देशलिङ्गत्वं तत् साधयामः । तद्यथा–**एवं तु अग्निमद्देशस्य लिङ्गत्व**मिति प्रतिज्ञा । हेतुः–**धूमवत्त्वसाधकलिङ्गानन्यत्वा**दिति । दृष्टान्तः–**धूमवत्त्वस्वात्मवदेव,** यथा धूमवत्त्वं स्वात्मा देशस्य तदनन्यत्वात् लिङ्गं तथाग्निमत्त्वस्वात्मा तदनन्य[त्वा]देशस्य ४५२-१
लिङ्गमेव, तदनन्यत्वं च प्रतिपादितमेवेति ।

---

१ इत्यग्र प्र० ॥ २ **धर्मा** प्र० ॥ ३ **धर्मा** प्र० ॥ ४ ( तद्धर्मित्वा° ? ) ॥ ५ **धर्मिणो** य० ॥
६ **विभक्तिनुपरिणाम°** भा० । ( विभक्तिविपरिणाम° ? ) ॥ ७ **धर्मेण धर्मः साध्यतु ननु धर्मयोरपि** य० । **धधर्मयोरपि** भा० ॥ ८ **अनेकधर्मणो धर्मोणो वस्तुनः** भा० । **अनेकधर्मणोऽधर्मणो वस्तुनः** य० ॥ '**अनेकधर्मणो वस्तुनः**' इत्यपि पाठोऽत्र स्यात् ॥ ९ **°त्वात्त-सिद्ध°** य० ॥

**नाग्निमत्त्वस्य लिङ्गत्वं व्यभिचारित्वात् प्रमेयत्ववत्।**

**न, धूमवस्तुत्वानुमानभूतेन लिङ्गत्वं नियतम्। अव्यभिचारित्वोपपादनेनाऽग्न्यविनाभावित्वेनैव धूमत्वसिद्धेः।**

**अथात्र किं प्रतिपत्तव्यं धूमलिङ्गादग्निप्रतिपत्तिवदग्नेरपि धूमप्रतिपत्तिः स्यात्।**

**अथ किंविषयः सम्प्रधारः? दर्शितन्यायदेशसाध्यतया युक्तमेव लिङ्गस्य लिङ्गिनो वा लिङ्गित्वं लिङ्गत्वं वा। धूमवत्त्वलिङ्गित्वापत्तौ तु प्रमेयत्ववदग्निमत्त्वव्यभिचाराल्लिङ्गत्वाभाव एव। न हि सर्वत्राग्नौ धूमस्याशङ्क्यमनुमानम्, अनुगमाभावात्। देशासाध्यतायामपि सिद्धसाधनन्यायविरोधदोषः।**

---

अत्राह—**नाग्निमत्त्वस्य लिङ्गत्वं व्यभिचारित्वात्,** व्यभिचरति ह्यग्निमत्त्वं प्रदेशस्य धूमवत्त्वादृतेऽपि देशान्तरे कालान्तरे चा[1]योगुडाङ्गारादिषु दृष्टत्वात्। किमिव? **प्रमेयत्ववत्,** यथा 'नित्यः शब्दः, प्रमेयत्वात्, आकाशवत्' इत्युक्ते प्रमेयत्वं घटादावनित्ये विनापि नित्यत्वेन दृष्टं तथा अग्निमत्त्वं धूमवत्त्वेनेति व्यभिचारित्वादनन्यत्वस्यासाधकत्वम्। धूमवत्त्वस्य तु भवति अग्निमत्त्वेन [2]विना न दृष्टत्वादिति।

अत्र ब्रूमः–**न, धूमवस्तुत्वानुमाने**त्यादि। धूमस्य हि वस्तुत्वे[न] आत्मलाभेनैवा[3]नुमानभूतेनाऽग्न्यविनाभूतेन लिङ्गत्वं नियतं पाण्डुत्वबहुलत्वाविच्छिन्नमूलत्वादिरूपेण धूमत्वनिश्चयकरेण, तत्र लिङ्गित्वदोषप्रसङ्गस्यावतार एव नास्ति प्रत्यक्षत्वात् सिद्धत्वादेव लिङ्गत्वात्। तथाग्नेरपि प्रत्यक्षत्वे धूँ[4]मस्य लिङ्गिनो लिङ्गत्वम्। **अव्यभिचारित्वोपपादनेने**त्यादि, यदि तु अग्निमत्त्वं प्रमेयत्ववद् धूमं व्यभिचरेत् ततो धूमस्य धूमत्वमेव सन्दिह्येत[5] बाष्पनीहारादिभावेनाबद्धमूलादित्वात्। तस्मात् सन्दिग्धासिद्धो हेतुः स्याद्धूमः, कुतोऽस्य लिङ्गत्वम्? अग्न्यविनाभावित्वेनैव तु बद्धमूलत्वादिरूपेण धूमत्वसिद्धेः स्यात् पक्षधर्मत्वाल्लिङ्गत्वम्, तथाग्नेरपि धूमसिद्धौ लिङ्गत्वम्।

इतर आह–**अथात्र किं प्रतिपत्तव्यं धूमलिङ्गादग्निप्रतिपत्तिवदग्नेरपि धूमप्रतिपत्तिः स्यात्,** वस्तुनो लिङ्गलिङ्गित्वाविशेषात्। प्रतिपत्तौ तु दृष्टो विशेष इत्यभिप्रायः।

४५२-२ आचार्योऽत्रापि अविशेषमापादयितुकामस्तमेव वाचयितुं चाह–**अथ किंविषयः सम्प्रधार** इति। इतर आह–**दर्शितन्यायदेशसाध्यत(ता)या** हेतोः, दर्शितोऽयं न्यायः–देश एवाग्निमत्त्वेन साध्यः साधनं धूमवत्त्वेनेति। तस्मात् युक्तमेव लिङ्गस्य लिङ्गिनो वा लिङ्गित्वं [ लिङ्गत्वं ] वा[6], न विरुध्यत एतत्। किन्तु **धूँ[7]मवत्त्वलिङ्गित्वापत्तौ त्वि**त्यादि। सत्यपि संयोगित्वाविशेषे धूमसंयोगित्वमेवाग्नेर्गमकं दृष्टम् 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति। धूमवत्त्वस्य लिङ्गित्वे **प्रमेयत्ववदग्निमत्त्वव्यभिचाराल्लिङ्गत्वाभाव एव।** तस्मादग्नेरन्यथा संयोगित्वमन्यथा धूमस्य, यस्माद् **न हि सर्वत्रे**त्यादि 'यत्र यत्राग्निस्तत्र तत्र धूमः' इति [8]आशङ्क्यमनुमानम् **अनुगमाभावात्** सर्वत्राग्नौ धूमाभावात्। मा भूदेष दोष इति देशासाध्यतेष्यते, तस्यां च **देशासाध्यतायामपि** [9]**सिद्धसाधनन्यायविरोधदोषः** 'धूमादग्निः' इति अग्नेः सिद्धत्वात् साध्यत्वेनेप्सितः पक्षः [ न्यायमुखं[10]. ] इति लक्षणानवतारः प्रकाशितप्रकाशनवच्च वैयर्थ्यमिति।

---

१ वायोगुडा° य० ॥ २ विनानान दृष्ट° भा० । विना दृष्ट° य० ॥ ३ °वनुमा° य० ॥ ४ धूमस्य लिंगत्वम् भा० ॥ ५ °त वाप्यनीहा° भा० । °त तवाप्यनीहा° य० ॥ ६ वा य० प्रतौ नास्ति ॥ ७ धूमत्वलिंगित्वा° य० ॥ ८ ( अशक्यमनुमानम् ? ) ॥ ९ ( सिद्धसाधनं न्याय° ? ) ॥ १० दृश्यतां टिप्प० १२८ पं० ३ ॥

अग्निसाधनवदेव हि धूमसाधनेऽपि विनाग्निना धूमस्य दृष्टत्वाद् व्यभिचाराद् नानुमानसम्भवः ।

सम्भाव्यते तु धूमदर्शनात् 'अग्निरत्र' इति अग्निदर्शनाद्वा 'धूमोऽत्र' इति, अग्ने रन्धनगृहत्ववत् । यत्र धूमासम्भवस्तत्राग्नेरप्यसम्भवोऽन्तर्जलवत् । अन्वयार्थः सम्भवार्थत्वेन इतरवत् । प्रतीतिरपि तथा । अथवालं भवतु ।

'अग्निरत्र' इति प्रतिज्ञायाम् 'अग्निरेवात्र' इति नावधार्यते तावत् तत्र पृथिवीन्धनादिसद्भावात् । नापि 'अग्निरत्रैव' इत्यवधार्यते प्रत्यक्षादिप्रसिद्धिविरुद्धार्थत्वात् । नापि 'अग्निरत्र भवत्येव' इत्यवधार्यते सदाग्निधूमाभावात् तत्र ।

तस्माद् विवक्षिते देशे काले भवत्यग्निरिति प्रतिज्ञार्थः, अव्युत्पत्तिविध्यनवधृतेः, 'रक्तमिदं करवीरपुष्पम्' इति प्रतिज्ञावत् ।

---

अत्र ब्रूमः—**अग्निसाधनवदेव**[1] **ही**त्यादि अग्नि-धूमयोरविशिष्टगम्यगमकभावापादनग्रन्थो गतार्थः । वासगृहेऽपनीताग्निके [ धूमोऽग्निना ] *[2]विना दृष्टोऽरणि[3]निर्मथने वाऽभूताग्निके *तस्मात् तुल्यो व्यभिचारः ।

कथं पुनरनुमानसम्भवः ? **सम्भाव्यते तु धूमदर्शनादग्निरत्रेति अग्निदर्शनाद्वा धूमोऽत्रेति,** तत् पुनः प्रमाणान्तरगते देशेऽग्नित एव धूमः, बद्धमूलत्वादिभिर्धूमाद्वाग्निरिति । तत्र दृष्टान्तः—**अग्ने र[5]न्धनगृहत्वव**दिति त्वरित[6]तरणकरणार्थाज्ञाप्ताग्निहस्तसूपकारके रन्धनगृहे 'धूमः सम्भवति' इति । वैधर्म्येण **यत्र धूमासम्भवस्तत्राग्नेरप्यसंभवो[7]ऽन्तर्जलव**दिति । धूमोऽग्नेरन्यत्र न सम्भवतीत्यन्वयस्यार्थः सम्भवार्थत्वेन **इतरव**दिति धूमवत्, यथा धूमोऽग्नौ सम्भवति स कदाचित् क्वचित् तथाग्निर्धूमे सम्भवति इत्यन्वयार्थः ४५३-१ शक्यत एव, प्रतीतिरपि तथा । **अथवालि(लं)[8] भवत्वि**ति अलमियता क्रीडितेनेति वस्तुतः प्रतिपत्तितश्च प्रतिपादितमपि अस्माभिर्न प्रतिपद्यसे लिङ्ग-लिङ्गित्वाविशेषं किमर्थम् ? यद्यपि न प्रतिपद्यसे तथाप्युत्तरमवयवनिरूपणेनापि प्रतिपादयिष्यामः ।

**'अग्निरत्र' इत्यस्यां प्रतिज्ञाया**मित्यादि । 'अग्निरेवात्र' इति नावधार्यते तावत् तत्र पृथिवीन्धनादिसद्भावात् तदभावेऽग्नेरेव दुर्लभत्वात्, देशस्यैव वा[9]ऽभावात् तदा[10]धेययोरग्निधूमयोरप्यभावापत्तेः । **नापि 'अग्निरत्रैव' इत्यवधार्यते** तत्प्रदेशाग्नितोऽन्येषामग्नीनामनग्नित्वाभ्युपगमे **प्रत्यक्षादिप्रसिद्धिविरुद्धार्थत्वात्** प्रतिज्ञादोषात्, तत्प्रदेशव्यतिरिक्तेषु प्रदेशेष्वग्न्यभावात् 'यत्र यत्राग्निस्तत्र तत्र धूमः' इति दृष्टान्तो न शक्यो वक्तुम्, अतस्तन्निरासः । **नापि 'अग्निरत्र भवत्येव' इत्यवधार्यते** भवतिप्र[11]योगव्यवहारेण, न[12] न भवत्यपि कदाचिदिति । किं कारणम् ? **सदाग्निधूमाभावात् तत्र** तस्मिन् देशे कादाचित्काग्निव्युदा[13]सो निरर्थकः सततमग्निधूमयोरभावात् ।

**तस्माद् 'विवक्षिते देशे** तस्मिंस्तस्मिन् **काले भवत्यग्निः' इति प्रतिज्ञार्थः ।** कस्मात् ?

---

१ °नचदेव भा० । °नंचदेव य० ॥ २ * * एतदन्तर्गतः पाठो भा० प्रतौ नास्ति ॥ ३ °रणिनिमर्थने वा भूताग्निके य० ॥ ४ °व्यतोसु धूम प्र० ॥ ५ °रत्वन° य० । नत्वन° भा० ॥ ६ तुलना-पृ० ६९१ पं० ५ ॥ ७ °संभवोन्नर्जल° भा० । °संभवेन्निर्जल° य० ॥ ८ अथवालिरुवत्विति भा० । अथवालिसरुवत्विति य० ॥ ९ चाभावात् भा० ॥ १० तदाचययो° य० ॥ ११ °प्रयोगाव्यवहारेण प्र० । (°प्रयोगाध्याहारेण ?) ॥ १२ न भवत्यपि य० ॥ १३ °दासोनर्थकः भा० ॥

धूमश्च पक्षधर्मोऽनुबद्धरूप एवाग्निना भवति अग्निसहचरित्वाग्निनिमित्तत्वख्यापनार्थम् । इह कचित् सहचरिभावः, कचिच्च निमित्तनैमित्तिकभावः । इह तु द्व्यवयवमेव लिङ्गम् । तत्राविनाभावी [ सहचरी । सहचरावग्निधूमौ । ] सहचरोऽस्मिन् विद्यत इति सहचरी । अस्मिन् विद्यत एवाग्निर्धूमे, न न विद्यत एव, न च न विद्यतेऽपि कचित् । तस्मिन् हि किल सति विद्यत एवाग्निः, न न विद्यते वात्यादिवत्, न च न विद्यतेऽपि धूमासहचरायोग्निधूमवत्, न वा सपक्षसहचरे न विद्यत एव कृतकमिव नित्ये । एवमसिद्धविरुद्धानैकान्तिकव्युदासेन सहचरिभावानुमानं सिध्यति ।

नन्वेवं किमर्थं निमित्तनैमित्तिकभावोपादानम्? न, अग्निवद् व्यभिचारि-

---

अव्युत्पत्तिविध्यनवधृतेः, विधिनैवाव्युत्पादितावधारणेनोक्तत्वात् 'रक्तमिदं करवीरपुष्पम्' इत्यव्युत्पन्नरक्तश्वेतविशेषणाय पुरुषाये[1]व तन्निरूपणार्था 'रक्तमेव, [2]श्वेतमेव वा' इत्यवधारणानपेक्षा प्रतिज्ञा ।

४५३-२ धूमश्च पक्षधर्मोऽनुबद्धरूप एवाग्निना भवति । किमर्थम्? अग्निसहचरित्वाग्निनिमित्तत्वख्यापनार्थम् । तद्व्याख्या—इह कचिदित्यादि, रूपस्पर्शयोः सहच[3]रिभावः, दण्डादि निमित्तम् घ[4]टो नैमित्तिक इति निमित्तनैमित्तिकभावः, तावेतौ सहचरिनिमित्तनैमित्तिकभा[5]वावयवौ, त[6]देव हि तत्, इह तु द्व्यवयवमेव लिङ्गम् । तत्राविनाभावीत्यादि, सहचरिभावं तावदादौ निरूपयामः, सोऽविनाभाव एव । तद्व्याख्या निरूपणार्था—सहचरावित्यादि सहचरो य[7]स्मिन् विद्यत इति सहचरी धूमस्याग्निरिति इनिप्रत्ययः सप्तम्यर्थे, अस्य त्रिविधोऽर्थः—अस्मिन् विद्यत एवाग्निर्धूमे अग्नित एव चा[8]यमिति पक्षधर्मावधारणम् । न न विद्यत एवेति 'सपक्षाननुगतो विपक्ष एव सन्' इति [9]विरुद्धासाधारणानैकान्तिकाशङ्का मा भूदिति । न च न विद्यतेऽपि कचित् सहचरी धूम इति साधारणानैकान्तिका[10]शङ्का मा भूदिति वा । तद्व्याचष्टे—तस्मिन् हि किल सतीति, पराभिमतस्य धूमे लिङ्गिनि अग्निलिङ्गत्वस्य व्युदासार्थं तदुदाहरणानि, सति विद्यत एवाग्निर्न न विद्यते वात्यादिवदित्यसिद्धव्युदासेन । न च न विद्यतेऽपि [11]धूमासहचरायोग्निधूमवदिति साधारणानैकान्तिकाशङ्काव्युदासेन । न वा सपक्षसहचरे न विद्यत एव कृतकमिव नित्य इति विरुद्धा[12]साधारणानैकान्तिकाशङ्काव्युदासेन । एवमसिद्धेत्याद्युक्तोपसंहारो गतार्थः ।

नन्वेवमित्यादि । एवं तर्हि असिद्धविरुद्धानैकान्तिकव्युदासेन सहचरिभावानुमानसिद्धौ सत्यां किमर्थमनर्थकनिमित्त-नैमित्तिकभावोपादानम्? तस्मादेकावयवमेवास्त्विति ।

४५४-१ एतच्च न, अग्निवद् व्यभिचारित्वाद् धूमस्यापि, यथाग्निर्धूमं व्यभिचरति अयोग्न्यादावभावात् तथा धूमोऽपि अग्निमपनीताग्निकवासगृहादौ अरणिनिर्मथनादौ चेति समानम् । तद्व्याख्या यदि हे (हि) स सदेत्यादि सदृष्टान्तोपनया सभावना गतार्था प्रागुक्तन्याया । सन्निहितनिमित्त-सहचरिप्रख्या-

---

१ पुरुषायैवातन्निरू° प्र० ॥ २ श्वेतमेवेत्यव° य० । श्वेतमेवत्यव° भा० ॥ ३ °चरिताभावः भा० । °चरितः य० ॥ ४ घटादि य० ॥ ५ °भावावयवौ प्र० ॥ ६ तदेव हि तदिह तु द्व्यवयमेव य० । तदेतदतदिह तुद्व्यवयवमेव भा० ॥ ७ (अस्मिन्?) ॥ ८ वाय° भा० ॥ ९ विरुद्धसाधारणानैकान्तिका मा भूदिति प्र० ॥ १० °कशङ्का य० ॥ ११ धूमसहचरायो° भा० । धूमसहचरयो° य० ॥ १२ °सावधार° प्र० ॥

**त्वाद् धूमस्यापि। यदि हि स सदा········। पाण्डूर्ध्वगतिबहलोत्सङ्ग्येकदेशबद्धमूलपुनःपुनरुत्थायिधूम[स्याग्निमन्तरेणाभावाद् निमित्तनैमित्तिकभाव एषितव्यः]। बलाकापताकावच्च [सहचरिभावोऽप्येषितव्यः, निमित्तनैमित्तिकभावे सत्यपि] धूमेऽग्नेर्व्यभिचारदर्शनात्।**

**सहचरिनिमित्तोपपत्तौ तु न काचिद् व्यभिचारदिक्। देशान्तरासञ्चारिधूमस्य तत्कालसन्निहिताग्निनिमित्तत्वाद् विशिष्टस्यैव धूमस्याग्नौ गमकत्वम्, विशेषणार्थवत्त्वात्। स यथाग्निमत्त्वं गमयति तथा सन्निहिताग्निनिमित्तत्वमपि।**

**एवं चाग्नेरपि गृहीतत्वाद् न प्रत्यक्षादि प्रमाणान्तरमपेक्ष्यते कृतकत्वेने-**

---

पनेन विशिष्टधूमग्रहणं 'तस्मिन्नेव देशे काले च नानुत्पन्नो नातीतो[1] नापनीतो[2] वाग्निः' इत्येतस्या[र्थ]स्य प्रख्यापनार्थम्। सत्यपि सहचरिभावे निमित्तभूतं तमग्निमन्तरेण धूमस्यैवाभावाद् निमित्तनैमित्तिकभाव एषितव्यः। ततस्तदवधारणार्थानि लिङ्गानि दर्शयन्नाह—**पाण्डूर्ध्वगती**[3]त्यादि। **पाण्डु**विशेषणं बाष्पनीहारादि[4]व्युदासार्थम्। **ऊर्ध्वगत्या बहलत्वेन** च धूमिकाव्युदासः। **उत्सङ्गि**ग्रहणात् शरावाकारो[5]र्द्धविस्तारित्वं सूच्यते, पार्श्वविस्तारित्वाद् धूमिकादीनाम्। **एकदेशबद्धमूल**ग्रहणादभूता-ऽपनीताग्नि-वात्यादिव्युदासोऽनेकत्र भ्रमणादित्वात् तेषाम्। **पुनःपुनरुत्थायि**धूमग्रहणा[द]पनीताग्निकवासगृहारणिनिर्मथनावस्था-व्युदासः। तस्मात् सलिल-बलाकयोः सहचरिणोरिवाग्निधूमयोर्व्यभिचारदर्शनाद् निमित्तनैमित्तिकभावोऽपीष्ट इति। सोऽपि निमित्तनैमित्तिकभावः सहचरिभावेन विना व्यभिचरत्येवेति दर्शयन्नाह—**बलाकापताकावच्चे**त्यादि यावद् **धूमेऽग्नेर्व्यभिचारदर्शना**दिति भावना गतार्था, नैमित्तिकसद्भावे निमित्ताभावदर्शनात् स्थपतिकृतप्रासादादिवदिति।

४५४-२

तदुभयगतदोषपरिहारेण द्व्यवयवगुणप्रकाशनार्थं चाह—**[सह]चरिनिमित्तोपपत्ता**[6]वित्यादि यावद् **विशेषणार्थवत्त्वा**दिति। उभयविशेषणसम्पत्तौ सत्यां काचिद् व्यभिचारदिग्[7] न सम्भवति। तत् कथम्? इति तद् दर्शयति—**देशान्तरासञ्चारी**त्यादिना भावयन्, तत्कालसन्निहिताग्निनिमित्तत्वाद् धूमस्य व्यभिचारमलविशुद्धस्य तैर्विशेषणैर्विशिष्टस्यैव सहचरिण्यग्नौ[8] गमकत्वम्, इतरथा धूमस्यापि अग्नेरिव धूमे व्यभिचाराद् विशेषणसामर्थ्यादेवानुमानार्थवत्त्वम्[9], विशेषणानुपादाने[10]ऽग्निमत्त्वमेव न गमयति उभयतोऽपि सहचरित्वे निमित्तनैमित्तिकत्वे वा[11]ऽसति यस्मात् तस्मात् **स यथाग्निमत्त्वं गमयति तथा सन्निहिताग्निनिमित्तत्वमपि** 'गमयति' इति वर्तते, यथाग्निमत्त्वेन विना नास्ति धूमवत्त्वं[12] तथा तन्निमित्तत्वमन्तरेण नास्तीत्यग्निमत्त्ववन्निमित्तत्वमपि गमयति उभयत्राव्यभिचारादिति।

स्यान्मतम्—लिङ्गत्वादग्निः प्रत्यक्षं प्रमाणान्तरमपेक्षेत धूमवदिति। तन्न भवति, **एवं चे**त्यादि। एवमुक्तबद्धमूलत्वादिविशिष्टधूमपरिग्रहेऽग्नेरपि गृहीतत्वाद् न प्रत्यक्षादिप्रमाणान्तरमपेक्ष्यते। किमिव?

---

१ **नानीतो** या० ॥ २ **नायतीतो** प्र० ॥ ३ **पाण्डूर्ध्वगती°** प्र० ॥ ४ **बाष्पन्नीहा°** प्र० ॥ ५ **सरावा°** प्र० ॥ ६ **°त्तादित्यादि** प्र० ॥ ७ **रदिङ्गसंभवति** प्र० ॥ ८ **°ण्यगौगत्वम्** प्र० ॥ ९ **°नार्थत्वम्** य० ॥ १० **°पादानाग्निम°** प्र० ॥ ११ **वासति** प्र०। **'चासति'** इत्यपि पाठोऽत्र भवेत् ॥ १२ **धूमवथा तन्नि°** भा०। **धूमत्वं तथा तन्नि°** य० ॥

**वानित्यत्वस्य। स एव निमित्तमग्निर्धूमस्य सहचरश्च। न हि तस्याग्नितोऽन्यद् निमित्तं भवितुमर्हति सहचरं वा·········क्रियेत। पूर्वप्रत्यक्षसम्बन्धस्मरणादन्यतरेणेतरस्याभिव्यक्तिः प्रत्यक्षवत्।················।**

**·········अनित्यं सर्वं प्रयत्नानन्तरीयकम्, आर्हतत्वस्याभ्युपगम्यमानत्वात्। स्ववचनानपेक्षायामपि तान्यपि सिद्धप्रयत्नानन्तरीयकान्येव लोकप्रत्यक्ष·········विहितवृत्तित्वात्, कुड्यादिवत्। जीवशरीरं नात्यन्त(क्त?)शरीरचित्त···············स्वयं प्रवृत्तत्वात् स्थपतिवत्। चेतनविहितवृत्ति च·······सवितृगति········।**

---

कृतकत्वेनेवानित्यत्वस्य, तद्यथा प्रागभावप्रध्वंसाभावाख्यमेकमेव [व]स्त्व[ध्रु]वमनित्यं कृतकं [1]चोच्यते,
[2]ध्रुव स्थैर्ये, ध्रुवं स्थिरम्, नेर्ध्रुवे[3] त्यप् [ पा० म० भा० ४।२।१०४ ] नित्यम्, न नित्यमनित्यमिति
'कृतकम्' इत्युक्ते तदेवानित्यमध्रुवमित्युक्तं भवति उत्पादविनाशयोरध्रौव्याभेदात् तथा धूमग्रहणेऽग्निग्रहणं
प्रदेशात्माभेदात्। स एव निमित्तमग्निर्धूमस्य सहचरश्च, **न हि तस्ये**त्यादि *[4]यावत् **क्रियेते**त्यादि*, **नहि**
**तस्य** धूमस्य **अग्नितोऽन्यद् निमित्तं** प्रदेशपरिणामात्मकाद् देशान्तरस्थाग्निपाषाणाम्बुकुम्भादि **भवितु-**
४५५-१ **मर्हति सहचरं वा** तदसम्बद्धत्रैलोक्यलिङ्गित्वप्रसङ्गात्, परिणाम्यभेदपरिणामान्तरसाध्यत्वे परिणामान्तर-
साधनत्वात् [6]एवमस्यैव [7]हेतु-हेतुमद्भावभावनार्थमाह–**पूर्वप्रत्यक्षे**त्यादि यथा पूर्वं प्रत्यक्षकालेऽग्निना
सम्बद्धो धूमोऽग्निश्च धूमेन तथान्वयकाले तस्य [8]सम्ब[न्ध]स्य स्मरणाद् 'यत्राग्निस्तत्र धूमः, यत्र धूम-
स्तत्राग्निः' इत्यन्यतरेण विवक्षितेन हेतुनोपात्तस्य इतरस्य साध्यस्याभिव्यक्तिः प्रत्यक्षकाले इव **प्रत्यक्षवत्।**

स्यान्मतम्–धूमविज्ञानकालेऽग्निविज्ञानस्याभावात्[9]···················।

·········अनित्यत्वप्रयत्नानन्तरीयकत्वयोरन्योन्यव्याप्तिं प्रतिज्ञाय हेतुमाह–**आर्हतत्वस्याभ्युपगम्यमानत्वा**दिति अन्यापोहाभ्युपगमात् स्ववचनादेव जैनेन्द्रं मतमभ्युपगतं त्वयेति वक्ष्यामः।

**स्ववचनानपेक्षायामपी**त्यादि। यद्यपि स्वं वचनमनपेक्ष्यापि 'अनित्यं सर्वं प्रयत्नानन्तरीयकं न
भवति' इति ब्रूषे तथापि [10]ते वचनं न्यायापेतमेवेदम्। तद्यथा–**तान्यपी**त्यादि, तान्यपि अभ्रेन्द्रचापादीनि
**सिद्धप्रयत्नानन्तरीयकान्येवे**ति प्रतिज्ञा, **लोकप्रत्यक्षे**त्यादि समासदण्डको हेतुर्यावद् **विहितवृत्ति-**
**त्वा**दिति। **कुड्यादि**दृष्टान्तः। तद्व्याख्या **लोकप्रत्यक्षे**त्यादिविशेषणप्रयोजनानि च पिण्डार्थेन विद्युदा-
दीनां चैतन्यं तावत् साध्यते–जीवशरीरं वातादयः, अनण्वादित्वे स्पर्शादिमत्त्वात्, गोवत्। तस्यापि
गोर्मृतस्य जीवत्वाभावाद् मा भूदनैकान्तिकते[ति] जीवशरीरत्वेऽपि तु **नात्यन्त(क्त)शरीरं**[11] **चित्ते**त्यादि
यावत् **स्वयं प्रवृत्तत्वा**दिति विशेषणव्याख्या। **स्थपतिव**दिति स्थपतेश्चैतन्यवत्। वातादिचैतन्ये सिद्धे
४५५-२ **चेतनविहितवृत्ति चे**त्यादिना विद्युदभ्रमेघशब्दादीनां चेतनवातप्रयत्नोत्थता दर्श्यते, **सवितृगती**त्यादिना

---

१ **चोच्यते वस्थैर्यं** भा० ॥ २ "ध्रु स्थैर्ये"—**पा० धा०** ९४३ ॥ ३ **न ध्रुवे त्यप्र** प्र०। "त्यब् नेर्ध्रुवे। त्यब् नेर्ध्रुवे वक्तव्यः। नित्यः।"—**पा० म० भा०** ४।२।१०४ ॥ ४ * * एतदन्तर्गतः पाठो भा० प्रतौ नास्ति ॥ ५ **क्रियतेत्यादि** य० ॥ ६ **एवंस्यैव** भा०। ( एकस्यैव ? )। 'परिणाम्यभेदपरिणामान्तरसाध्यत्वे परिणामान्तरसाधनत्वा**देकस्यैव** हेतुहेतुमद्भावभावनार्थमाह' इत्यपि पाठोऽत्र भवेदिति ध्येयम् ॥ ७ **हेतुसद्भावभावनार्थ**° य० ॥ ८ 'सम्बद्धस्य' इत्यपि पाठोऽत्र स्यात् ॥ ९ इतः परं पाठस्त्रुटितः सर्वासु प्रतिषु ॥ १० **ते क वचनं** य० ॥ ११ °**रचेत्तेत्यादि** प्र० ॥

**याप्याधाराधेयवद्वृत्तिः—**

[1]लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः ।
नियमस्य विपर्यासे सम्बन्धो लिङ्गलिङ्गिनोः ॥

यस्माल्लिङ्गे लिङ्गी भवत्येव तस्माद् युक्तं यदग्निवद् धूमो द्रव्यत्वादीनामपि प्रकाशको न तैक्ष्ण्यादीनाम् । यस्माच्च लिङ्गिन्येव लिङ्गं भवति नान्यत्र तस्माद् युक्तं यद् धूमो धूमत्वेनेव पाण्डुत्वादिभिरपि प्रकाशयति न द्रव्यत्वादिभिः । एवं ह्यवधारणवैपरीत्येन सम्बन्धो लिङ्गलिङ्गिनोः । [प्र० समु० वृ० २।२०½ ]।

**एषापि तद्भावदर्शनविधेरेव गमयति न व्यावृत्तिबलेन । न हि योषिद्दण्डपाण्डुत्वं गमयत्यग्निम्, अभूताग्निधूमकत्वात् । धूमभूतं गमयति धूमभूताग्नित्वात् तद्भावस्य तद्भावत्वेनैव गमकत्वात् ।**

**यथा चेदं तथा द्रव्यत्वादिसामान्यस्यापि धूमभूतेर्गमकत्वमग्नेः पाण्डुत्ववत् । अग्नेरपि द्रव्यत्वसामान्यगतिरग्निभूतत्वात् । यत्तु धूमो दीप्त्यादिविशेषाणामगमकस्तत् तद्भावदर्शनविधेरेव तथा चान्यथा च दृष्टत्वाद् व्यभिचारात् ।**

---

इन्द्रधनुषः । तस्माद् विद्युदादीनि[1] प्रयत्नानन्तरीयकानि अनित्यानि चेत्यनित्यप्रयत्नानन्तरीयकत्वयोरन्योन्यगम्यगमकता ।

एवमविनाभावित्वकुतर्कस्य [2]विनाभावेनास्माभिः **तद्भावदर्शनादेव** साध्यसाधनधर्मयोः विधेः संयोगिवद्वृ[3]त्तिः यथाप्रतिज्ञमुँ[4]क्ता, 'न त्वाधाराधेयवद्वृत्तिः' इति प्रतिपादयिष्यामः—**याप्याधाराधेयव**दित्यादि । यामपि आधाराधेयवद्वृत्तिं मन्यसे **लिङ्गे लिङ्गी भवत्येवे**त्यादि श्लोकः । तद्व्याख्या—**यस्माद् लिङ्गे** धूमे **लिङ्गी** अग्निर्**भवत्येव** न [ न ] भवत्यपि **तस्माद् युक्त**मित्यवधारणार्थप्रदर्शनम् । **यस्माच्च लिङ्गिन्येवे**त्यादि यावद् **द्रव्यत्वादिभि**रित्यादि तद्विपरीतावधारणप्रदर्शनं गतार्थम् । सामान्यस्य ग[5]म्यत्वं लिङ्गिनि न विशेषाणाम्, लिङ्गस्य च विशेषाणां केषाञ्चिद् गमकत्वं न सामान्यस्य दृष्टम्, तत् सर्वमविनाभावादाधाराधेयवद्वृत्तेरिति पूर्वपक्षः ।

[6]अत्रोत्तरम्-**एषापी**त्यादि । इयमपि आधाराधेयवद्वृत्तिः **तद्भावदर्शनविधेरेव** यत्र दृष्टस्तद् **गमयति** दर्शनबलेन, न यत्रादृष्टस्तद्व्यवच्छेदेन व्यावृत्तिबलेनेति । अत्रापि **न ही**त्यादि [7]यावन(त् ?) **योषिद्दण्डपाण्डुत्वं** न गमयति अग्निम्, अभूताग्निर्धूमकत्वात्; धूमभूतं तु पाण्डुत्वं गमयत्यग्निं धूमभूता[8]ग्नित्वात्, विधेरेवं[9] तद्भावस्य तद्भावत्वेनैव गमकत्वात् ।

**यथा चेद**मित्यादि, पाण्डुत्वादिविशेषस्य धूमभूतत्वेन गमकत्ववद् द्रव्यत्वादिसामान्यस्यापि धूमभूतेर्गमकत्वमग्नेरिति भावना यावत् **पाण्डुत्ववदि**ति । एवं तावद्धूमभूतसामान्य-विशेषधर्माणां गमकत्वं तुल्यम् । [10]विधेरेव गम्यत्वनियमाविशेषः । [11]तथाहि—**अग्नेरपि द्रव्यत्वसामान्यगतिः, अग्निभूतत्वात्** । ४५६-१
नोदकादितद्व्यतिरिक्तद्रव्यत्वगतिः, अतद्भूतत्वात् । **यत्तु धूमो दीप्त्यादी**त्यादि, दीप्ति-तैक्ष्ण्यादिविशेषा-

---

१ दृश्यतां पृ० ६७९ पं० ४-८ ॥ २ **विनास्माभिः** भा० ॥ ३ पृ० ६८१ पं० २ ॥ ४ **मुक्त्वा** प्र० ॥ ५ **गमकत्वं** य० ॥ ६ **अत्रोत्तरमेषामपीत्यादि** प्र० । 'अत्रोत्तर**मियमपी**त्यादि' इत्यपि पाठोऽत्र भवेत् ॥ ७ अत्र किञ्चिदशुद्धं त्रुटितं वा प्रतीयते । 'न हीत्यादि **भावना,** योषिद्दण्डपाण्डुत्वं न... ...' इति चेत् पाठस्तदा सम्यक् सङ्गच्छते ॥ ८ **धूमत्वात्** य० ॥ ९ **विधिरेव** प्र० ॥ १० **विधिरेव** प्र० ॥ ११ **तथा व्यग्नेपि** प्र० । 'तथा चाग्नेरपि' इत्यपि पाठोऽत्र स्यात् ॥

**तद्भावदर्शनानुबन्धेन हि बुद्ध्युत्पत्तिरनुमानम् । धूमवत्त्वमग्निमत्त्वानुबद्धमेवेत्यैकान्तिकग्रहणेऽनुमानं भवति, अव्यभिचारात् । व्यभिचारात्त्वनुमानाभासम्, तद्यथा वृक्षक्षुपादिवज्ज्वलनतैक्ष्ण्यादिव्यभिचारेण । तथाविधदर्शनबुद्ध्यनुबद्धमेवानुमानमपि………। तदतत्पक्षद्वयगतैकान्तमनाश्रित्य ज्ञानमनवधृतार्थमनध्यवसायो विपर्ययश्चानुमानाभासौ ।**

**व्यावृत्तेस्त्वनुमानाप्रामाण्यापत्तिः, अत्यन्ताज्ञानादनध्यवसायवत्, ग्राह्यवृत्त्यननुरोधिप्रतिपत्तेर्वा विपर्ययवत् ।**

---

गतिरपि तद्भाव[1]दर्शनविधेरेव, **तथा चान्यथा च** दीप्ति-तैक्ष्ण्यादिरूपेण तद्विरहितत्वेन च **दृष्टत्वाद् व्यभिचारात्**, नात्यन्ताभूतशीतादिव्यभिचाराद[2]सम्बद्धादगतिः, किं तर्हि ? [3]सम्बद्धव्यभिचारादेव ।

किञ्चान्यत्, **दर्शनविधेरेवा**नुमानलक्षणोपपत्तेः स एवैषितव्य इत्यत आह–**तद्भावदर्शनानुबन्धेन हि बुद्ध्युत्पत्तिरनुमान**मित्येतदनुमान[4]लक्षणम् । तद् व्याचष्टे–**धूमवत्त्व**मित्यादि, यदा 'धूमवत्त्वं प्रदेशस्याग्निमत्त्वानुबद्धमेव' इत्यैकान्तिकं ग्रहणं तदानुमानं भवति 'धूमादग्निरत्र' इति, तस्याग्नेरेकान्तेनैव ग्रहणमव्यभिचारात् । व्यभिचारात् त्वनुमानाभासम्, तद्यथा – वृक्ष-क्षुपादिवज्ज्वलनतैक्ष्ण्यादिव्यभिचारेण, यथा यदा तु 'वृक्षः क्षुपो वात्र, धूमात्' इति तदानुमानाभासं भवति, विनापि वृक्षादिना दृष्टत्वाद् व्यभिचाराद् दर्शनबलेनैव । तदुपसंहारः **तथाविधदर्शनबुद्ध्यनुबद्धमेवानुमानम[5]पी**त्यादि [6]गतार्थ एवं सन्देहानुमानाभासश्च । अनध्यवसाय-विपर्ययानुमानाभासावपि, तद्यथा–**तदतत्पक्षे**त्यादि । स चासश्च पक्षौ तदतत्पक्षौ, तयोर्द्वयम्, तद्गतमेकान्तं 'भूतमेव, अभूत[7]मेव' इत्यनाश्रित्य यथा 'अग्निरत्रैव, अग्निरत्र भवत्येव' एवमाद्यनिश्चितासन्दिग्धरूपं ज्ञानमनवधृतार्थमनध्यवसायः, विपर्ययश्चाभूते भूतप्रत्ययः, भूते चाभूतप्रत्ययः, स्थाणौ पुरुषप्रत्ययवत् । एतावप्यनुमानाभासौ । तत्परिणामाव्यवच्छेदेन [8]तथाविधदर्शन-
४५६-२ बुद्ध्यनुबद्धमेवानुमानं दृष्टवत्, तथैवानुमानाभासोऽपि ।

त्वन्मत्या **व्यावृत्तेस्त्वनुमानाप्रामाण्यापत्तिः** 'न भवति न भवति' इत्युभयतोऽप्यभवनपरमार्थत्वादर्थान्तरमभावो वाऽत्य[9]न्तमदृष्टत्वात् 'अग्निर्न भवति, उदकमनग्निः स न भवति घटः खपुष्पं वा' इति अज्ञा[10]नमेवेत्यप्रामाण्यापत्तिः पूर्वोक्तन्यायेन । कस्मात् ? **अत्यन्ताज्ञानादनध्यवसायव**दित्यप्रामाण्यम् । तथा विपर्ययवदप्रामाण्यापादनार्थमाह–**ग्राह्यवृत्त्यननुरोधिप्रतिपत्तेर्वा विपर्ययव**[11]दिति । ग्राह्यस्याग्नेर्विधिरूपेण वृत्तिरग्निभवनम्, तदनुरोधिनी न भवति या प्रतिपत्तिः सा ग्राह्यवृत्त्यननुरोधिनी, तस्याः प्रतिपत्तेर्ग्राह्यवृत्त्यननुरोधिन्या हेतोरप्रामाण्यं व्यावृत्त्य[12]नुमानस्य, पुरुषे स्थाणुप्रत्ययवदिति प्रागुक्तन्यायबलेनानिष्टापादनं गतार्थम् । तस्माद् दृष्टवदेवानुमानतदाभासौ यथादृष्टज्ञानानुबद्धत्वादिति ।

---

१ °**दर्शनेविधिरेव** प्र० ॥ २ °**संबंद्धाद**° य० ॥ ३ **संबंधव्यभि**° प्र० ॥ ४ °**लक्षणं च** य० ॥ ५ °**मपीति** य० ॥ ६ **गतार्थे एवं सन्देहानुमानाभासं च** प्र० । (गतार्थमेवं सन्देहानुमानाभासं च ?) ॥ ७ °**तमेवेत्यना**° प्र० । (तमेव वेत्यना° ?) ॥ ८ **तथाविधिदर्श**° प्र० ॥ ९ °**त्यन्तरंमनेदृष्टत्वात्** भा० ॥ १० °**नमेवोत्यप्रा**° भा० । °**नमेवोत्पत्यप्रा**° य० ॥ ११ °**यत्रवदिति** प्र० ॥ १२ °**त्यननुमानस्य** प्र० । (°त्याऽनुमानस्य ?) ॥

**एवं च तदपि न दूषणं यत् किल सम्बन्धानुमानलक्षणस्य** अस्येदं कार्यं कारणम् [वै० सू० ९।१।१८] **इत्यादेश्चोक्तं दूषणम्, उक्तविधिवृत्तिभावनत्वादनुमानस्य ।**

**लिङ्गेन न विना लिङ्गी[1] ................ ।**
**[2]लिङ्गे चेल्लिङ्गिनियमस्तैक्ष्ण्यं किमिति नेष्यते ॥**

**न यथाह—[ 'लिङ्गे लिङ्गी भवत्येव । न तु लिङ्गिनि लिङ्गं भवत्येव लिङ्गिसत्त्वेऽपि लिङ्गाभावाद् ] अयोऽग्निवत् ।' लिङ्गिनि देशे धूमो भवन्नेव पक्षधर्मो भवति ।**

**यथा वाह—लिङ्गिन्येव लिङ्गं भवति नालिङ्गिनि, तदपि न घटते, नियमेन तस्य सद्भावे तत्रैवाग्नौ लिङ्गत्वात् ।**

---

**एवं च तदपी**त्यादि । अतिदेशेन सम्बन्धानुमानलक्षणस्य '[3]सम्बन्धादेकस्मात्' [ ] इत्यादेः 'अस्येदं कार्यं कारणम्' [वै० सू० ९।१।१८] इत्यादेश्च यत् किल [4]दूषणं सम्बन्धस्याविशिष्टत्वाद् धूमादग्निद्रव्यादिवद् दीप्तितैक्ष्ण्यादीनामपि गम्यत्वम्, धूमपाण्डुत्वादिविशेषगमकत्ववद् द्रव्यसत्त्वादिसामान्यस्यापि गमकत्वम्, अग्नेर्वा गमकत्वं धूमवत्, धूमस्य वाग्निवद् गम्यत्वम्' इत्येते दोषाः प्रसक्ता [5]दृष्टवद् विधिवृत्तेरनुमानोक्तेः यथा दृष्टस्तथा सन्देहानध्यवसायविपर्ययनिश्चयकृदित्यभ्युपगमादिति । एतदपि न दूषणम्, उक्तविधिवृत्तिभावनत्वादनुमानस्येति ।

किञ्चान्यत्, 'लिङ्गे लिङ्गी भवत्येव[6]' इत्यस्याः कारिकाया '[7]योऽर्थोऽवधारणवैपरीत्येनाऽनुमानमि- ४५७-१ त्युक्तस्तस्य दूषणार्थमाहाचार्यः—**लिङ्गेन न विना लिङ्गी**त्यादि श्लोकः । **न यथाहे**त्यादि परमतप्रदर्शनं याव**दयोऽग्निव**दिति नियमविपर्ययेण सोदाहरणम् । अत्रोत्तरम्—**लिङ्गिनि देशे**ऽग्निमति **धूमो भवन्नेव पक्षधर्मो भवति,** नाभवन् असिद्धत्वादलिङ्गत्वात् । [8]आबद्धमूलत्वादिविशेषणावधृतपक्षधर्मत्वस्यैव लिङ्गत्वाल्लिङ्गिनि लिङ्गं भवत्येव वात्यादिव्युदासेन । तस्य च धूमस्याग्निगततैक्ष्ण्या[9]दिलिङ्गत्वं [10]न भवति, न दृष्टत्वाद् धूमे तस्याग्नेरदृष्टत्वात् तैक्ष्ण्यादिना च सह विधिवृत्त्येति ।

**यथा वाहे**त्यादि । 'लिङ्गि[6]न्येव' इत्यस्यावधारणस्य निरूपणम्—यदा भवति लिङ्गं तदा नालिङ्गिनि भवति उदकादौ धूम इति । तदपि न घटते, कस्मात्? **नियमेने**त्यादि, तस्य धूमस्य सद्भावे बद्धमूलत्वादिविशेषपरिच्छिन्ने **तत्रैवाग्नौ** नान्यत्रायोऽग्न्यादौ **लिङ्गत्वम्** । किं कारणम्? 'अग्निरत्र' इति अत्रशब्दस्याधिकरण[11]वाचिनोऽर्थवत्त्वे 'अत्र'शब्द[12]वाच्यैतत्प्रदेशसम्बन्धिन्येवाग्नौ [13]लिङ्गित्वात्, अन्यथाऽ[14]नुमानाभावदोषस्यो[15]क्तत्वात् । तस्मात् स एव तस्यैव लिङ्गमिति सिद्धम् । यत् पुनर्धूमगतद्रव्यत्वाद्यन्यप्रकाशनं तत्तु अस्मदिष्टदर्शनविधेरेव तथा व्यभिचारात् ।

---

१ 'लिङ्ग एवेतरत् पुनः' इत्यपि द्वितीयपादोऽत्र स्यात् ॥ २ दृश्यतां पृ० ७०२ पं० ९-१० ॥ ३ पृ० २४० पं० ११ ॥ ४ वैशेषिकमतपरीक्षावसरे **प्र**माणसमुच्चयवृत्तौ द्वितीयपरिच्छेदे विस्तरेणापादितमिदं दूषणं **दिङ्नागे**न । विस्तरार्थिभिः Gaekwad's Oriental Series, Baroda इत्यत्र प्रकाशितस्यास्मत्सम्पादितस्य वैशेषिकसूत्रस्य सप्तमे परिशिष्टे पृ० १८४–१९६ इत्यत्र स**वृत्ति**कात् स**टी**काच्च **प्र**माणसमुच्चयादुद्धृता **वै**शेषिकानुमानपरीक्षा विलोकनीया ॥ ५ **दृष्टवष्विविवृत्ते**° भा० । **दृष्टविष्विविवृत्ते**° य० ॥ ६ पृ० ६७९ पं० ४ ॥ ७ **योर्थावधा**° भा । **यार्थावधा**° य० ॥ ८ **अवंधमूल**° प्र० ॥ ९ °**क्षण्यादिलिंगं न भवति** प्र० ॥ १० 'न भवति, दृष्टत्वाद् धूमे तस्याग्नेः, अदृष्टत्वात् तैक्ष्ण्यादिना च सह विधिवृत्त्येति' इत्यपि पाठोऽत्र भवेत् ॥ ११ °**वाचिनोर्यथावत्वे** य० ॥ १२ °**वाचेतत्प्र**° प्र० ॥ १३ **लिङ्गित्वात्** प्र० ॥ १४ °**नुमानदोषाभावस्यो**° प्र० ॥ १५ पृ० ६७६ पं० ६ ॥

लिङ्गे चेल्लिङ्गिनियमस्तैक्ष्ण्यं किमिति नेष्यते ?

अदर्शनमिति चेत्, तन्न, प्रचुरहरिततृणेन्धनो धूमस्तार्णाल्पतादिविशेषानग्नेर्गमयति। बहल............[धूमो बहुतापादिविशेषान् गमयति] हस्तलगृहाङ्गणगतस्तौषस्तौषाग्निं गमयति। इति लिङ्ग एव लिङ्गिनो भावः।

अथोच्येत—'विशेषा न तु गम्यन्ते तस्यैव व्यभिचारिणः [प्र० समु० २।१८]। न, तैक्ष्ण्यादिवचनात्। तत्रापि चोक्तमेव तद्भावदर्शनविधेरेव तदिति।

न च लिङ्गिन्येव लिङ्गमिति नियमो वासगृहवत्। शक्यते च लिङ्गे धूमे नियमादग्निरिति वक्तुम्, असन्धुक्षितानग्नित्वात्।

---

किन्तु यथा च त्वयोच्यते [1]'लिङ्गे लिङ्गी भवत्येव' इति, तत्र **लिङ्गे चेल्लिङ्गिनियमः तथा चेदं दोषजातम्—तैक्ष्ण्यं किमिति नेष्यते ?** धूमत्वा[3]वधारणकारणविशेषाणां दीप्ततर-मन्दप्रकाशनादिविशेष-
४५७-२ सहचरत्वाद् धूमादग्निगतिवत् तदवधारणकारणविशेषसहचराग्निविशेषः कस्मान्नेष्यते तेभ्य एव धूमावधारणकारणविशेषेभ्यः ?।

स्यान्मतम्—**अदर्शनमिति चेत्, तन्ने**ति 'दर्शनमस्ति' इत्युच्यते। **तद्यथा प्रचुरहरिते**त्यादि, यत्र दोग्धारः पुरुषा एव दोहयन्[4]तीभिर्विरहिताः, गोकुले हरिततृणाकीर्णे नवावासे गवां मशकनिवारणार्थं हरिततृणेन्धनोऽग्निः क्रियते [5]तत्रैतद्दण्डकोक्तविशेषो धूमस्तार्णाल्[6]पतादिविशेषानग्नेर्गमयति। तथा **बहले**त्यादिना तापाभिवृद्ध्या विशेषः। **हस्तला** मृत्पात्रकाराः शिल्पिनः, तद्गृहाङ्गणगतस्तौषस्तौषाग्निं गमयतीति विशेषाणामपि लिङ्गित्वदृष्टेर्लिङ्गे धूम एव लिङ्गिनोऽग्नेर्भावः। तस्माद् नावधारणवैपरीत्येन लिङ्गलिङ्गिता, न च विशेषागम्यतेति।

[7]**अथोच्येते**त्यादि। स्यान्मतम्—मया विशेष्योक्त [8]एवादोषोऽस्य **विशेषा न तु गम्यन्ते,** के ? ये **तस्यैव व्यभिचारिण** इति। एतदपि **न, तैक्ष्ण्यादिवचनात्,** त्वया हि [10]**दीप्तितैक्ष्ण्यादयो विशेषा न गम्यन्ते** इति कारिकार्थं विवृण्वतोक्तत्वात् तैक्ष्ण्यादीनां च [11]गम्यतत्त्व[स्य] दर्शितत्वादिति।

किञ्चान्यत्, मया तत्रापि चोक्तमेव तद्भावदर्शनविधेरेव तदिति, तदपि च विशेषाणां गम्यगमकत्वं साध्यसाधनधर्मयोस्तद्भावेन दृष्टयोर्विधिरूपेण संयोगिवद् वृत्तेर्दृष्टबलेनैव न व्यावृत्त्येत्यभिहितमेव[12]। तस्मात् [2]**लिङ्गे लिङ्गी भवत्येव** इत्ययुक्तमुक्तम्। [13]**लिङ्गेन न विना लिङ्गी** इत्यादि श्लोकश्च साधूक्तः।

यदप्युक्तं 'लिङ्गिन्येव लिङ्गम्' इति, तदपि **न च 'लिङ्गिन्येव लिङ्गम्' इति नियमो**
४५८-१ **वासगृहवत्,** यथा वासगृहेऽपनीताग्निके लिङ्गिनाग्निना [14]विनापि धूमस्य दृष्टत्वादरणिनिर्मथनाव[15]स्थस्येति। शक्यते च 'लिङ्गे धूमे नियमादग्निः' इति वक्तुम्, कस्मात् ? **असन्धुक्षितानग्नित्वात्,** न ह्यसन्दीप्ते-

---

१ दृश्यतां पृ० ६७५ पं० २॥ २ पृ० ६७९ पं० ४॥ ३ °त्वाचकरणविशेषाणां प्र०॥ ४ °न्तीतिविरहिता प्र०॥ ५ तत्रैव तद्दण्ड° य०॥ ६ "°ल्पतापादि°" इत्यपि पाठोऽत्र भवेत्। तुलना–पृ० ६७३ पं० ५॥ ७ अथोच्यतेत्यादि प्र०॥ ८ एवादोषस्यापि शेषानतु य०। एवादोस्यापि शेषा ननु भा०। (एवादोषो विशेषा न तु ?) (एव दोषो विशेषा न तु ?)॥ ९ केषे तस्यैव भा०। केषा तस्यैव य०॥ १० दृश्यतां पृ० ६०६ टि० ७। प्रमाणसमुच्चयवृत्तौ 'अनेकधर्मणोऽर्थस्य न लिङ्गात् सर्वथा गतिः।२।१२।' इति कारिकार्धस्य विवरणे एतद् वाक्यं विलोक्यत इति ध्येयम्॥ ११ गम्यतत्वदर्शितत्वा° प्र०। 'गम्यत्वस्य दर्शितत्वा°' इत्यपि पाठः सम्भाव्यते॥ १२ पृ० ६८१ पं० २॥ १३ पृ० ७०१ पं० ३॥ १४ विना धूमस्य य०॥ १५ (°स्थस्य चेति ?)॥

**एवं च लिङ्गं लिङ्गिनि व्यापित्वादेव गमकत्वं भजते कृतकानित्यत्ववत् ।**
**त्वन्मतिवत् साध्यधर्मस्य लिङ्गित्वे साधनधर्मस्य लिङ्गत्वेऽपि ब्रूमः—**
**यथा लिङ्गमपि व्यापि तथा लिङ्गमप्यङ्ग्यपि ।**
**उभयं लिङ्गं लिङ्गि वा न यत् तद् गोविषाणवत् ॥**
**यथा लिङ्गमपि व्यापि संयोगिवद्वृत्तौ ............ तथा लिङ्गमप्यङ्ग्यपि ।**

---

न्धनावस्थोऽरण्यवस्थो वाग्निरधूमकः, अधूमत्वादनग्निरेव [1]**अगि रगि लगि गत्यर्थाः** [                ] इत्यङ्गनाद् गमनादग्निः । अनिन्धनो न गच्छति न दहति, [2]अगच्छन्नदहन्ननग्निरेव । भस्मच्छन्नस्यापि बाष्पोष्मपुद्गलनि[3]श्चरणात् सेन्धनत्वं सधूमत्वं च परमार्थतः तत्परिणामादग्न्यभिहतकाष्ठतृ[4]णादीन्धनानां सन्दीपनप्रज्वलनज्वालाङ्गारमुर्मुरभस्मच्छन्नोष्ममात्राद्यवस्थासु श्लक्ष्णधूमपरिणा[5]माशून्यत्वात् सर्वत्र धूमेऽग्निर्नियतः तथाग्नौ धूमः ।

एवं च कृत्वात्र प्रयोगः—लिङ्गं धूमो लिङ्गिन्यग्नौ **व्यापित्वादेव गमकत्वं भजते** विधिवृत्त्यैवेत्यर्थः । **कृतकानित्यत्वव**दिति दृष्टान्तः, यथा कृतकत्वमनित्यतां व्याप्नुवद् गमयति तथा धूमोऽप्यग्निमिति । एवं लिङ्ग [6]एव लिङ्गीत्यपि ग्राह्यम् ।

**त्वन्मतिव**दित्यादि । अस्मन्मतेन 'साध्यं साधनं च एकमेव' इत्युक्तत्वात् परस्परव्यापित्वाद् विधिरूपेणैवोभयतोऽपि गम्यगमकता न व्यावृत्त्येत्यत्र किं चित्रम् ? त्वन्मतेनापि भेदं कृत्वा साध्यधर्मस्याग्नेर्लिङ्गित्वे साधनधर्मस्य धूमस्य [7]लिङ्गत्वेऽपि ब्रूमः—**यथा लिङ्गमपि व्यापी**त्यादि श्लोकः । [8]यथोच्यते त्वया—

काम लिङ्गमपि व्यापि लिङ्गिन्यङ्गि तु तत्ततः ।
व्यापित्वान्न तु तत्तस्य गमकं गोविषाणव[9]त् ॥ [ प्र० समु० २ । २१½ ] इति ।

किमुक्तं भवति ? सत्यपि किल कृतकानित्यवत् संयोगिवद्वृत्त्याऽन्योन्यव्यापित्वे धूम एवाग्नेर्गमको ४५८-२
नाग्निर्धूमस्य, यथा 'गोत्वाद् विषाणी' इति गोत्वं विषाणित्वस्य गमकम्; न 'विषाणित्वा[10][11]द् गौः' इति विषाणित्वं गोः, गज-वृष-महिष-वराहादिषु व्यभिचारादिति । अत्रापि गम्यगमकनियमोऽस्मन्मतेनेत्येष श्लोकः—**यथा लिङ्गमपि व्यापी**ति । अस्य व्याख्या—**संयोगिवद्वृत्ता**वित्यादि प्रदेशधर्मत्वात् तस्यैव साध्यसाधनत्वोपवर्णनं प्रागुक्तमतिदिश्य **तथा लिङ्गमप्यङ्ग्यपि,** वात्यादिव्युदासेनाग्निपरिणामत्वेन बद्धमूलत्वादेरुभयलिङ्गलिङ्गिताऽस्यैव प्रागुक्ता स्मर्यताम्, को दोषः ? इति तमेव न्यायं स्मारयति । अत

---

१ दृश्यतां पृ० ६१ पं० ७ टि० ३ ॥ २ **अगच्छन्ननदहनग्निरेव** प्र० ॥ ३ **°निश्चयंरणात्** प्र० ॥ ४ **°णादीत्ववनानां** भा० । **°णादीत्वचनानां** य० ॥ ५ **°मात् सून्य°** प्र० ॥ ६ **एवं** प्र० ॥ ७ **लिंगित्वेऽपि** प्र० ॥ ८ **°मभिव्यापी°** प्र० ॥ ९ 'न यथोच्यते' इत्यपि पाठः स्यादत्र । तुलना—पृ० ७०४ पं० १३ ॥ १० दृश्यतां पृ० ६५९ पं० १० ॥ ११ **°त्वात्तेरिति** प्र० ॥

**..........अत एव च..........न यत्तद् गोविषाणवत् । विषाणं हि प्रमेयत्ववद् व्यभिचारि......इतरवदगौरव्यभिचारी—। किं कारणम् ?**

**विधेयार्थप्रचारेण यस्माद्व्याप्तिरपेक्ष्यते ।**
**लिङ्गस्य लिङ्गिनि व्याप्तिस्तस्मात् सत्येव साधनम् ॥**

**विधेयो भावः । तस्य प्रकर्षेण गतिः प्रचारोऽनुत्पिञ्जलगमनिका, न धूमसामान्याग्निमद्गतिवत् । यस्माद् व्याप्तिरेवंविधाऽपेक्ष्यतेऽस्मदिष्टा द्वैविध्येन उभयाव्यभिचारात्मिका यत्र यत्र......तस्मात् सत्येव व्याप्तिः साधनम् ।**

**धूमो यथाग्निसान्निध्यार्थविशेषणैरात्मलाभादग्निसान्निध्यं गमयति तथा**

---

**एव चे**त्यादि सहेतुकं प्रतिज्ञातं निगमयति । **नियत्तं ( न यत्तद् ) गोविषाणव**दिति, यच्छब्दो यस्मादर्थे, **तच्छब्दस्त**न्निर्देशे, यस्माद् गोविषाणवदेकतो न व्यभिचरति तस्मादुभयं [2]लिंगं लिङ्गि वेति ग्राह्यम् । तद्व्याख्या–**विषाणं ही**त्यादि असाधर्म्यदर्शनं गो-विषाणयोः कृतकानित्यत्वयोश्च गतार्थम् । प्रमेयत्ववद् व्यभिचारि विषाणित्वम् । **इतरो** धूमः, तद्वद् गौरव्यभिचारीति ।

**किं कारण**मित्थमिति चेत्, अस्मदुक्ताया व्याप्तेर्विधिरूपाया एव गम्यगमकत्वादिति । अत आह–**विधेयार्थे**त्यादि श्लोकः । अत्रापि न यथा त्वयोच्यते–[3]**प्रतिषेध्याप्रचारेण** इत्यादि । तद्व्याख्या **विधेयो भाव** इत्यादि, भावग्रहणमभावरूपाया व्याप्तेर्निराकरणार्थम् । कस्मात् ? अर्थत्वादेव । **तस्य** भावस्य, नाभावः प्रतिषेध्यः तत्राप्रचारः, स चाप्रमाणफलं भवितुमर्हति अर्थान्तरस्यात्यन्ताभावस्य चाविव-
४५९-१ क्षितत्वात् प्रागुक्तदोषसम्बन्धाच्च, **प्रकर्षेण गतिः प्रचारो** वस्तुयथाभावावगम इत्यर्थः, **अनुत्पिञ्जलगमनिके**ति तदर्थगम[4]नम् अव्यथागमनम् । वैधर्म्येण न यथा त्वदिष्टमिति दर्शयति–**न धूमसामान्याग्निमद्गतिव**दिति एकतो व्याप्तिं विषाणित्वादिकल्पां दर्शयति । यस्माद् [5]**व्याप्तिरेवंविधा** परस्परसंसृष्टाऽपेक्ष्यते गतावर्थस्य **तस्मात् सत्येव व्याप्तिः साधन**मित्यभिसम्भन्त्स्यते, 'वि'शब्दस्य द्वैविध्यार्थत्वात् । तद्दर्शयति–अ[6]स्मदिष्टा द्वैविध्येन व्याप्तिरुभयाव्यभिचारात्मिका, तस्मात् किम् ? स्फुटमेवान्वयात्मको दृष्टान्तो नोच्यतेऽस्माभिः, **यत्र यत्रे**त्यादिरुभयव्याप्तिप्रदर्शनो गतार्थो यावत् **सत्येव साधन**मि[7]त्युपसंहार इति । तस्माद् दृष्टान्तलक्षणमपि [8]साध्येनानुगमो हेतोः [ प्र० समु० ४ । २ ] इत्यादि प्रयोगनियमाभिधानात्मकमनर्थकम्, मुधा भ्रान्तं चात्र त्वे[9][ये]ति ।

**धूमो यथे**त्यादि । एवं कृत्वा यथाऽग्निसान्निध्यार्थैर्विशेषणैर्धूमात्मलाभादग्निसान्निध्य[मेवा[10]ग्नि-सान्निध्य]साधकं तथा कृतकत्वं घटादौ, घ[11]कारा-ऽकार-टकारा-ऽकारविसर्जनीयानां पूर्वस्य पूर्वस्य विनाश

---

१ तुलना–पृ० ६८० पं० १ ॥ २ **लिंगलिंगि वेति** प्र० ॥ ३ पृ० ६७७ पं० २२, पृ० ६८० पं० २ ॥ ४ **मध्यथा°** प्र० । उत्पिञ्जलगमनिका अव्यथागमनमित्यर्थः । "उत्पिञ्जलसमुत्पिञ्जपिञ्जलाभृशमाकुले ॥ ३ । ३० ॥ उत्पिञ्जयतीति उत्पिञ्जलः । समुत्पिञ्जयति समुत्पिञ्जः । पिञ्जयतीति पिञ्जलः । भृशमत्यर्थमाकुले ।"–अभिधानचिन्तामणिस्वोपज्ञवृत्तिः ॥ ५ **व्याप्तिरेवविधा** प्र० ॥ ६ **अस्मद्दिष्टा** प्र० । (अस्मदुद्दिष्टा ?) ॥ ७ **°त्युक्तपसंहारः** प्र० । (°त्युक्तोपसंहारः ?) ॥ ८ दृश्यतां टिप्पृ० १३३ पं० ९ ॥ ९ **त्वति** भा० । **त्वावि** य० ॥ १० तुलना–पृ० ७०५ ॥ ११ **घकाराकारटकारविसर्ज°** भा० । **घटाकाराकारविसर्ज°** य० ॥

**कृतकत्वमनित्यत्वसान्निध्यादात्मलाभादनित्यत्वसान्निध्यं गमयति.......... घटकृतकत्ववत् ।**

**अस्मादेव च न्यायाद् यदप्युक्तं** नाशिनः कृतकत्वेन [प्र० समु० २।२३] **इत्यादि तदप्येवमध्येयम्—**

**नाशिनः कृतकत्वेन व्याप्तेस्तत् कृतकं कृतम् ।**
**अनित्यत्वं त्वभिव्याप्त्या कृतकेऽर्थे प्रदर्श्यते ॥**

**येयम्.......स्थापितम्.........कृतकत्वस्यानित्यत्वम् ।**

**विषाणित्वेन गौर्व्याप्तो विषाणित्वं प्रसाधयेत् ।**
**गव्येवानियमात् तत्तु न गवार्थप्रसाधनम् ॥**

---

उत्तरोत्तरोत्पत्तेः कारणम्, तत एव विनाशादनित्यत्वादुत्पत्तेः कृतकत्वस्यात्मलाभादनित्यत्वसान्निध्यमेवानित्यत्वसान्निध्यं गमयतीत्युभयतो व्याप्तिः सत्येव कारणम् । शिवकादिविनाशक्रमेण एतदर्थभावना गतार्था— **अग्निसान्निध्यार्थे**त्यादि यावद् **घटकृतकत्ववदि**ति । तथा शब्देऽपि भावयितव्यं प्रयत्नानन्तरीयकानित्यत्वयोरिति ।

अस्मादेव च न्यायाद् यदप्युक्तं त्वया—नाशिनः कृतकत्वेन [प्र० समु० २।२३] इत्यादि कारिकया एकतो व्याप्तिगमकत्वप्रदर्शनार्थं तदप्येवमध्येयम्—

**नाशिनः कृतकत्वेन व्याप्तेस्तत् कृतकं कृतम् ।**
**अनित्यत्वं त्वभिव्याप्त्या कृतकेऽर्थे प्रदर्श्यते ॥**

तद्व्याख्या—**'येयमि**त्यादि यावत् **कृतकत्वस्यानित्यत्वमि**ति गतार्थं **'स्थापितम्'** इत्यनुवर्तनादिति ।

एतस्मादेव न्यायाद् योऽप्युक्तो **विषाणित्वेन गौर्व्याप्तः** [प्र० समु० २।२४] इत्यादि श्लोकः सोऽपीत्थं पठितव्यः—　　४५९-२

**विषाणित्वेन गौर्व्याप्तो विषाणित्वं प्रसाधयेत् ।**

'गोत्वाद् विषाणी' इति संयोगिवद् विधिवृत्तेः साधयेद् विषाणितां गोत्वं तत्रैव नियतत्वात् । विषाणित्वं पुनरस्मादेव न्यायाद्

**गव्येवानियमात् तत्तु न गवार्थप्रसाधनम् ।**

---

१ **विनाशोनित्यत्वा**° प्र० । (विनाशेऽनित्यत्वा° ?) ॥ २ °**सानिध्य**° प्र० ॥ ३ **एतदर्थं भा**° प्र० ॥ ४ दृश्यतां पृ० ६८० पं० ८ ॥ ५ **कारिकाया** प्र० ॥ ६ °**मव्ययम्** प्र० ॥ ७ **अनित्यत्वं त्वदभिव्याप्त्या कृतकेऽर्थे प्रदर्शिते** प्र० । (अनित्यत्व**मपि** व्याप्त्या कृतकेऽर्थे प्रदर्श्यते ?) ॥ ८ **जेयमि**° प्र० ॥ ९ **न्यायाद् योद्युक्तो** य० । **न्यायाद् द्युक्तो** भा० ॥ १० दृश्यतां पृ० ६८० पं० १० ॥

**तावद् द्वयमप्युक्तम्–अनुमानमभिधानं चाधाराधेयवद्वृत्त्या न गमयति, अत्र च पक्षे कांश्चिद् दोषानत्यदिशाम। संयोगिवद् विधिवृत्त्या गमयति, अत्र च पक्षे गुणानभ्यधाम।**

**यत् पुनर्निरुक्तीकृत्यान्वयासम्भवं व्यतिरेकासम्भवमाशङ्क्योक्तं** स्यादेतद् व्यतिरेकस्याप्यसम्भवः [ ] **इति, तद् युक्तमेवोक्तम्, अन्वयव्यतिरेकयोरभावात्। अन्वयव्यतिरेकौ हि प्रत्ययात्मकौ, न वस्तुगते तुल्यातुल्ययोर्वृत्त्यवृत्ती, विशेषस्यैव वस्तुत्वादस्य नयस्य। तत्रान्वयाभाव उक्त एव त्वया। न च सम्भवोऽस्ति सर्वावृक्षार्थव्यतिरेकस्य, आनन्त्यात्, सर्ववृक्षार्थान्वयवत्।**

---

**तावदि**त्यादि[1]रुक्तार्थोपसंहारः। **द्वयमप्युक्तम्**, अन्या[2]पोहविशिष्टार्थैकदेशान्वयदर्शनादनुमानमभिधानं चाधाराधेयवद्वृत्त्या न गमयतीत्युक्तम्, अत्र च पक्षे कांश्चिद्दो[3]षानत्यदिशाम अदीदृशाम, पाठान्तरं **संयोगिवद् विधिवृत्त्या** उभयतो व्याप्त्या **गम**[4]**यतीत्यु[क्तम्, अ]त्र च पक्षे गुणानभ्यधाम**ेत्येवं शब्देन स्मारयति।

किञ्चान्यत्, **यत् पुनर्निरुक्तीकृत्ये**त्यादि। त्वया "[5]अन्वयव्यतिरेकावर्थानुमाने द्वारम् [ ] इत्युक्त्वा गुणसमुदाये डित्थाख्येऽर्थे काण-कुण्टाद्यवयवान्वयानभिधानादन्वयासम्भवं निरुक्तीकृत्य अन्वयासम्भववद् व्यतिरेकासम्भवमाशङ्क्योक्तं **[6]स्यादेतद् व्यतिरेकस्याप्यसम्भव** इति, तद् [7]युक्तमेव त्वयोक्तम्, अस्मदुक्तसंयोगिवद्विधिवृत्तिमन्तरेणान्वयव्यतिरेकयोरभावात्। [8]तयोरेव तावद् लक्षणम्–अन्वयव्यतिरेकौ हि प्रत्ययात्मकौ, समानभवनानुवृत्तिप्रत्ययोऽन्वयः, तद्विपरीतो व्यतिरेकः, न वस्तुगते तुल्यातुल्ययोर्वृत्त्यवृत्ती त्वदुक्ते। कस्मात्? विशेषस्यैव वस्तुत्वादस्य नयस्य स्याद्वादेऽनेकात्मकत्वात्। तत्रान्वयाभाव उक्त एव त्वयाऽस्माभिश्च त्वन्मतवत्।

४६०-१ व्यतिरेकाभावोऽधुनोच्यते **न च सम्भवोऽस्ती**त्यादि। वृक्षशब्दस्य शक्तिर्नास्ति [9]सर्वानवृक्षान् व्यतिरेचयितुम्। कस्मात्? **आनन्त्यात्**, [10]आनन्त्ये हि भेदानाम् [ प्र० समु० वृ० ५।२ ] इत्यादिग्रन्थव्याख्यानन्यायवदवृक्षार्थानां घटपटादीनामानन्त्याद् व्यतिरेचनाभावे न्यायो द्रष्टव्यः। **सर्ववृक्षार्थान्वयव**दिति दृष्टान्तः, यथा सर्वे वृक्षार्था आनन्त्यात् सम्बन्धाशक्यत्वादन्वयाभावाच्चानभिधेयास्तथा बहुतरव्यावर्त्यघटपटाद्यनन्ततरत्वादव्यतिरेकः, तथा धूमस्य उदकादिसर्वानग्निव्यतिरेचने सामर्थ्याभावो वाच्यः सर्ववृक्षानन्त्यादन्वयवदिति।

---

१ °**त्यादिभक्त्यर्थौ** भा०। °**त्यादिभक्त्यार्थौ**° य०॥ २ पृ० ६८१॥ ३ °**षानतिदिशाम यदीदृशान पाठान्तरं** य०। °**षानतिदिशा यदीदृशान पाठान्तरं** भा०। ( °षानतिदिश्यादीदृशाम, पाठान्तरं ? )। '°षानत्यदिशाम, '**अदीदृशाम**' पाठान्तरम्। संयोगिवद्……' इत्यपि योजना समीचीना॥ ४ **गमयतीत्युत्र च पक्षे** भा०। **गमयतीत्यत्र च पक्षे** य०। य० प्रतिपाठोऽप्यत्र संगच्छत इति ध्येयम्॥ ५ तुलना–पृ० ६५२ पं० २॥ ६ तुलना पृ० ६५२ पं० १६॥ ७ **युक्तमेत त्वयोक्तम् अस्मादुक्त**° प्र०॥ ८ ( तयोरेवं ? )॥ ९ **सर्वान् वृक्षान्** भा०॥ १० दृश्यतां पृ० ६०७ पं० १४ पृ० ६२७ पं० ६॥

**यत्तूच्यते**—[१]अतुल्ये सत्यप्यानन्त्ये शक्यमदर्शनमात्रेणावृत्तेराख्यानम् । अत एव स्वसम्बन्धिभ्योऽन्यत्रादर्शनात् तद्व्यवच्छेदेनानुमानम् [ प्र० समु० वृ० ५।३४ ] **इति । अत्र ब्रूमः—न,**

**[२]दृष्टवद्विधिरूपेण न[३] चेल्लिङ्गं प्र[४]काशयेत् ।**
**स[५]र्वत्रादर्शनान्न स्यात् स[६]र्वथा वाऽगतिर्भवेत् ॥**

**[७]लिङ्गमपदेशः कारणं निमित्तम् [ इत्यनर्थान्तरम् ]** ......................................
**भेदाविवक्षैकत्वापादितैकत्वं सामान्यं लिङ्गं तथाभावितैकत्वस्य लिङ्गिनो गमकं तद्भावेनैव । एवं लिङ्गं गमकं लिङ्गी गम्यश्चेत्यदोषः ।**

---

अत्र परिहारस्त्वयोक्त आशङ्क्यते—**यत्तूच्यत** इत्यादि । अन्वयगतदोषाभावं व्यतिरेकगतं गुणं च दर्शयति ग्रन्थः—**अतुल्ये सत्यप्यानन्त्ये** इत्यादि । ततोऽन्यस्याभावमात्रं सामान्यतो [८]व्यतिरेचनीयं तद्भेदरूपाणि असंस्प[९]ृशता शब्देन लिङ्गेन वा । तस्माददोष इति परिहारः ।

अत्र ब्रूमः—**न, दृष्टव**दित्यादि । यदि दृष्टवद् विधिरूपेण लिङ्गं लिङ्गिनं न प्रकाशयेत् सर्वत्र लिङ्गिन्यदर्शनात् तल्लिङ्गं लिङ्गमेव न स्यात्, अगतिर्वा सर्वथा भवेत् कस्यचिदप्यर्थस्येति पिण्डार्थः ।

एतद्व्याख्या—**लिङ्गमपदेशः कारणं निमित्त**मित्यादि पर्यायकथनम् । शब्दः परार्थः, धू[१०]मादिः स्वार्थः । वाच्यवाचकसम्बन्धस्यानुमानानुमेयसम्बन्धस्य चाविशिष्टत्वादैकध्येन द्विविधस्याप्यनुमानस्य ग्रहणम् । तत्र विशेषस्यैव वाच्यत्वादनुमेयत्वाच्चार्थस्य सामान्यस्यासत्त्वा[११*]दसत्योपाधिसत्यशब्दार्थत्वं त्वयोक्तत्वात्, अस्माभिर्यथा [१२]अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते सामान्यस्यासत्त्वाद् विशेषस्यैव सत्त्वात्*, न ह्यभावो वाच्यः खपुष्पवत् । तस्य सामान्यस्यासत्त्वादेव **पूर्वमदृष्टत्वे** विशेषस्यैव **दृष्टस्य** कल्पितासत्य- ४६०-२
सामान्योपसर्जनद्वारेण वाच्यत्वाच्छब्दस्यापि तथैव वाचकत्वात् सामान्योपसर्जनोपायेन । तथानुमानेऽपि विधिः ।

त[१३]त्त्वाल्लिङ्गं शब्दो धूमादि वा कथं गमकं भवति ? उच्यते—**भेदा**नाम**विवक्ष**या सामान्यस्य ऐ[१४]कत्वादापादितं तेषामेकत्वं भेदानां यस्मिंस्तल्लिङ्गं **भेदाविवक्षापादितैकत्वं सामान्यं लिङ्गं** तद्भावापन्नो धर्मो धूम-शब्दादिः, **तथाभावितैकत्वस्य** तेन शब्द-धूमादिप्रकारेण भावितमेकत्वं शाखादिभिन्नावयववतस्तरो-

---

१ तुलना—पृ० ६५२ पं० ३ ॥ २ **दृष्टवद् विधिरूपेण यदि लिङ्गं प्रकाशयेत् । सर्वथाऽप्रतिपत्तिः स्यात् सर्वथा वा गतिर्भवेत्** ॥ [ प्र० समु० ३।१४ ] इति दिङ्नागमतनिराकरणायेयं कारिका । पृ० ४७१–१ इत्यत्र वक्ष्यमाणं टिप्पणमप्यत्र द्रष्टव्यम् ॥ ३ ( चेल्लिङ्गं न ? ) ( लिङ्गं चेन्न ? ) ॥ ४ ( प्रकाशकम् ? ) ॥ ५ 'सर्व**स्या**दर्शनान्न स्यात्' इत्यपि भवेत् पाठः, दृश्यतां पृ० ७०८ पं० १४ । ( ततः प्रकाशकं न स्यात् ? ) ( लिङ्गं न लिङ्गमेव स्यात् ? ) ( ततो न लिङ्गमेव स्यात् ? ) ॥ ६ 'सर्वथा वा गतिर्भवेत्' इत्यपि पाठः । दृश्यतां पृ० ७१७ पं० ६ ४७१–२ ॥ ७ तुलना—"हेतुरपदेशो लिङ्गं निमित्तं प्रमाणं कारणमित्यनर्थान्तरम्"—**वै० सू०** ९।२० ॥ ८ **व्यतिरेवचनीयं** प्र० । ( ततोऽन्य**त्रा**भावमात्रं सामान्यतो व्यतिरेके वचनीयं ? ) ॥ ९ °**स्पृता** भा० । °**स्मृता** य० ॥ १० **धूमादि** प्र० ॥ ११ * * एतच्चिह्नान्तर्गतो °**दसत्यो**° इत्यत आरभ्य **सत्त्वात्** इत्यन्तः पाठो य० प्रतौ नास्ति ॥ १२ दृश्यतां पृ० ६१६ पं० ३ ॥ १३ **तत्वाल्लिंगं** प्र० । ( तस्माल्लिङ्गं ? ) ( तल्लिङ्गं ? ) ( तथा लिङ्गं ? ) ॥ १४ **एकत्वादापितं** भा० । **एकत्वापितं** य० । 'एकत्वापादितम्' इत्यपि पाठः स्यात् ॥

**यदि तु न तथा प्रकाशयतीतीष्टं किन्त्वन्यापोहेन ततो नैव प्रकाशकं स्यात् सर्वस्यादर्शनात् प्रतिद्रव्यमपोह्यस्यादर्शनात् ।**

**न हि स वा भवति ततोऽन्यो वा, अदृष्टत्वात्, वन्ध्यापुत्रवत् । न च तदतुल्यमतच्छब्दमतद्रूपं तथा तथाऽदृष्टं प्रतिपत्तुं शक्यम् । अप्रतिपन्ने च तस्मिन् कस्य कथं वापोहः स्यात्?**

**अपितृत्ववत् स्यादिति चेत् । यथा [1]पितुरन्योऽपिता सर्वो व्यावृत्तिबुद्धिमात्रेण**

---

स्तापादिभिन्नै[2]कर्मवतश्चाग्नेर्लिङ्गिनश्च, वाच्य-लिङ्ग्यभेदात् प्रागुक्तन्यायेन आत्मनैवात्मनो वाचका आत्मनैवात्मनोऽनुमेयाः, तद्भावदर्शनादेव सामान्यस्य विशेषप्रतिपादनार्थत्वाच्छिबिकावाहकयानेश्वरयानवद् गमकं तद्भावेनैव, अग्नेरेव धूमत्वात् बद्धमूलादिविशिष्टतया धूमस्यैवाग्नित्वादादिमध्यान्तेषु अरण्यादीन्धनसन्धुक्षणमुर्मुराद्यवस्थधूमादिपुद्गलाग्नित्वात् । एवमुक्तन्यायेन लिङ्गं गमकं लिङ्गी गम्यश्चेत्यदोष इत्यतीतं न्यायं स्मारयति ।

**यदि तु न तथे**त्यादि परमते दोषः । यदि येन प्रकारेण दृष्ट[3]स्तेनैव प्रकारेण लिङ्गं दृष्टं तेनैव च प्रकारेण विधिना प्रकाशयतीतीष्टं न, त्वया तु किमिष्टम्? अन्यापोहेनेति । ततः किम्? **ततो नैव प्रकाशकं स्यात् ।** कस्मात्? **सर्वस्यादर्शनात्**, यथा विधेयमदृष्टं त्वन्मतेन तथा [4]व्यावर्त्यमपि किञ्चिन्न
४६१-१ दृष्टमवृक्षानग्न्याख्यम्, घटपटादिभेदानामानन्त्याद् द्रव्यं द्रव्यं प्रति **प्रतिद्रव्यमपोह्यस्यादर्शनात्** किं तद् [5]वृक्षादग्ने[6]र्थादन्यदवृक्षानग्न्याख्यम्? अदृष्टमेव भवेत् । यतश्च बुद्धेर्व्यावृत्तिरिष्टा, न ह्यदृष्टार्थम् 'अयं भवति, अयं न भवति' इत्यन्वयव्यतिरेकौ भवितुमर्हतो बुद्धेः, दृष्टानेव बुद्धिरन्वियादर्थान् तेभ्य एव च व्यावर्तेत, यथा 'देवदत्तोऽयं यज्ञदत्तो न' इत्यादि, नात्यन्तादृष्टखपुष्पवन्ध्यापुत्रादिविषया ।

एतदर्थप्रदर्शनार्थमाह–**न हि स** वृक्षोऽग्निर्वा **भवति ततोऽन्यो वा** घटादिः, **अदृष्टत्वात्, वन्ध्यापुत्रवत् ।** दृष्ट ए[7]व स वा भवति अन्यो वा ततः । **न च तेन** दृष्टेना**ऽतुल्यमतच्छब्दम्**, न स वृक्षशब्दोऽग्निशब्दो वा शब्दोऽस्य तदिदमतच्छब्दमवृक्षोऽनग्न्यादि वा । तथा न तस्य रूपं रूपमस्या**तद्रूपम्** । किं कारणम्? यस्मात् **तथा तथा** तेन तेन प्रकारेणा**ऽदृष्टं** घटपटकुड्यादिभेदप्रकारेणादृष्टत्वात प्रतिपत्तुमशक्यम् । ततश्चा**ऽप्रतिपन्ने चे**त्यादि व्याख्यातार्थभेदरूपेणाग्रहणम्, तत एवान्योऽपि नास्ति, सति चाग्रहणेऽन्यस्य चाभावात् [8]**कस्य कथं वापोहः स्यात्?** प्रागुक्तविधिना [9]'किं केन कुतोऽपोह्यते इत्यादिग्र[10]न्थोऽत्र योज्य इति ।

**अपितृत्ववत् स्यादिति चेत्**, स्यादियमाशङ्का, **यथे**त्यादि तद्व्याख्या, पितुरन्ये सर्वे पुरुषा अनाश्रितभेदरूपास्तदन्वयाहृतेऽपि दृष्टात् पितुरन्यत्वव्यावृत्तिबुद्धिमात्रेण स्वभेदानपेक्षा निरवयवा एव

---

१ दृश्यतां पृ० ४७०–१ ॥ २ (°भिन्नधर्मवत°?) ॥ ३ दृष्टः शब्दो धूमादिर्वात्र विवक्षितो भाति । (दृष्टं तेनैव?) ॥ ४ व्यावृत्त्य° य० ॥ ५ वृक्षानग्ने° भा० ॥ ६ °रर्थान्यदवृक्षा प्र० ॥ ७ एवमत्रा भवति भा० । एवमत्रान भवति य० ॥ ८ क कथं भा० ॥ ९ दृश्यतां पृ० ६४५ पं० ४ ॥ १० °ग्रन्थोक्तयोज्यः प्र० ॥

**निरवयव एव प्रतीयते तथाग्निवृक्षाभ्यामन्येऽवृक्षाज्वलनाः सर्वेऽपि व्यावृत्तिबुद्धिमात्रेण निरवयवाः प्रतीयेरन्, को दोषः ?**

**सर्वस्यादर्शनान्न स्यात् । युक्तं पितुरपितुश्च दृष्टस्य व्यक्तग्रहणोत्तरकालं पितुः पर्युदासेनान्यस्यापितृत्वं प्रतिपाद्येत, न तु पितुरेवादर्शने । स हि पितरि ............ प्रत्ययोत्पत्तिः ।**

**यथा त्विदं त्वयेष्टं** तुल्ये[1] वृत्तिरतुल्ये चावृत्तिः । तत्र तुल्ये नावश्यं सर्वत्र वृत्तिराख्येया, क्वचिदानन्त्येऽर्थस्याख्यानासम्भवात्, न हि सम्भवोऽस्ति वृक्षशब्दस्य सर्ववृक्षेषु दर्शने । नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भवः, अग्निधूमादिवत् । यद्यपि च क्वचिदस्ति डित्थादिषु सम्भवः[2] तथापि गुणसमुदायमात्रस्य काणकुण्टादेर्दर्शनासम्भवः, सत्यपि च दर्शने सर्वथाऽनुमानासम्भवः [ ] **इति तथा सर्वस्यादर्शनात् पितृकल्पस्य**[3] ............ **तदपोहस्य वा[ऽ]प्रतिपत्तिः ।**

**यदि हि स्वार्थः परार्थश्च सम्पिण्ड्य विधिना गृहीतः स्यात् तत एवं प्रतिपद्येत 'अयं वृक्षः, अयं न भवति' इति, नात्यन्ताविदितवृक्षावृक्षशब्दार्थतायाम् ।**

---

प्रतीयन्त इति दृष्टान्तस्तथाग्निवृक्षाभ्यामन्येऽवृक्षाज्वलना वृक्षज्वलनपर्युदासेनानन्ता भेदा अपि व्यावृत्तिबुद्धिमात्रेण निरवयवाः प्रतीयेरन् को दोष इति ।

अत्र दोषकुतूहलं चेद् ब्रूमः—**सर्वस्यादर्शनाद् न स्यात् । युक्तं** पितुरसदृर्शनेन विधिरूपेण दृष्टस्य अङ्गादङ्ग[4] सम्भवसि [ कौषीतकिब्रा० २७ ] इत्यादिन्यायात् स्वपुत्रस्य गुणसमुदायरूपस्य प्राणान् ४६१-२ दत्तवतः पर्युदासेनान्यस्य भ्रात्रादेः स्वजनस्य पितृविपरीतबुद्धेर्ध्यासेन[5] ग्राह्यस्य[6] 'एष पिता देवदत्तः, नेमे वसुरातादयः' इति पितुरपितुश्च व्यक्तग्रहणोत्तरकालं परजनस्य[7] चान्यस्यापितृत्वं प्रतिपाद्येतेत्येषोऽस्ति[8] न्यायः । त्वद्दर्शने पुनर्गुणसमुदायस्य **न तु पितुरेवादर्शने** 'युक्तम्' इति वर्तते न घटते पितुरेव ग्रहणासम्भवे असति वा पितरि गुणसमुदायमात्रार्थग्रहणाभिधानाभावप्रकारेणोक्तेन । **स हि पितरी**त्यादिना दर्शनविधिं पितुः पितृदर्शनाच्चापितॄणां तदितरभेदानां च कथयति दर्शनविधिं यावत् **प्रत्ययोत्पत्ति**रिति ग्रन्थेन । एषा दृष्टान्तवर्णना । दार्ष्टान्तिकां[9]समञ्जसतेदानीम् । **यथा त्विदमि**त्यादि यथा त्वयेष्टं 'तुल्ये वृत्तिरतुल्ये चावृत्तिः' इत्युद्ग्राहेण यावत् **सर्वथानुमानासम्भव** इति ग्रन्थो व्याचक्षाण एव गतः[10] परमतम् । न्यायेन त्वदुक्तेनैव **तथा सर्वस्यादर्शनात् पितृकल्पस्ये**त्यादिना दार्ष्टान्तिकवैषम्यापादनं गतार्थं यावत् **तदपोहस्य वा[ऽ]प्रतिपत्ति**रिति । त्वन्मतेन कस्यचिदेव स्वार्थस्य परार्थस्य चादर्शनादपि पितृत्वप्रत्ययाभाव एवेति पिण्डार्थः । अथवा '**सर्वस्यादर्शनात्**' इत्यादिना प्रकारान्तरेण दोषं ब्रूमः—**यदि हि स्वार्थ** इत्यादि, 'वृक्षः' इत्युक्तेऽस्मदुक्तेन न्यायेन सामान्योपसर्जनो विशेषः समस्तः शिंशपादिरभिहितः स्यात् तेनापोढश्चावृक्षः सभेदो घटपटादिः सम्पिण्ड्य 'अयमन्योऽस्माद् वृक्षात्'

---

१ तुलना पृ० ६५२ पं० २ । २ तुलना-पृ० ६६२ पं० २, पृ० ७०९ पं० १८ ॥ ३ तुलना पृ० ४७०-१ ॥ ४ **अङ्गादङ्ग संभवसि** य० । दृश्यतां पृ० ४६९ पं० ३ टि० १ ॥ ५ **रव्यासेन** प्र० ॥ ६ **ग्राह्यस्यैष्य पिता** य० । **ग्राह्यशैष्यपिता** भा० ॥ ७ 'स्वजनस्य' [ पं० १७ ] इति प्रागभिहितत्वादत्र 'परजनस्य च' इत्युक्तम् ॥ ८ ( प्रतिपद्येते° ? ) । तुलना—पृ० ७१० पं० ७ ॥ ९ °**समाजसते**° य० ॥ १० **गत पर**° य० ॥

**वृक्षशब्दादंह्रिपशब्दोऽन्यत्वादवृक्षः, तथा तदर्थः, अग्नेर्वह्न्यादिरन्योऽनग्निः। न हि कचित् ……………… । तत्र[1] सामान्यशब्दार्थेषु तावत् 'सदित्यसन्न भवति' इत्यत्र द्वयी वृत्तिः—अनङ्गीकृतार्थान्तरवृत्तिः सच्छब्दः, अङ्गीकृतार्थान्तरवृत्तिर्वा। तत्र तावदनङ्गीकृतार्थान्तरतायामपोहः केवल उच्यते। सदित्युक्ते 'असन्न भवति' इति द्विनञ्प्रयोगात् 'भवत्येव' इति सिद्धे सत्यारम्भो नियमार्थः—यो न भवति यथा वा न भवति तस्य[2] द्विविधस्याप्यसद्भवनस्यात्र सम्बन्धित्वं नास्ति।**

---

इति गृहीतः स्यात् तत एवं प्रतिपद्येत[3]—**अयं वृक्षः** अयमेव वृक्ष एव **भवति**, ततोऽन्योऽयं घटपटादि- ४६२-१ रवृक्षो वृक्षो **न भवती**ति । किं कारणम्? प्रत्यक्षत्वादुभयस्य । नात्यन्ताविदितवृक्षावृक्षशब्दतायां न चात्यन्तादृष्टवृक्षावृक्षस्वरूपतायां वा सा प्रतिपत्तिर्भवितुम्[4]अर्हति 'अयं वृक्षोऽयं न भवति' इति, खपुष्पवन्ध्यापुत्रादिवदिति ।

एतदर्थनिदर्शनार्थं दृष्टान्तमाह—**वृक्षशब्दादंह्रिपशब्दोऽन्यत्वादवृक्षस्तथा[5] तदर्थः, अग्नेर्वह्न्यादिः,** उभयत्र वा सत्त्वद्रव्यत्वादिसामान्यविशेषधर्मोऽन्योऽनग्निरवृक्षश्चेति विदितसकलवृक्षावृक्षाग्न्यनग्न्यादिशब्दार्थस्यैव तज्ज्ञानं दृष्टम् । तथाकाशशब्दादिषु ख-गगन-वियदादि-सत्त्व-द्रव्यत्वादिधर्मापेक्षं तदतत्त्वं योज्यम् ।

**न हि कचि**दित्यादि । न हि किञ्चिद्दर्शनमात्राद्वा तद्वृत्तिनि(र्नि)यमो वा भवतः, कस्मात्? व्यभिचारात्, वृक्षान्वयोऽपि[6] वृश्चकपुरुषव्यभिचाराद्[7] व्रश्चनधर्माभावव्यभिचारादवृक्ष एव । अवृक्षघटोऽपि घटमानपादप-तरु-शाखिभेदवृक्षव्यभिचाराद् वृक्षः, वृक्षो[ऽ]वृक्षो घटो[ऽ]घटश्च[8] । अन्योऽपि हि भवन्न[न]न्यो भवति पीलु-हस्ति-वृक्षादिवत्[9] सामान्य-विशेष-पर्यायशब्दार्थेभ्यः ।

तत्र[10] सामान्यशब्दार्थेषु[11] तावदुदाहरणम्—'सदित्यसन्न भवति' इति, अत्र हि द्वयी वृत्तिश्चिन्त्यते—अनङ्गीकृतार्थान्तरवृत्तिः सच्छब्दः अङ्गीकृतार्थान्तरवृत्तिर्वा स्यात्? तत्र प्रथमं तावद् व्युदस्तभेदसामान्यमात्रवृत्तिरनङ्गीकृतार्थान्तरवृत्तिः शब्दः । स कीदृश इति चेत्, तन्निरूपणार्थमाह—**अपोहः केवलो** व्यावृत्त्यर्थो निर्निबन्धन **उच्यते ।** तदुदाहरणम्—'**सत्**' **इत्युक्ते 'असद् न भवति' इति द्विनञ्प्रयोगात्** प्रकृत्यापत्तेः[12] **'भवत्येव' इति** विध्यर्थ एव ज्ञायते । ततः किं संवृत्तम्? **सिद्धे सति आरम्भो नियमार्थ** इति 'असद् न भवति' इति द्वाभ्यां प्रतिषेधाभ्यां नियम्यते विहितं सत्त्वमेव । तत् कथमिति ४६२-२ चेत्, उच्यते—**यो न भवति खपुष्पादिः यथा वा न भवति** घट-पटादिप्रकारेण तस्य द्विविधस्याप्यसद्भवनस्यात्र[13] वृक्षे सम्बन्धित्वं[14] नास्तीत्युक्तं भवति । स च [15]प्रतिषेधः । विधिप्रधानः पर्युदासस्ततोऽन्यत्र

---

१ तुलना–पृ० ७१२ पं० १ ॥ २ 'तेन द्विविधेनाप्यसता न भवितव्यम्' इत्यपि पाठोऽत्र स्यात् । तुलना–पृ० ७११ पं० २० ॥ ३ (प्रतिपाद्येत?) । तुलना पृ० ७०९ पं० १८ ॥ ४ °**पत्तुर्भवि**° य० ॥ ५ °**शब्दोऽनन्यत्वा**° य० ॥ ६ (वृक्षान्वयेऽपि?) ॥ ७ **वृश्चक**° प्र० ॥ ८ **राद्वृक्षो वृक्षो वृक्षो घटो घटश्च** भा० । °**राद्वृक्षो वृक्षो घटो घटश्च** य० ॥ ९ दृश्यतां पृ० ७१५ पं० ८ ॥ १० **तत्र** य० प्रतौ नास्ति ॥ ११ तुलना—पृ० ७१३ पं० १६ ॥ १२ **प्रवृत्त्यापात्तर्भवत्येव** भा० । **प्रवृत्त्यापांतर्भवत्येव** य० ॥ १३ °**सभवन**° भा० । °**संभवन**° य० ॥ १४ **संबंधं नास्ती**° य० ॥ १५ **प्रतिषेधो न पर्युदास**° भा० । **प्रतिषेधो विधिप्रधानः पर्युदास**° य० ॥

**इत्थं च विधिप्रधानपर्युदासात्मकासच्छब्दार्थत्यागः प्रसज्यप्रतिषेधमात्रार्थत्वादन्याभावादर्थान्तरापोहस्वार्थाभिधानलक्षणाभ्युपगमत्यागः ।**

**अथैतेभ्य एव दोषेभ्योऽङ्गीकृतार्थान्तरवृत्तिरपोह इष्यते तत इदं विघटते—सदित्यसन्न भवतीति । प्रतिस्वसत् सर्वमपि [1]घटादीति सदेवासदपि भवति इतरेतराभावादिभ्यः । असतापि हि तेन सता केनचिद् भवितव्यम्, प्रत्येकवृत्तित्वात्, यथा घट इत्यघटो न भवति वृक्ष इत्यवृक्षो न भवति ।**

---

विधिः, असच्छब्दश्च तदर्थः, इत्थं चोक्तन्यायेन असच्छब्दार्थो विधिप्रधानपर्युदासात्मकस्त्यक्तः स्यात् । स एव वृक्षो भवति सत्त्वात्, सतोऽन्यस्यासतोऽत्यन्ताभावात् प्रसज्यप्रतिषेधमात्रम[स]त् प्रसक्तं प्रतिषिद्धमित्येषोऽर्थः स्यात् । तस्मात् **प्रसज्यप्रतिषेधमात्रार्थत्वात्** ततश्च 'अयमस्मादन्यः' इत्यन्यस्याभावात् 'अन्यापोहः शब्दः' इत्यस्याभ्युपगमस्य **त्यागः** कृत इति दोषः स्यात् । किञ्चान्यत्, तत एव [2]'अर्थान्तरापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते [                    ] इत्येतस्य [3]'अर्थान्तरापोहेन स्वार्थाभिधानम्' इति लक्षणस्य त्यागः कृतः स्यात्, एषोऽप्यभ्युपगमत्यागदोषोऽपर इति । एवं तावदनङ्गीकृतार्थान्तरवृत्तिः सदित्यसन्न भवतीति सामान्यशब्दार्थेऽन्यापोहो न युक्तो विधिरेव युक्त इति ।

**अथैतेभ्य एवे**त्यादि । अथ मा भूवन्नेते पर्युदासात्मकान्यश[4]ब्दार्थार्थान्तरापोहस्वार्थाभिधानलक्षणाभ्युपगमत्यागदोषा इति तेभ्य एव भया**दङ्गीकृतार्थान्तरवृत्तिरपोह इष्यते [5]तत इदं विघटते सदित्यसन्न भवतीति** । कस्मात्? **प्रतिस्वसत् सर्वमपि घटादीति,** [6]इतिशब्दस्य हेत्वर्थत्वात् प्रतिस्वं सर्वस्य सत्त्वात्, सर्वं हि **प्रतिस्वं** प्रत्यात्म प्रत्येकमात्मना सदेवासदपि भवति, न ह्यसन्न भवति । कुतः? **इतरेतराभावादिभ्यः,** प्राक्प्रध्वंसेतरेतरसंयोगसमवायाप्रमाणसामर्थ्यादिभेदेन सदेवासद् भवति इति ४६-१३
[7]विस्तरत उत्पतद्भिरेव प्रतिपादितमस्माभिः—'घटो घटात्मना [8]सन् भवति असन्नेव पटात्मना' इत्यादि ।

अत्र प्रयोगः—**असतापि हि तेन सता केनचिद् भवितव्य**मिति प्रतिज्ञा, यो भवति येन प्रकारेण च भवति तेन द्विविधेनाप्यसता भवितव्यमित्यर्थः । कस्मात्? **प्रत्येकवृत्तित्वात्,** प्रतिस्वमात्मरूपेण वर्तमानत्वात्, [9]अथवा सत्त्वात्, यः सन् प्रत्येकं वा वर्तते सोऽसन्नपि केनचित् प्रकारेण दृष्टो भावः, यथा घटादन्यः पटो घटत्वेनासन्नेव पटत्वेन सन् दृष्ट इति तद्वदिदमपि असदेव सद् भवतीति, [10]तथा प्रत्येकवृत्तित्वादिति । [11]एवमनङ्गीकृतार्थभेदत्वे सद् भवत्येवासत् । अभ्युपगतमपि चैतत् त्वयापि, विस्मृतमधुना मया स्मार्यमेतत्—**यथा घट इत्यघटो न भवति वृक्ष इत्यवृक्षो न भवतीति** एवमाद्यन्यापोहशब्दार्थवादित्वाद् भवतः । एष सच्छब्दसामान्यार्थ उक्तः ।

---

१ 'घटादीति सदित्यसन्न न भवति' इत्यपि पाठः स्यात् । तुलना—पृ० ७१२ पं० १२ ॥ २ पृ० ५४७ पं० १,१२, टि० ९ ॥ ३ दृश्यतां पृ० ६५३ पं० १ ॥ ४ °**ब्दार्थान्तरा**° य० ॥ ५ **तत इदं विघटते २ तत इदं विघटते** प्र० ॥ ६ **इशब्दस्य** प्र० ॥ ७ **विस्तरस** भा० । (विस्तरश ?) ॥ ८ **सन्न** य० ॥ ९ **अथवा सत्त्वात्** भा० प्रतौ नास्ति ॥ १० **यथा** भा० ॥ ११ (एवमङ्गीकृतार्थभेदत्वे ?) ॥

**द्रव्यादिसामान्यशब्दार्थेष्वपि अनङ्गीकृतार्थान्तरतायां तेनैव न्यायेन भावितवदभ्युपगमत्यागः। अर्थान्तरापोहतायां प्रतिस्वसन्न्यायाद् यथायोगं योज्यं तथैव।**

**ननूच्यमानसच्छब्दवदेतत्सिद्धिः। अत्र ब्रूमः—यदि सच्छब्दोऽसच्छब्दोऽपि भवति तत एव घटशब्दाद्युदाहरणमवकाशं लभते, अन्यथा कुतोऽस्यावकाशः? सच्छब्द एव हि सन्नसच्छब्दो भवत्येव इतरथा घटस्य सतः पटाद्यसत्त्वाभावे कस्य सतः शपनाच्छब्दः स्यात् सच्छब्दः। एवमर्थतः 'सच्छब्दोऽसच्छब्दो न भवति'**

---

**द्रव्यादिसामान्यशब्दार्थेष्वपि** द्विविधा सैव, [1]अ[ङ्गीकृतान]ङ्गीकृतभेदार्थवृत्तित्वात्। **तत्र तावदनङ्गीकृतार्थान्तरतायामि**त्यादिः[2] स एव न्यायः प्राक्तनः[3] '[4]अद्रव्यं न भवति' इति [द्वि]नञ्प्रयोगाद् द्रव्यमेवेति सिद्धे सत्यारम्भो नियमार्थः, यो न भवति येन न भवतीत्यादि स एव ग्रन्थो विधिप्रधानपर्युदासात्मकाद्रव्यशब्दार्थत्यागादिदोषापादनः प्रसज्यप्रतिषेधमात्रार्थत्वादित्येतदर्थातिदेशो गतार्थो यावद् [5]**भावितवदभ्युपगमत्यागः**। द्वितीयविकल्पेऽपि **अर्थान्तरापोहताया**मित्यादि तमेव न्यायमतिदिशति—**प्रतिस्वसन्न्यायात्**, प्रतिस्वद्रव्यत्वात् सर्वद्रव्याणां [6]द्रव्यमित्यद्रव्यं न [न] भवति इतरेतराभावादिभ्य इत्यादि यथायोगं योज्यं तथैव।

४६३-२ अत्राह—**ननूच्यमानसच्छब्दवदेतत्सिद्धिः**, सिद्धं सच्छब्दमसत्स्वरूपविनिर्मुक्तं मन्यमानश्चोदयति यः [7]सच्छब्दः [स] सतः शपनादाह्वानात्, अतः शब्दाद् यथा सच्छब्द एव [8]सदर्थवाच्येव च नासच्छब्दो [9]नासदर्थवाची वा तथा सद्वस्त्वपि स्यादिति। घटशब्दादिरपि विशेषशब्दस्तदर्थश्च तथा न पटादिशब्दस्तदर्थो वा भवितुमर्हतीति। तस्मादयुक्तमुच्यते सन्नसन् भवतीति।

अत्र ब्रूमः—**यदि सच्छब्दोऽसच्छब्दोऽपी**त्यादि। नाभ्युपगच्छाम एतत् 'सच्छब्दोऽसच्छब्दो न भवति' इति, तथोदाहरणत्वासम्भवात् सच्छब्दासच्छब्दत्व एवोदाहरणत्वसिद्धेः। यदि हि सच्छब्दोऽसच्छब्दोऽपि **भवति तत एव** लोकेऽन्यापोहवादे च **घटशब्दाद्युदाहरणमवकाशं लभते, अन्यथा कुतोऽस्य** घटाद्युदाहरणस्या**वकाशः**?

तद् व्याचष्टे—**सच्छब्द एव हि सन्नसच्छब्दो** [11]**भवत्येव**, सदेव शब्दयन् घटादि पटाद्यशब्दनादसच्छब्दो भवत्येव, इतरथा घटस्य सतः पटाद्यसत्त्वाभावे सत्त्वाभावः, सत्त्वाभावात् सङ्करादिदोषा[12]च्चासत्त्वे कस्य सतः शपना[13]च्छब्दः स्यात् सच्छब्दोऽङ्गीकृतभेदार्थत्वे? तस्मादयुक्तमुक्तम् सच्छब्दवदसन्न भवति सद्वस्त्विति। एवमर्थतः 'सतः शब्दः सच्छब्दः' इत्यर्थद्वारेण 'सच्छब्दोऽसच्छब्दो न भवति' इत्ययुक्तम्।

---

१ अनङ्गीकृताङ्गीकृत° इत्यपि भवेदत्र पाठः॥ २ °त्यादि य०॥ ३ प्राक्तनो द्रव्यं न प्र०॥ ४ दृश्यतां पृ० ७१० पं० २२॥ ५ भावितत‍दभ्युप° प्र०॥ ६ दृश्यतां पृ० ७११ पं० १७॥ ७ सशब्दः प्र०॥ ८ सदवाच्येव प्र०॥ ९ नावदर्थ° प्र०॥ १० °रपि र विशेष° य०। °र विशेष° भा०॥ ११ भवत्येव° प्र०॥ १२ °दोषाच्च सत्त्वे प्र०॥ १३ °नात् सब्दः स्यात् सच्छाङ्गीकृत° भा०। °नात् शब्दः स्यात् शब्दोङ्गीकृत° य०॥

**इत्ययुक्तम् । शब्दतोऽपि चास्ति सच्छब्दोऽन्य एव । सदेर्धातोः सच्छब्दोऽप्यन्य एव । एवं द्रव्यादिशब्देषु वाच्यम् ।**

**विशेषशब्दार्थेषु तु 'घट इत्यघटो न भवति' इत्यत्रापि न न भवत्यघटः । तद्यथा आ[1]मच्छिद्रादिघटा एवाघटा अचेष्टत्वात् । घटयन् वा घटः स्यात् । तदभावादप्यघटो भवत्येव । अघटोऽपि च घटो भवति, घटते घटयति वा तन्तुतन्तुवायगवाश्वादिः ।**

**तथा प्रत्यक्षप्रसिद्धेरनन्यत्वं सिद्धं गोशब्दस्य वागादिषु वर्तमानस्य, तच्छब्द-**

---

शब्दतोऽपि च[2] 'अस्ति'सच्छब्दः [3]असेर्धातोः शत्रन्तस्य 'सत्' इति रूपसिद्धेर्यः सच्छब्दः सोऽन्य एव । सदेर्धातोः क्विबन्तस्य यः सच्छब्दः सोऽप्यन्य एव, स[4]दिप्रकृतिः सच्छब्दो न भवत्येव असिप्र[5]कृतिः सच्छब्दः । तस्माच्छब्दतोऽपि सच्छब्दो[ऽसच्छब्दो] भवत्येव न[6] न भवतीति ।

**एवमित्यादि** । यथा सच्छब्दस्य रूपसिद्धिकृतनानात्वकृते सत्त्वासत्त्वे तथा द्रव्यशब्दस्यापि ४६४-१
द्रष्टव्ये । त[7]था [8]द्रोर्विकारो द्रव्यम्, द्रोरवयवो वा द्रव्यम्, **द्रव्यं च भव्ये** [ पा० ५ । ३ । १०४ ] भवतीति भव्यं द्रव्यम्, द्रवतीति द्रव्यं द्रूयते वा, द्रवणाद् गुणानां गुणसन्द्रावो द्रव्यम्, इत्यादिव्युत्पत्त्या पृथिव्यादिस्वभेदापेक्षया च द्रव्यशब्दः सन्नद्रव्यशब्दश्च । **'द्रव्यादिशब्देषु'** इति आदिग्रहणात् पृथिव्युदकादिसामान्यशब्देष्वपि स्वभेदापेक्षेषु **वाच्य**मित्यतिदेशार्थः । एवमर्थेऽपि द्रष्टव्यम् । एवं तावद् महासामान्यापरसामान्यशब्दार्थेषु सर्वस्यादर्शनादयुक्तोऽन्यापोहः ।

**विशेषशब्दार्थेष्वित्यादि** । तुशब्दो [9]भेदाङ्गीकरणाकरणविकल्पाभावं सामान्यशब्दार्थाद् विशेषशब्दार्थेषु दर्शयति । 'घट इत्यघटो न भवति' इत्यत्रापि न [ न ] भवत्यघटो भवत्यघट इति । त[10]द्यथा–आमच्छिद्रादीति, आमघटश्छिद्रघटो न भवति, **आदिग्र**हणाच्चित्रलेप्यादिघट इत्यादयो घटा एवाघटा घटनसामर्थ्याभावादचेष्टत्वात् । [11]घटयन् वा घटः स्यात् [12]प्रयोक्तृकर्तरि, तदभावादप्यघटो भवत्येवेति । किञ्चान्यत्–अघटोऽपि च घटो भवति चेष्टार्थवत्त्वात् स्वतन्त्रः प्रयोक्ता च[13], तद्दर्शयति–**घटते घटयति वा** [14]**तन्तुतन्तुवायग[वा]श्वादि**रिति प्रकृत्यन्ताद् ण्यन्ताद्वा [15]कर्तर्यचो विहितत्वात् ।

**तथा प्रत्यक्षे**त्यादि । 'गौरित्यगौर्न भवति' इत्येतदपि न युक्तम्, यस्माद् 'गौरगौर्भवति, अगौरपि गौर्भवति' इत्येतत् प्रदर्श्यते । तत्र हि द्वयी शब्दानां गतिः–एकः शब्दोऽनेकार्थः, अनेकः शब्द एकार्थो भवति । तत्र य एकोऽनेकार्थः स चिन्त्यते । गोशब्दस्य तावद् वागादिषु वर्तमानस्य एकत्वं प्रत्यक्षप्रसिद्धम्, ४६४-२

---

१ 'आमच्छिद्रादि, अचेष्टत्वात् ।' इति 'आमश्छिद्रादि, अचेष्टत्वात् ।' इति वा मूलं चिन्त्यम् ॥ २ **वास्ति**° प्र० ॥ ३ **असद्धातोः** य० ॥ ४ **सदिति प्रकृतिः** प्र० । ( सदतिप्रकृतिः ? ) ॥ ५ °**कृतिसच्छब्दः** प्र० ॥ ६ **न भवती** भा० ॥ ७ ( **तद्यथा**–? ) ॥ ८ दृश्यतां टिपृ० १६ पं० २४—टिपृ० १७ पं० ६ ॥ ९ **भेदोंगीक**° भा० । **भेयोंऽगीक**° य० ॥ १० **तद्यथामिच्छ**(मश्छि ?)**द्रादीति आमघटच्छिद्रघटो** प्र० ॥ ११ **घटत्वा घटः** य० ॥ १२ **प्रयोक्त कर्तरि** प्र० ॥ १३ **चा** भा० ॥ १४ **तंपु तंतवाय** भा० । **तंतुतंतवाय** य० ॥ १५ **कर्तुयवो** वि° य० । **कर्तुयवों** वि° भा० । "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।"–**पा०** ३।१।१३४ ॥

**विशेषानिरूप्यत्वात् तत्सम्बन्धाशक्यत्वम्। तस्मादेकात्मत्वं गोशब्दस्य। तस्मिंश्चैकात्मत्वे शक्तिभेदात् तत्तदर्थप्रत्यायनशक्तयः प्रकल्प्याः, एकपुरुषपितृपुत्रादिवत् प्रतिसम्बन्धमन्यथावृत्तेः।**

**गदनादिविशेषनिरूप्यान्यत्वे वा गवान्तरवद् गौरेवेति गौरित्यगौर्न भवतीत्यपि न, वागादिगवानां व्यतिरेकात्।**

---

सकृदुच्चरितस्य वाग्दिग्[1]भूरश्म्यादिषु दृष्टत्वात्। अतः प्रत्यक्षप्रसिद्धेरनन्यत्वं सिद्धम्, तच्चानाशङ्कनीयम्—किमन्योऽनन्यो गोशब्द इति। तस्मादन्याय्यमन्यत्वम्। स्यान्मतम्—भिन्नार्थगतेर्गोशब्दस्यान्यत्वम्, सादृश्यात्तु '[2]स एव' इति भवतीति, एतच्च न, **तच्छब्दविशेषानिरूप्यत्वात्**, 'अयमुदात्तोऽनुदात्तः स्वरितो वाचि वर्तते, अयं दिशि' इत्यादिविशेषरूपस्यानिरूप्यत्वाद् नास्त्यन्यत्वं प्रत्यक्षस्यानुमानाद् बलीयस्त्वाच्च। ततः किम्? **ततस्तत्सम्बन्धाशक्यत्वम्**, अनिरूप्यात्मरूपाणामसतां पृथगनुप[3]लब्धनानार्थैः सह न शक्यः सम्बन्धः कर्तुम्। अकृतसम्बन्धानां च शब्दानामर्थप्रत्यायनमन्याय्यम्, म्लेच्छप्रयुक्तशब्दश्रवणादप्यर्थप्रतीतिप्रसङ्गात्। तस्मादेकात्मत्वं गोशब्दस्य। तस्मिंश्चैकात्मत्वे सति शब्दस्य शक्तिभेदात् सम्बन्धिभिरभिव्यक्तात् [4]तत्तदर्थप्रत्यायनशक्तयः प्रकल्प्याः, किमिव? **एकपुरुषपितृपुत्रादिवत्**, यथैक एव पुरुषोऽनेकशक्तिसम्बन्धिभेदापेक्षया पिता पुत्रो मातुलो भागिनेय इत्यादिव्यपदेशभाग् भवति तथा गोशब्दोऽपि वागादिषु। कस्मात्? **प्रतिसम्बन्धमन्यथा वृत्तेः**, स एव [5]सम्बन्धं सम्बन्धं प्रति [प्रतिसम्बन्धं] सम्बन्धिजनितमन्यत्वमन्यथान्यथा वर्तते। तस्मादेकत्वाद् गोशब्दस्य वागादिभिन्नार्थवाचित्वाद् गौरेव वागादिरगौर्भवति, अगौरपि गौर्भवति।

स्यान्मतम्—निमित्तभेदाद् गोशब्दा भिद्यन्ते, तानि च निमित्तानि गदन-गर्जन-गमन-गि[6]रणादीनि,
४६५-१ पृषोदराद्याकृतिगणत्वाद् रूपसिद्धेरन्यत्वमेवेति। एतच्चोक्तविधिना न युक्तमप्यभ्युपगम्य **गदनादिविशेषनिरूप्यान्यत्वे वा गवान्तरवद् गौरेव,** यथा हि गोशब्दः सास्नादिमत्येकस्मिन्नप्यर्थे गमननिमित्ते वृत्तोऽपि खण्ड-मुण्ड-शाबलेय-बाहुलेय-सौरभेयादिभेदेषु गवान्तरेषु गौरेव। **इति** [7]हेत्वर्थे, यस्मात् खण्डादिविशेषापेक्षया सामान्यशब्दो गोशब्दस्तस्मात् पूर्ववदस्मिन्नपि पक्षे **गौरित्यगौर्न** [8]**भवतीत्यपि न,** कस्मात्? **वागादिग**[9]**वानां व्यतिरेकात्**, तद्यथा 'गौः' इत्युक्ते वागादिषु न व्यतिरिच्यते गोत्वं [10]गोशब्द[वत्] वागित्युक्ते दिगादिभ्यो व्यतिरिच्यते 'वाग् न दिक्' इति। ततः 'गौरगौरपि भवति' इति गतार्थमुदाहरणम्।

---

१ °**भूरित्यादिषु** प्र०। दृश्यतां पृ० ५२४ पं० ५॥ २ **स एव भवतीति** य०॥ ३ °**लब्धा**° भा०॥ ४ **तदर्थ**° भा०॥ ५ °**वृत्तेः स्स एव** य०। °**वृत्तेस्स एव** भा०। (°वृत्तेस्तमेव?)॥ ६ °**गराणा**° प्र०। दृश्यतां पृ० ११४ टि० ६॥ ७ **हेत्वर्थो** भा०॥ ८ **भवतीत्यपि म तस्माद्** प्र०॥ ९ °**गवानं व्यतिरेकातिरेकात्** य०। (गवानां व्यतिरेकाव्यतिरेकात्?)॥ १० (गोशब्दो वा। वागित्युक्ते)?॥

**एकोत्तरशतनामत्वाचाम्भसो विषमविषं भवति अविषमपि विषं भवतीत्यादि। तथा पीलुवृक्षो वृक्षत्वादपीलुर्भवति धवादिवत्, हस्तिवत् पीलुर्वा । अतः पीलुरपीलुरपि पीलुश्च, अपीलुरपीलुरपि पीलुश्च । एवं हरिरामार्जुनादयोऽपि ।**

---

एवं तावदनेकार्थैकशब्दत्वेऽन्यापोहाभावः । अनेकशब्दैकार्थत्वेऽपि तद्यथा–**एकोत्तरशतनामत्वाच्चाम्भस** इत्यादि । 'सलिलमुदकममृतं वा जीवनं विषम्' इत्याद्येकोत्तरं शतमुदकनामानि[1] **निरुक्ते** पठ्यन्ते । ततो विषमविषं भवति, अ[2]विषमपि विषं भवति, अपानीयं ग्रन्थिसर्पादिविषं मा[3]रणात्मकं न, जीवनात्मकम् । जीवनात्मकमप्युदकादि मारणात्मकं दुष्प्रयोगादित्यादि गमनिका । **आदि**ग्रहणाद् घृतमघृतमित्यादि । तथा पीलुवृक्षः वृक्षत्वादपीलुर्भवति ध[4]वादिवत्, ह[5]स्तिवत् पीलुर्वा । हस्त्यपि पीलुरपीलुर्भवति ह[6]स्तित्वाद् मनुष्यवत् । तथा विपर्ययेणाहस्तित्वादपीलुर्भवति पीलुवृक्षः, अवृक्षत्वा[7]दपीलुर्हस्तीति । **अत** इत्युपसंहरति । पीलुरपीलुश्च पीलुश्च, अपी[8]लुरपीलुरपि पीलुश्चेति । **'एवं हरिरामार्जुनादयोऽपि** इ[9]ति च व्यापितामध्यस्य न्यायस्योदाहरणबाहु[10]ल्येन दर्शयति । [11]शक्र-सिंह-वासुदेव-मण्डूक-वानर-हयादिषु ४६५-२ हरिशब्ददर्शनाद्धरिर्हरिश्च । [12]रामो रम्यवर्ण-दाशरथि-बलदेव-जामदग्न्येषु [13]अर्जुनस्तृण-सुवर्ण-वृक्ष-पाण्डव-कार्तवीर्येषु दर्शनादित्यादि तच्चातच्च पूर्ववत् ।

---

१ "अर्णः । क्षोदः । क्षद्म । नभः । अंभः । कबन्धम् । **सलिलम्** । **वाः** । वनम् । घृतम् । मधु । पुरीषम् । पिप्पलम् । क्षीरम् । **विषम्** । रेतः । कशः । जन्म । बृबूकम् । बुसम् । तुग्र्या । बुर्बुरम् । सुक्षेम । धरुणम् । सिरा । अररिन्दानि । ध्वस्मन्वत् । जामि । आयुधानि । क्षपः । अहिः । अक्षरम् । स्रोतः । तृप्तिः । रसः । **उदकम्** । पयः । सरः । भेषजम् । सहः । शवः । यहः । ओजः । सुखम् । क्षत्रम् । आवयाः । शुभम् । यादुः । भूतम् । भुवनम् । भविष्यत् । महत् । आपः । व्योम । यशः । महः । सर्णीकम् । स्वृतीकम् । सतीनम् । गहनम् । गभीरम् । गंभरम् । ईम् । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् । **अमृतम्** । इन्दुः । हेमः । स्वः । सर्गाः । शंबरम् । अभ्वम् । वपुः । अंबु । तोयम् । तूयम् । कृपीटम् । शुक्रम् । तेजः । स्वधा । वारि । जलम् । जलाषम् । इदमित्येकशतमुदकनामानि ॥ १।१२ ॥" इति यास्क**निरुक्ते नै**घण्टुककाण्डे १०१ नामानि । "नीरं वारि जलं दकं कमुदकं पानीयमम्भः कुशं तोयं **जीवन**जीवनीयसलिलार्णांस्यम्बु **वाः** संवरम् । क्षीरं पुष्करमेघपुष्पकमलान्यापः पथःपाथसी कीलालं भुवनं वनं घनरसो यादो निवासोऽमृतम् ॥४।१३५॥ कुलीनसं कबन्धं च प्राणदं सर्वतोमुखम् ।"—**अभिधानचिन्ता०** । "शेषश्चात्र—जले दिव्यमिरासेव्यं कृपीटं **घृत**मङ्कुरम् । **विषं** पिप्पलपातालमलिलानि च कम्बलम् ॥ पावनं षड्रसं चापि वल्लूरं तुसितं पयः । किट्टिमं तदतीसारं सालूकं पङ्कगन्धिकम् । अन्धं तु कलुषं तोयमतिस्वच्छं तु काचिमम् ॥"—अभिधानचिन्तामणिस्वोपज्ञवृत्तिः ४।१३५ ॥ **२ ऽविषमपि** य० । **विषमपि** भा० ॥ **३ मरणा°** प्र० ॥ **४ धनादि°** य० ॥ ५ "द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ।"—**अमरकोश.** ३।३।१९३ ॥ ६ हस्तवत्त्वादित्यर्थः ॥ **७ °त्वात्ऽपीलु°** प्र० ॥ **८ °लुपीलुरपि** य० ॥ **९ इति व व्यापी°** भा० । **इति व्यापि°** य० । **१० °हुल्येन न दर्शयति** य० ॥ ११ "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥—**अमरकोष.** ३।३।१७४ ॥ १२ "बले रामो नीलचारुसितत्रिषु ।"—**अमरकोष.** ३।३।१४० । "रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे च सितश्वेतमनोज्ञेषु च वाच्यवत् ॥"—**विश्व.** ॥ १३ "अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद् धवले पुनरन्यवत् ॥ नपुंसके तृणे नेत्ररोगे स्यादर्जुनी गवि । उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित् ॥"—**मेदिनी** ॥

**एवं श्रुतिमात्रतत्त्वो गवादिरेकः शब्दोऽनेकार्थगमकशक्तियुक्तः एकादित्य-[तपन-प्रकाशन……अनेकार्थ]कारित्ववत्।**

**प्रत्यर्थवृत्ति……………………………………**

[1]संसर्गो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दस्यार्थव्यवच्छेदे विशेषस्मृतिहेतवः॥ [वाक्यप० २। ३१७; ३१८]

**अथोच्येत—सर्वथाऽदृष्टत्वात् स्थिते तु स्वार्थस्याभावे [2]सामान्याभावमात्रनिवृत्तिरभावभेदासंस्पर्शात्।**

**अथ स्वार्थाभावाभावमात्रत्वे कः शब्दार्थः 'वृक्ष [इत्यवृक्षो न भवति' इति] तच्छब्दधूमलिङ्गाभ्यामन्यावपोह्यावृक्षानग्नी भेदासंस्पर्शेन। तत्र च प्रसह्यप्रतिषेधार्थे तन्मात्रमेव च गम्येत। न वृक्षपर्युदासेन घटादिरर्थात्माऽन्यः कश्चिल्लभ्यते।**

---

**एवं श्रुतिमात्रे**त्यादि। अनेनोक्तन्यायेन श्रुतिमात्रतत्त्वो गवादिरेकः शब्दो[ऽप्र]तिलब्धविभागोऽनेकार्थगमकशक्तियुक्तः। किमिव? **एकादित्ये**त्यादि यावत् **कारित्ववदि**ति गतार्थः प्रोक्तार्थोपसंहारः।

स्यान्मतम्—एकस्यानेकार्थकारित्वे विभागप्रतिपत्त्यभावादव्यवच्छेदप्रसङ्ग इति। तन्न, **प्रत्यर्थवृत्ती**त्यादि यावद् **विशेषस्मृतिहेतवः** इति यथासङ्ख्यं [3]सँकरभाद्युदाहरणभावितार्थं कारिकाद्वयं निमित्तान्तरादेकार्थावच्छेदाख्यानम्। **आदि**ग्रहणाद् गौण-मुख्य-स्तुति-निन्दादिभावार्थकृतव्यवच्छेदादिति।

[4]**अथोच्येते**त्यादि। अथ परेणोच्येत—ननूक्तमेव '[5]**गुणसमुदायमात्रस्य काणकुण्टादेर्दर्शनासम्भवः, सत्यपि च दर्शने सर्वथानुमानासम्भवः सर्वप्रकारेणादृष्टत्वात्**' इति निराकाङ्क्षीकृते मूलत एव पुनरिदानीं को विचारः—दर्शनं [6]स्यात् न स्यादिति? स्थिते तु स्वार्थस्याभावे [7]सामान्यरूपस्याभावमात्रस्य निवृत्तिरभावभेदासंस्पर्शात् 'वृक्ष इत्यवृक्षो न भवति अग्निरित्यनग्निर्न भवति' इत्यवृक्षानग्न्यभावभेदासंस्पर्शेनोच्यते, न [8]वाऽभावस्य भेदाः सन्ति। तस्मात् सर्वाभावभे[9]ददर्शनेन विनैवापोहो गमक इति।

४६६-१ अत्रोच्यते—**अथ स्वार्थाभावाभावमात्रत्वे** त्वदिष्टे **कः शब्दार्थ** इति पृच्छति **वृक्ष** इत्यादि प्रत्युच्चार्यात्राप्यपोहाभावमापादयितुकामः। **तच्छब्दो** वृक्षशब्दः परार्थेऽनुमाने स्वार्थे धूमश्च [10]लिङ्गे, ताभ्यामन्या[व]पोह्यावृक्षानग्नी घटादिभेदरूपाण्यसंस्पृश्येत्यभि[11]मतोऽर्थः, तत्र च [12]प्रसह्यप्रतिषेधार्थे 'वृक्षो न भवत्यवृक्षः' इति तन्मात्रमेव च गम्येत, न च गम्यत इत्यभिप्रायः। वृक्षादन्योऽवृक्ष इति **न वृक्षपर्युदासेन घटादिरर्थात्माऽन्यः कश्चिल्लभ्यते**, अन्यस्यासत्त्वादविवक्षितत्वाच्च वृक्ष एव व्याख्येयो विवक्षित-

---

१ दृश्यतां पृ० १२७ पं० ११-१४। टिप्पृ० ५६ टि० १॥ २ तुलना पृ० ७०५॥ ३ 'सकरभा धेनुरानीयताम्' इत्यत्र 'करभ'संसर्गाद् विशिष्टा एव धेनुरवगम्यते। एवमन्यान्यप्युदाहरणानि टिप्पृ० ५६ टि० १ इत्यतोऽवसेयानि॥ ४ **अथोच्यते**° प्र०॥ ५ तुलना—पृ० ६५२ पं० १४। पृ० ६६२ पं० २ पृ० ७०९ पं० ९॥ ६ **स्यात् न** य० प्रतौ नास्ति॥ ७ तुलना पृ० ७१७ पं० २७॥ ८ **वाभावस्य** प्र०। **'चाभावस्य'** इत्यपि भवेत् पाठः॥ ९ °**दादर्शनेन** प्र०॥ १० द्विवचनान्तमिदं पदम्॥ ११ °**मतोर्थसूत्रं च** प्र०॥ १२ (प्रसज्यप्रति°?)॥

**वृक्ष एव व्याख्येयः । स स्वयमनवगतः कथमभावं विशेषयितुं शक्नुयात् 'अवृक्षो मदभावः' इति, तस्य भावेन लभ्यात्मलाभत्वात् ।**

**ततश्च वृक्ष इत्यवृक्षो न भवतीतीदमुक्तं भवेत्–योऽभावाभावः स वृक्षः । ततो घटपटादीनामभावनिवृत्तिमात्रत्वाद् वृक्षशब्दार्थवत्त्वं प्राप्तम्, कुतोऽपोहस्तेषां स्यात् ।**

**सर्वथा वा गतिर्भवेत् । सर्वदर्शननिराकाङ्क्षतायां शब्दादनुमानाद्वा वृक्षोऽग्निरिति च विशेषवचनप्रत्ययानर्थक्यं स्यात्, अभावाभावमात्रस्यैकत्वात्, भेदविषयवचनानुमानव्यवहारनिर्विषयत्वात् अभूतभेदविषयत्वात् खपुष्पादिवत् ।**

**अत्रोच्येत—नाप्यशेष........................................ । किं तर्हि ? स्वसम्बन्धि-**

---

त्वात्, स स्वयमनवगतः कथमभावं विशेषयितुं शक्नुयात् **'अवृक्षो** वृक्षाभावो **मदभावः'** इति, खपुष्पमिव वन्ध्यापुत्रः ? कस्मात् ? तस्याभावस्य भावेन लभ्यात्मलाभत्वात् स स्वयमसन् कथमसतो विशेषणं स्यात् ? उभयत्र चान्वये व्यतिरेके च घटादीनां भेदरूपाणां सपक्षासपक्षयोरसंस्पृश्यत्वेनेष्टत्वाद् न किञ्चित् केनचिद् विशेषयितुं शक्यम् ।

**ततश्चे**त्यादि । अस्मादुक्तन्यायादेष शब्दार्थः संवृत्तः, 'वृक्ष इत्यवृक्षो न भवति' इत्युक्ते इदमुक्तं भवेत् संभाव्येत **योऽभावे**त्यादि, अभावस्याभावो वृक्ष इत्युक्तं स्यात्, नान्यदभावनिवृत्तेः । ततो घटपटादीनामभावनिवृत्तिमात्रत्वाद् वृक्षतावद् वृक्षशब्दार्थवत्त्वं प्राप्तम्, कुतोऽपोहस्तेषां स्यात् ? तत्संस्पर्शो हि स्यादपोहस्ते वृक्षो न भवतीति । इत्थमपोहाभावः, अनिष्टं चैतत् ।

किञ्चान्यत्, **सर्वथा वा गतिर्भवेत्**, अभावाभावमात्रं हि वृक्षोऽग्निर्वा स्यात्, न सपक्षासपक्षभेदसंस्पर्शेन दृष्टवत् । अतः सर्वदर्शननिराकाङ्क्षता, तस्यां च सत्यां शब्दाद् वृक्षादनुमानाद्वा धूमादभावाभावमात्रवृक्षाग्नित्वादृष्टभेदासंस्पर्शादेव त्वदुक्तात् 'वृक्षोऽग्निः' इति च विशेषवचनप्रत्ययानर्थक्यं स्यात् । कस्मात् ? **अभावाभावमात्रस्यैकत्वा**दिति स्वपरार्थानुमानयोः सामान्येन हेतुः **खपुष्पादिव**दिति दृष्टान्तः । विशेष्य वा हेतुः—**भेदविषयवचनानुमानव्यवहारनिर्विषयत्वात्, अभूतभेदविषयत्वा**दिति सामान्येन । स एव दृष्टान्तः सर्वत्र, अन्तेऽभिहितत्वात् । अयमन्यो व्याख्याविकल्पः, तद्यथा विकल्पः–**सर्वथा वाऽगतिर्भवेत्** प्रश्लेषलभ्याकारत्वात् । **अगतिरज्ञानं** वृक्षशब्दोच्चारणाद् भवेत् सर्वथा । कस्मात् ? गन्तव्याभावात् । गन्तव्याभावश्चाभावाभावमात्रवृत्तित्वाच्छब्दानुमानयोरिति । ४६६-२

**अत्रोच्येते**त्यादि । स्वभेदाभावव्यावृत्तिलक्षणान्यापोहेऽनन्तत्वादसंभवसम्बन्धाभिधानादिदोषा उक्ताः । सामान्याभावाभावमात्रे सर्वैकत्वानर्थक्यापोहाभावदोषा उक्ताः । तेषां पक्षद्वयानभ्युपगमात् परिहारः–**नाप्यशेषे**त्यादि । किं तर्हि ? इति पक्षान्तरं श्रयते निर्दोषं मन्यमानः, स्वसम्बन्धिवृक्षस्याग्नेर्वा

---

१ पृ० ७०७ पं० १२ पृ० ७१९ पं० १९ ॥ २ **अवृक्षो भावो मद**° भा० ॥ ३ °**स्पृशात्वे**° प्र० ॥ ४ **सभाव्येत** य० । **सभावोत** भा० ॥ ५ (वृक्षता भवेद् ?) ॥ ६ (°**हस्तेषां** वृक्षो न भवतीति ?) । (°हस्ते वृक्षो न भवन्तीति ?) तुलना पृ० ७१८ पं० २४ ॥ ७ °**त्वाद्दृष्टभेदा**° भा० ॥ ८ °**संभवसंभवसंबंधा**° प्र० ॥ ९ पृ० ७१६ पं० २० ॥ १० पृ० ७१७ पं० २१ ॥ ११ पृ० ७१७ पं० २० ॥ १२ पृ० ७१७ पं० १७ ॥

**सामान्यधर्मेषु तदनुबन्धिभेदेषु चाविनाभाविषु दर्शनसंस्पर्शेन तद्व्यतिरिक्तेष्वदर्शनसंस्पर्शेनान्यापोहस्य प्रवृत्तत्वाददोषः ।** अत एव चेदं स्वसम्बन्धिभ्योऽन्यत्रादर्शनात् तद्व्यवच्छेदानुमानम् । यत्र दृष्टः सोऽत्र सम्बन्ध्यभिप्रेतो न त्वविनाभावित्वसम्बन्धेन । अन्यत्रादर्शनादिति अनुमेयाभावेऽदर्शनात्, अन्यथा हि वृक्षशब्दस्य धूमस्य च तस्मिन् वस्तुनि पृथिवीद्रव्याद्यभावेऽपि दर्शनं वक्तव्यं स्यात् । तद्व्यवच्छेदानुमानमिति यत्रैवादर्शनमुक्तं वृक्षाभावेऽवृक्षेऽग्न्यभावेऽनग्नौ वा ततो व्यवच्छेदानुमानम्—अ[1]वृक्षोऽनग्निर्वा न भवतीति । एवं च कृत्वा वृक्षशब्दाद् धूमाच्च द्रव्यत्वाद्यनुमानमुपपन्नं भवति । इतरथा तु द्रव्यादीनामप्यन्यत्वादतुल्य एव वृत्तेरपक्षधर्मत्वानैकान्तिकत्व-विरुद्धत्वानुमानाभावदोषाः स्युः । द्रव्यादित्यागे तदविनाभाविनः स्वार्थस्य चासम्भव एव । तस्मात् स्व[2]सम्बन्ध्यभावेऽदर्शनादनुमानस्य सिद्धिः [ ] इति ।

**एवं तर्हि यदि सत्तादीनि विशेषणानि वृक्षो भवन्ति स वा तानि भवति एकभवनात्मकोऽर्थोऽस्य वृक्षशब्दस्य तत्स्वात्मवत् ततोऽनन्यत्वात् द्रव्यादिवृक्ष-**

---

सत्ताद्रव्यत्वादिसामान्यधर्मास्तदनुबन्धिनो भेदाश्च शिंशपादयः तेष्वविनाभाविषु दर्शनसंस्पर्शेन तद्व्यतिरिक्तेषु घटादिष्वदर्शनसंस्पर्शेन जलादिषु चान्यापोहस्य प्रवृत्तत्वान्न सम्भवन्त्युभयपक्षगता दोषाः ।

अ[3]त एव चेदमित्यादि एतत्पक्षसंश्रयदर्शनार्थं भाष्यग्रन्थमाह **स्वसम्बन्धिभ्योऽन्यत्रादर्शनादि**त्यादि । अस्य व्याख्या **टीका**ग्रन्थो **य[4]त्र दृष्ट** इ[5]त्यादिः यावद**वृक्षोऽनग्निर्वा न भवती**ति गतार्थः । **ए[6]वं च कृत्वे**त्यादि याव**दुपपन्नं भवती**ति, अनेकाविनाभाविनां पृथिवीद्रव्यत्वादीनां वृक्षशब्दाद् धूमाच्चा-
४६७-१ नुबन्धिनामनुमानं युज्यते तद्दर्शनस्पर्शेन, वृक्षत्वात् पृथिवी द्रव्यं सच्च धूमत्वाच्च वृ[7]क्षवदग्निवच्चे[8]ति । **इतरथा** त्वित्यादि, अत्यन्तव्यतिरेके सम्बन्धित्वाभावेऽनुबन्धिनां द्रव्यादीनामप्यन्यत्वादतुल्ये विपक्ष एव वृत्तेरपक्षधर्मत्वानैकान्तिकत्वविरुद्धत्वानुमानाभावदोषाः स्युः । अनुबन्धिनां द्रव्यादीनां त्यागे तदविनाभाविनो वृक्षस्य स्वार्थस्यासम्भव एवेति च दोषः । ततः प्रत्याय्यप्रत्यायनयोरर्थशब्दयोरनुपपत्तिः । **त[9]स्मात् स्वसम्बन्ध्यभावे**त्याद्युक्तोपसंहारः, सम्बन्धिनोऽर्थान्तरस्य भावे दर्शनात् सम्बन्धिन एव भावाभावेऽदर्शनाच्चानुमानस्याभिप्रेतस्य सिद्धिरिति ।

अत्रोत्तरमुच्यते–**एवं तर्ही**त्यादि । **यदि सत्तादीनी**त्यादि सत्ताद्रव्यपृथिव्यादीनि विशेषणानि वृक्षस्य वृक्षादभिन्नानि सन्ति वृक्षो भवन्ति तानि वृक्ष एवेत्यर्थः, स वा वृक्षस्तानि भवति तेन तानि विशेष्यन्ते देवदत्तपाण्यादिवदेकभवनं[10]आत्मनेत्येतदापन्नम् । तस्मिन्नेकभवने प्रयोगः शाखादिमति दर्शनमित्युच्यतेऽस्या[11]र्थः स एकभवनात्मकोऽर्थोऽस्य वृक्षशब्दप्रयोगस्य । किमिव ? **तत्स्वात्मवत्** सत्ताद्रव्यत्वादिवृक्षस्वात्मवद् वृक्षस्य सत्ताद्रव्यत्वादिस्वात्मवत् एकभवनात्मवदित्यर्थः । कस्मात् ? उक्तन्यायेन **ततोऽनन्यत्वात्** तेभ्यस्तस्य तस्माद् वा तेषामनन्यत्वात् द्रव्यादिवृक्षभावदर्शनाद् वृक्षद्रव्यादिभावदर्शनादित्यर्थः ।

---

१ तुलना–पृ० ६५२ पं० २२ ॥ २ 'स्वसम्बन्ध्यभावादर्शनात्' इत्यपि भवेदत्र पाठः । भा० प्रत्यनुसारेण 'सम्बन्ध्यभावादर्शनात्' इत्यपि भवेत् ॥ ३ पृ० ६५२ पं० ४ ॥ ४ पृ० ६५२ पं० १८ ॥ ५ **इत्यादि** य० ॥ ६ पृ० ६५२ पं० २२ ॥ ७ **वृक्षवाद**° भा० । **वृक्षत्वाद**° य० ॥ ८ °**त्वान्नै**° य० ॥ ९ **तस्मात् सम्बन्ध्य**° भा० ॥ अयमपि पाठः समीचीनो भाति, व्याख्यायां 'सम्बन्धिनोऽर्थान्तरस्य' इति दर्शनात् ॥ १० ( °नात्म**ते**त्येतदापन्नम् ? ) । ११ **ऽस्योस्यार्थः** भा० ॥

**भावदर्शनाद् द्रव्याद्यभावदर्शनानभ्यनुज्ञानादतिस्फुट एवायं विधिवादस्त्वयाभ्युपगतः भवनपरमार्थार्थाभ्युपगमात् । यत्[1] कोऽपि भवति [ तद् भवनपरमार्थत एव...... ] वैधर्म्येण खपुष्पवत् । योऽप्यसौ [ व्यावर्तते सोऽपि भवनपरमार्थत एव ] भवत एव व्यावृत्तेः, देवदत्तादिव्यावृत्तिवत्, न खपुष्पादिवत् ।**

**एवं भवद्भवननिरूपणे स्थित एवार्थ; स चान्यश्चेत्यन्यापोहपरिग्रहे सर्वथा वा गतिर्भवेत् । अनुगमो विधिरेव ।**

**अथवा अनिर्वाहकैकान्तव्याख्याविकल्पप्रदर्शनात् सर्वथा वा विकल्पानां गतिरनेकान्तः स एवैवं भवेत् । विधिविकल्पोऽपि सदाद्यात्मकार्थग्रहणात् । अपोह-**

---

कस्मात् ? **द्रव्याद्यभावदर्शनानभ्यनुज्ञानात् ।** पृथिवीद्रव्यसत्त्वाभावे दर्शनं वृक्षस्य वृक्षाभावे वा पृथिव्यादिभावदर्शनं वृक्षात्मविषयं[2] नाभ्यनुज्ञायते यस्मात् तस्मादेकभवनात्मकत्वानुज्ञानादन्याभावा**दतिस्फुट एवायं विधिवादस्त्वयाभ्युपगतः**, पूर्वेष्वपि पक्षेषु स्फुट एव विधिवादः, अस्मिंस्त्वतिस्फुटः । कस्मात् ? ४६७-२ **भवनपरमार्थार्थाभ्युपगमात्**, वृक्षशब्दस्य सद्द्रव्यपृथिवीमृदादिवृक्षैकभवनात्मकः परमार्थतोऽर्थ इत्यभ्युपगतत्वात् । **यत्[3] कोऽपि भवती**त्यादिना भवनमेवेति दर्शयति यावद् **वैधर्म्येण खपुष्पव**दिति । **योऽप्यसा**वित्यादि [4]व्यावर्त्याभिमतोऽपि भवनपरमार्थत इति दर्शयति । **भवत एव व्यावृत्ते**रिति हेतुः, भवन्नेव व्यावर्तते कर्तरि षष्ठीविभक्त्युत्पत्तेः, पर्वते प्रतिहतस्य देवदत्तस्य व्यावृत्तिवत् सत एव व्यावृत्तेरित्यपादानलक्षणा पञ्चमी वा, यो भवति पर्वतादिः तस्माद् भवत एव पर्वतादेर्देवदत्तादेर्व्यावृत्तिवत् न खपुष्पादिवदिति विधिवाद एव स्फुटीकृतः ।

ततः किम् ? तत इदम् —**एवं भवद्भवने**त्यादि । इत्थं भवदेव भवतीति निरूपणेऽयमस्य स्थित एवार्थः— स चान्यश्चेत्ययमन्यापोहपरिग्रहः, तस्मिंश्च सति सर्वथा[5] वा गतिर्भवेत्, *[6]**अनुगमो विधिरेवे**त्युपसंहरति ।

**अथवा अनिर्वाहके**त्यादि, ये त्वमी व्याख्याविकल्पाः कल्पिता* विधिवादेऽन्यापोहवादे [7]चैकान्तरूपास्ते सर्वे न निर्वहन्तीत्युपेक्ष्याः । तत्प्रदर्शनात् सर्वथाशब्दो विमर्दरमणीयः परिनिष्ठितोऽतीतसर्वविचारस्यायं पिण्डार्थ इत्येतदार्ख्यानार्थः[8] । कोऽसौ पिण्डार्थ इति चेत्, उच्यते–वेति 'वा'शब्दो विकल्पार्थः, **विकल्पानां गति**रिति विकल्पानामेव ज्ञानं निश्चयः परिनिष्ठा सर्वथा घटो घटोऽप्यघटोऽपीत्यादि निश्चयः । का सा गतिः ? **अनेकान्तः, स एव एवं भवेत्** स एवानेकान्तो विमर्दक्षमो विचारपर्यवसानेऽवतिष्ठेतेत्थम्, सर्वन्यायपरिशुद्धिफलत्वादस्य सर्वविकल्पाः, सङ्क्षेपेण विधि-प्रतिषेधौ, तावुभावित्थं गृहीताविति दर्शयति–**विधिविकल्पोऽपि सदाद्यात्मकार्थग्रहणा**दिति विधिम्, **अपोहविकल्पोऽपि** ४६८-१ **स्वसम्बन्ध्यन्यप्रतिषेधार्थत्वा**दिति प्रतिषेधम्[9] । एतौ त्वद्वचनादेवापतितौ । तेन सर्वथा विकल्पानां वा गतिः स्याद्वादः । स च द्रव्यार्थपर्यायार्थावेकान्तत्यागरूपैकवाक्यमत्यात्मकौ, तयोर्विषयविभागेन शब्दार्थमुपसंहृत्य

---

१ 'यः कोऽपि' इति चेत् पाठः स्यात् तदा 'यः कोऽपि भवति [ स भवनपरमार्थत एव ]' इति मूलं सम्भावनीयम् ॥ २ **°षयन्नाभ्य°** भा० । °षयत्वाभ्य° य० ॥ ३ **व्यावृत्त्या°** प्र० ॥ ४ **यत्कोऽपि** प्र० । अत्र 'यः कोऽपि' इत्यपि भवेत् पाठः ॥ ५ पृ० ७०७ पं० १२, पृ० ७१७ पं० १८ ॥ ६ * एतदन्तर्गतः पाठो भा० प्रतौ नास्ति ॥ ७ **वैकान्त°** य० ॥ ८ **°दाख्या-नार्थः** भा० । '°दाख्यापनार्थः' इति पाठोऽप्यत्र सम्भाव्येत ॥ ९ **°ध्यम्** प्र० ॥

**विकल्पोऽपि स्वसम्बन्ध्यन्यप्रतिषेधार्थत्वात्। द्रव्यार्थतः·······स्यादनपोह इत्यादि। न च तेन [[1]सह कस्यचिद् विरोधः, आराध्यत्वाच्छरणत्वाच्च] सर्वेषामपि।**

**ततश्चेदमपि दुरधीतमेवान्यापोहवादिना—**

[[2]दृष्टवद् विधिरूपेण यदि लिङ्गं प्रकाशयेत्।
सर्वथाऽप्रतिपत्तिः स्यात् सर्वथा वा गतिर्भवेत्॥ [प्र० समु० ३।१४] इति ]

**यत्तूक्तम्—[3]अन्वयद्वारेण चानुमानेऽयं दोषः—यस्मादनुगमोऽस्ति वृक्षशब्दस्यार्थादिसहितस्य शिंशपादिष्वपि तस्मात् केवलोऽपि शिंशपावाची स्याद् वृक्षशब्दः। अथ बहुषु पलाशादिष्वपि दृष्ट इति संशयो भवति, [4]एवं सति वृक्षार्थे सत्त्वद्रव्यत्वपार्थिवत्वानि सन्ति तेषु वृक्षशब्दस्य समानत्वात् संशयः स्यात्, निश्चयस्तु दृष्टः, अवृक्षनिवृत्त्याऽर्थाभिधानवदपृथिव्यद्रव्यासत्त्वव्यावृत्त्या वृक्षाभिधानात्। [5]यथा हि वृक्षशब्दोऽवृक्षनिवृत्त्यैकार्थकोऽपार्थिवव्यावृत्त्यापि स्वार्थे वर्तते तथा वृक्षपार्थिवद्रव्यसच्छब्दा आनुलोम्येन त्रिद्व्येकार्थनिश्चयहेतवः, प्रातिलोम्येन संशयहेतव इति।**

---

दर्शयति यथासङ्ख्यम्—**द्रव्यार्थत** इत्यादि गतार्थं सोदाहरणं यावत् **स्यादनपोह इत्यादि**। आदिग्रहणादन्यदपि यत् किञ्चिदन्यैरप्युद्ग्राहितं वस्तूदाहरणमेवास्य सर्वगतासर्वगतकारणकार्यत्वादीत्यभिप्रायः। **न च तेने**त्यादि यावत् **सर्वेषामपी**ति वादपरमेश्वरत्वप्रदर्शनं स्याद्वादस्य गतार्थम्।

**ततश्चेदमपि दुरधीतमेवान्यापोहवादिना** इत्युक्तार्थानुसारेणातिदेशेन दूषयति कारिकाम्, अन्यापोहस्य केवलस्य दूषितत्वाद् दर्शनबलेनैव शब्दार्थप्रतिपत्तेर्व्याख्यातत्वात् अन्ते वा स्याद्वादोपसंहारादेकान्तविधिवाददूषणस्य प्रकाशितप्रकाशनवद् वैयर्थ्यादिति।

**यत्तूक्तमि**त्यादि यत् परेण दोषजातमुपन्यस्तं विधिवादिनं प्रति तत् परिहर्तुकामः पूर्वपक्षयति। 'वृक्षो मञ्चकः क्रियते' इत्यार्[6]थप्रकरणशब्दान्तरसन्निध्या[7]दिभिः शिंशपादिष्वपि दृष्टत्वात् सर्वत्र सर्वथा केवलोऽपि शिंशपावाची स्याद् वृक्षशब्दः, अनिष्टं चैतत् केवलस्याप्रत्यायनात्।

४६८-२ [8]**अथ बहुष्वि**त्यादि सोऽन्यापोहवाद्येव परमतमाशङ्कते। बहुषु पलाशादिष्वपि दृष्टोऽयं वृक्ष[शब्द]स्तस्मात् कतम एषां विवक्षितः स्यात्? इति सामान्यात् **संशयो भवती**त्याशङ्क्य तत्रापि दोषं ब्रूयादन्यापोहवादी [9]**एवं सती**त्यादि, वृक्षार्थे सत्त्वद्रव्यत्वपार्थिवत्वानि दृष्टानि, तेषु निश्च[10]यो दृष्ट इत्यनैकान्तिकमेतत्। केन पुनर्न्यायेनेति चेत्, [11]अवृक्षनिवृत्त्याऽर्थाभिधानवदपृथिव्यद्रव्यासत्त्वव्यावृत्त्या वृक्षाभिधानाद् व्यावृत्तिबलेनेति। अस्य च न्यायस्य गुणोपचयवर्णनम्—**यथा हि वृक्षे**त्यादि गतार्थं यावत् **संशयहेतव** इति।

---

१ दृश्यतां पृ० ४३६ पं० ३, १८–२१॥ २ पृ० ७०७॥ ३ तुलना–पृ० ६५२ पं० २३॥ ४ 'एवं सति वृक्षार्थे सत्त्वद्रव्यत्वपार्थिवत्वादिषु कस्मान्निश्चयो भवति' इत्यपि मूलं स्यादत्र। दृश्यतां पृ० ७२१ पं० १४॥ ५ 'यथा हि वृक्ष-[पार्थिवद्रव्यसच्छब्दा आनुलोम्येन त्रिद्व्येकार्थनिश्चयहेतवस्तथा प्रतिलोम्येन] संशयहेतवः' इत्यपि पाठोऽत्र भवेत्॥ ६ पृ० ६५२ पं० २३। दृश्यतां पृ० १२७ पं० ११–१४, टिपृ० ५६ टि० १॥ ७ °ध्यादिभिः **शिंशपादिभिः शिंशपादिष्वपि** प्र०। अत्र °**दिभिः शिंशपादिभिः शिंशपा**° इति पाठो द्विर्भूतः प्रतीयते॥ ८ तुलना–पृ० ६५२ पं० २४॥ ९ तुलना—पृ० ६५२ पं० २४॥ १० **निश्चयो न दृष्ट** य०॥ ११ तुलना–पृ० ६५३ पं० १२॥

**अत्र ब्रूमः—गुणदोषाभिमानस्ते स्वपक्षरागात् । अन्वयद्वारेण चानुमानेऽयं गुणः—दृष्टबलेनैवार्थादिभिः सह शिंशपादिषु वृक्षशब्दस्य दृष्टत्वान्निश्चयो भवति केवलात् संशयो यथादर्शनमनुमानप्रवृत्तेः । एवमेव च वृक्षार्थ[भवनेन विना वृक्षो न भवतीति वृक्षशब्दात् तद्भवनं यथा प्रतीयते तथा पार्थिवद्रव्यसत्त्वानि प्रतीयन्ते, तैर्विना ] वृक्षभवनस्यैवादर्शनात् । विधिरूपेण दर्शनसामर्थ्येनैव च वृक्षपार्थिवद्रव्यसच्छब्दा आनुलोम्येन त्रिद्व्येकार्थनिश्चयहेतवः, प्रातिलोम्येन संशयहेतवः । एवं गम्यताम्........................ ।**

**यदप्यनियतशिंशपं गम्यते तत्रापि विशेषादर्शनादगतिर्विशेषदर्शनाद् गतिः । यथा अविभातैकदेश........तथा वृक्षशब्दात्........संशयः, तद्भावदर्शनन्यायवत् ।**

---

वयं त्व[त्र] ब्रूमः—**गुणदोषाभिमानस्ते स्वपक्षरागा**दिति । व्याख्या—**अन्वयद्वारेण**[1] *[2]**चानुमानेऽयं गुण** इत्यादि, दृष्टबलेनैव हि अर्थ-प्रकरण-विशेषणादिभिः सह शिंशपादिषु दृष्टत्वान्निश्चयो भवति, तैर्विना *[3]न दृष्टत्वात् केवलात् संशयः, किं कारणम् ? यथादर्शनमनुमानप्रवृत्तेः । विशेष ऍवार्थादिरपि[4] शिंशपादिवत्, विशेषादर्शनादेव पलाशाद्यपि । वृक्षशब्दसामान्यात् संशयो भवति अदृष्टत्वाद् विशेष-विरहितस्य । निश्चयस्तु विशेषसहितस्य दृष्टत्वात् । यदप्युच्यते—सत्त्व-द्रव्यत्व-पार्थिवत्वादिषु कस्माद् निश्चयो भवति ? इति, तत्रापि दृष्टबलादेव, **एवमेव च वृक्षार्थे**त्यादि यावद् **वृक्षभवनस्यैवादर्शना**दिति एतदुक्तं भवति—यथा वृक्षः स्वार्थभवनेन विना न भवतीति वृक्षशब्दात् तद्भवनं प्रतीयते तथा पार्थिव-द्रव्यास्तित्वैर्विना वृक्षत्वस्याभवनाद् वृक्षत्वभवनप्रतीतिवत् पार्थिव-द्रव्य-सत्त्वानि प्रतीयन्ते तैर्विना तस्यैवा-दर्शनादिति । यदपि च वृक्षशब्दात् पार्थिव-द्रव्य-सत्त्वत्र्यर्थगतिः पार्थिवशब्दाद् द्रव्य-सत्त्वद्व्यर्थगतिः ४६९-१
द्रव्यशब्दात् सत्त्वगतिः प्रातिलोम्येन[5] सदाद्यानुलोम्येन चोत्तरेषु पूर्वस्मात् संशय इति तदपि विधिरूपेण दर्शनसामर्थ्येनैव च **वृक्षपार्थिवद्रव्यसच्छब्दा आनुलोम्येने**त्यादि तत्प्रदर्शनं गतार्थं यावत् **संशयहेतव** इति दर्शनस्यैव निश्चय-संशयहेतुत्वात् ।

**एवं गम्यता**मित्यादिरुक्तोपसंहारो तु[6][य ? ]दर्थप्रकरणादिसहिताद् वृक्षशब्दाच्छिंशपावृक्षत्वतत्त्वाद्[7] धवादिभ्योऽर्थेभ्योऽन्यस्माच्छिंशपादिशब्दाद् विशेषात्मकादिव विशेषदर्शनादेवेति ।

**यदप्यनियतशिंशप**[8]मित्यादि । योऽयं वृक्षशब्दोच्चारणे कदाचिच्छिंशपाया गतिः कदाचित् तद-गतिरित्यनियमः स विशेषादर्शनादगतिः विशेषदर्शनाद् गतिः । तत्र निदर्शनम्—**यथा अविभातैकदेशे**-त्यादि धूमविषयं प्राग्वर्णितं[9] दर्शनं संशयाय, विशिष्टं[10] तु निश्चयायेति दृष्टान्तः । दार्ष्टान्तिकोऽर्थः—**तथा वृक्षशब्दादि**त्यादि यावत् **संशयः** । केन पुनर्न्यायेनैतदेवम् ? इति तद् व्याचष्टे—**तद्भावदर्शनन्याय-वत्**, यथोपवर्णितं प्राग् [11]देश एवाग्निधूमात्मकस्तद्भावेन दृष्टो विधिना आत्मानमेवात्मना साधयती[12]त्यादि स एवात्रापीति ।

---

१ °**द्वारेणा** य० ॥ २ * * एतदन्तर्गतः पाठो य० प्रतौ नास्ति ॥ ३ **नष्टत्वात्** य० ॥ ४ **अर्थादिः**-अर्थप्रकरणलिङ्गादिः ॥ ५ **आतिलो**° प्र० ॥ ६ अत्र कश्चित् पाठः खण्डितः प्रतीयते ॥ ७ **वृक्षतत्त्वाद्** भा० ॥ ८ °**तसंशयमित्यादि** य० ॥ ९ **प्राग्वर्णनं** य० ॥ १० °**यायाविशिष्टं** प्र० ॥ ११ **देश वाग्नि**° य० ॥ १२ °**त्यादिः** प्र० ॥

**एवं वृक्षत्वस्य पृथिवीत्वादिभिस्त्रिभिः पृथिव्या द्रव्यसत्त्वाभ्यां द्रव्यस्य सत्त्वेनानुलोम्येन तथा दर्शनात् प्रातिलोम्येन तथाऽदर्शनाच्च निर्णयसंशयौ ।**

**अथ मन्येत—तावेतौ न युक्तौ दर्शनादुभयतोऽपि अविशेषो निश्चय एव वा स्यात् । मन्मते तु युक्तौ, अतुल्यत्वात् स्वार्थाभावे वृत्त्यवृत्त्योः । संशयहेतवस्तावद् वृक्षादिशब्दाः, शिंशपादिस्वार्थाभावेऽपि पलाशादौ वृत्तेः । निश्चयहेतवस्तु वृक्षावयवान् व्याप्नुवन्तस्तदनुबन्धिनश्चार्थान्, स्वार्थाभावेऽवृत्तेः ।**

**न दर्शनस्यैवोत्सर्गापवादभूतत्वाद् वस्तुनोऽतुल्यत्वात्, स्थाणुपुरुषोर्द्ध्वत्वसामान्यशकुनिनिलयनवस्त्रसंयमनविशेषदर्शनवत् ।**

**ननूक्तम्—अवृक्षादावदर्शनात्** [1]तद्व्यवच्छेदानुमानं स्वार्थाभिधानम् [प्र० समु० वृ० ५ । ३४] **इति । एवं च सति क्व तद् दर्शनम् ?**

---

**एवं वृक्षत्वस्ये**त्यादि [2]प्रकृतोपसंहारः, शिंशपादिविशेषेषु पृथिव्यादिसामान्येषु च तुल्यमप्यनेकत्र [3]वृत्तं वृ[क्ष]त्वं स्वार्थेन सहैव वृत्तेः पृथिवीत्वादिभिर्गम्यते त्रिभिरानुलोम्येन पृथिवी-द्रव्य-सत्त्वैः पृथिवी, द्रव्य-सत्त्वाभ्यां द्रव्यं, [4]सत्त्वे त्वेकमेव आनुलोम्येन तथा दर्शनात् । सत्त्वाद्युत्तरोत्तरसंशयस्तु प्रातिलोम्येनादर्शनादेव तथेति यावद् **निर्णयसंशया**विति गतार्थः ।

४६९-२ **अथ मन्येते**त्यादि परमतमाशङ्कते । तावेतौ निश्चयसंशयौ न युक्तौ दर्शनादुभयतोऽपि वृक्षदर्शनस्य धव-शिंशपयोरविशेषो निश्चय एव वा स्यात् । मन्मते पुनरन्यापोहे स्वार्थाभावे [वृत्तेः] संशयो युज्येत अवृत्तेश्च निश्चयः, कस्मात् ? **अतुल्यत्वात् स्वार्थाभावे वृत्त्यवृत्त्योः**, ते हि स्वार्थाभाववृत्त्यवृत्ती यथासङ्ख्यं संशयनिश्चयहेतू । तद् व्याचष्टे—संशयहेतवस्तावद् वृक्षादिशब्दाः शिंशपादिस्वार्थाभावेऽपि पलाशादौ वृत्तेः, सदादिशब्दाश्च द्रव्यादिस्वार्थाभावेऽपि गुणादौ वृत्तेः संशयहेतवः । निश्चयहेतवस्तु वृक्षावयवाञ्छाखादीन् व्याप्नुवन्तः पार्थिवमृद्द्रव्यत्वादींश्चानुबन्धिनोऽर्थान् स्वार्थस्याभावे न वर्तन्ते, ततस्ते व्यावृत्तिबलेनैव निश्चयहेतव इति ।

एतच्च **न, दर्शनस्यैवोत्सर्गापवादभूतत्वात्**, वृक्षभवनदर्शनमेव हि पलाशशिंशपादिषूत्सर्गेण प्रवृत्तं [संशयाय] शिंशपाभवननियतमपवादभूतं निश्चयाय । कस्मात् ? **वस्तुनोऽतुल्यत्वात्**, वस्त्वेव हि विशिष्टमतुल्यं शिंशपापलाशाख्यं परस्परतः, तदुपकारित्वात् सामान्यवृक्षभवनस्य [5]सामान्यादुपसर्जनात् इत्युक्तन्यायत्वात् । किमिव ? **स्थाणु-पुरुषे**त्यादि दृष्टान्तो यावद् **दर्शनव**दिति यथा [6]ऊर्द्ध्वत्वं सामान्यं 'स्थाणुः स्यात् पुरुषः स्यात्' इति संशयहेतुः, शकुनिनिलयनं 'स्थाणुरेव' इति निश्चयहेतुर्विशिष्टत्वात्, वस्त्रसंयमनं वा 'पुरुष एव' इति, तथैव वृक्षशिंशपादिष्वपि दर्शनादेव ।

४७०-१ अत्राह—**ननूक्त**मित्यादि । वृक्षादेरभावो हि अवृक्षादि, तत्रैवादर्शनम्, ततो [7]व्यवच्छेद्यमानं यत् तदवृक्षादि न भवतीति तदेव स्वार्थाभिधानमिति । एवं च सति क्व तद् दर्शनं यत् त्वयेष्टम् ? [8]यतो

---

१ दृश्यतां पृ० ६५० पं० २० ॥ २ प्रकृतोपसंहारो गतार्थ इति वक्ष्यमाणेन सम्बन्धः ॥ ३ **वृत्तं वृत्वं** भा० । **वृत्तं वृत्तं** य० ॥ ४ **सत्वे त्वेकमेव** प्र० । (सत्त्वेकमेव ?) ॥ ५ पृ० ६१४ पं० ४ ॥ ६ **ऊर्द्ध्वत्वसामान्यं** भा० ॥ ७ **'व्यवच्छेदानुमानम्'** इति पाठोऽत्र सम्यग् भाति, तुलना–पृ० ६५० पं० २० ॥ ८ **ततो** भा० ॥

**नन्वदर्शनाद् दर्शनस्यैव सिद्धिरेवम् । यदि दर्शनं नाभ्युपगम्यते वृक्ष इत्यत्रावृक्षाभाव एवोक्तः स्यात् तत इदमदर्शनमेवावृक्षे । तत्रावृक्षस्यैवाभावः, कुतस्तददर्शनमवृक्षस्य वृक्षदर्शनेनैव व्याप्तत्वात् । तस्माद् दर्शनमेवैवं सिध्यति ।**

**अपितृवदवृक्षादर्शनं व्यतिरेक इति चेत्, न उक्तवत् । व्यवस्थाकारि…… स्थिते हि वृक्षे दर्शने त्ववृक्ष इति स्यात् । स तु तव कदा……… तच्च नेष्यत एव ।**

**विधिप्राधान्ये तु पृथिवीत्वाद्युत्तरभवनं वृक्षभवनविज्ञानविध्यापाद्यं तदात्म-**

---

दर्शनोत्सर्गापवादाभ्यां वस्तुनोऽतुल्यत्वात् संशयनिश्चयाविषयेयाताम्, तत्तु नास्ति दर्शनम् । वयं ह्यानन्त्यव्यभिचारादिदोषान् दर्शन[१]पक्षेऽपेक्ष्यादर्शनसाधनार्थ[म]वृक्षाद्यभावो वृक्षादिशब्दार्थ इति कल्पयामो दर्शनस्यैवाभावात् तद्दोषासंस्पर्शाददर्शनमात्रस्याभिन्नत्वादिति ।

अत्रोच्यते–[२]**नन्वदर्शना**दित्यादि । ननु दर्शनस्यैव सिद्धिरेवम् अदर्शनस्यादर्शनात् । तद् व्याचष्टे–यदि दर्शनमन्वयो विधिर्नाभ्युपगम्यते वृक्ष इत्यत्रावृक्षस्याभाव एवोक्तः स्यात्, न वृक्षो नाम कश्चित् स्यात् । ततः किम् ? तत इदमदर्शनमेवावृक्षे, व्यतिरेक एवेत्यर्थः । ततश्चाभावमात्रमेव खपुष्पादीत्यादि[३]प्रागुक्तवन्न किञ्चिदुक्तं स्यात् 'अवृक्षाभावो वृक्षः' इत्यभावमात्रत्वात् । तत्रावृक्षस्यैवाभावो वृक्षीभूतत्वात् सर्वस्यावृक्षाभावस्य कुत[४]स्तददर्शनमवृक्षस्य वृक्षदर्शनेनैव व्याप्तत्वात् ? वृक्षदर्शनबलादेव चावृक्षादर्शनसिद्धिः, [५]वृक्षदर्शनाच्च 'अयं वृक्षः, अयं घटादिरवृक्षः' इति सिद्धिः, नादृष्टे । तस्माद् दर्शनमेवैवं सिध्यति नादर्शनमिति ।

**अपितृवदवृक्षादर्शनं व्यतिरेक इति चेत्** । स्यान्मतम्–'पितुरन्योऽपिता [६]सर्वः' इत्यादिप्रागुक्तवददर्शनमिति । एतच्च **न, [७]उक्तवत्** पि[८]तृकल्पस्य दर्शनं स्यादत्रापि, न चेत् प्रागुक्तवदेवानुपपत्तिः, प्रत्यक्षदर्शनबलेन हि 'अयं वृक्षः, अयमन्योऽस्माद् घटादिरवृक्षः' इति व्यवस्थिते विधिना दृष्टेऽन्यापोहलक्षणम- ४७०-२
दर्शनं स्यात्, नान्यथेति । एतदर्थप्रदर्शनो ग्रन्थः–**व्यवस्थाकारी**त्यादि यावत् **स्थिते हि वृक्षे** विधेये **दर्शने त्ववृक्ष इति स्यात्** विधिना दर्शनान्वये सति सिध्यत्येतदिति दर्शयत्येष ग्रन्थः । व्यावृत्तिपक्षे त्वनिष्टापादनम्–**स तु तव कदे**त्यादि यावत् **तच्च नेष्यत एव** त्वयेति विभक्तिपरिणामाद् । घटादिभ्यो व्यावृत्तौ सत्यां वृक्षादिसिद्धिः तत्सिद्धौ [९]घटादिव्यावृत्तिसिद्धिरित्यनवस्था परस्परतः स्यात् । [१०]सा मा भूदिति दर्शनं व्यवस्थापकमेषितव्यं विधिना [११]व्यावर्त्यव्यावर्तकयोर्वृक्षादिसदाद्यवृक्षाद्यसदाद्योरिति ।

कथं पुनर्विधिप्राधान्ये तद्दोषाभावः ? उच्यते–**विधिप्राधान्ये तु पृथिवीत्वाद्युत्तरे**त्यादि साधनं यावत् **स्वात्मव**दिति । वृक्ष-पृथिवी-द्रव्य-सन्तो वृक्ष-शिंशपा-कुब्ज-कुसुमित-मूल-स्कन्ध-शाखादयश्च वृक्षादयः पूर्वे चोत्तरे च भावा विधिना दृष्टाः, पार्थिवभवनं वृक्षभवनविज्ञानविध्यापाद्यमेव वृक्षात्मकत्वात्

---

१ °पक्षेऽपक्षादर्शन° य० ॥ २ नन्वनादित्यादि य० ॥ ३ तुलना–पृ० ७१६ ॥ ४ °स्तद्दर्शं° प्र० ॥ ५ वृक्षावृक्षदर्शं° य० ॥ ६ पृ० ७०८ पं० ६ ॥ ७ पृ० ७०९ पं० ३ ॥ ८ पृ० ७०९ पं० १० ॥ ९ पटादिव्यावृत्तिसिद्धि° भा० । पटादिव्यावृत्त्यसिद्धि° य० ॥ १० सामान्यभूदिति प्र० ॥ ११ व्यावृत्त्यव्यावृत्तकयो° भा० । व्यावृत्त्यव्यावृत्तकयो° य० ॥

कत्वात् ततोऽनन्यत्वाद् वृक्षस्वात्मवत्। तथा वृक्षादिपूर्वभवनं शिंशपाद्युत्तरभवनविज्ञानविध्यापाद्यं तदात्मकत्वात् ततोऽनन्यत्वाद् वृक्षमूलादिवत्।

व्यावृत्तिप्राधान्ये तु दृष्टवत् पार्थिवत्वाद्यसिद्धौ वृक्षो नैव वृक्षः स्यात् पार्थिवत्वेनासिद्धत्वात् तोयवत्। तथा पार्थिवं द्रव्यत्वेनासिद्धत्वात् पार्थिवं नैव स्यात्, गुणवत्। एवं द्रव्यं न द्रव्यं स्यात् सत्त्वेनासिद्धत्वात् खपुष्पवत्। तथा सदपि न सत्, द्रव्यादित्वेनासिद्धत्वात्।

---

ततोऽनन्यत्वाद् वृक्षस्वात्मवत्, वृक्षात्मकत्वं च पार्थिवत्वादीनां पूर्वमापादितं मूलाद्युत्तरभवनानां[1] चेत्यतस्तदेकात्मकत्वसिद्धौ सत्यां साधनस्य साधीयस्त्वम्। तथा पृथिवीभवनमेव द्रव्यभवनम्, द्रव्यभवनमेव सद्भवनमिति। **तथा वृक्षादिपूर्वे**त्यादि साधनं तद्विपर्ययेण उत्तरभवनधर्मापादनम्, तदनतिरिक्तात्मकत्वात् ततोऽनन्यत्वात्, वृक्षमूलादीति[2] दृष्टान्तः। शिंशपाद्युत्तरभवनविज्ञानविध्यापाद्यो वृक्षः, तदात्मकत्वात्, मूल-स्कन्ध-पलाशादिधर्मात्मना वृक्ष एव यथा भवन् दृष्टस्तथा शिंशपाद्यात्मना वृक्ष एव भवतीति। एवं विधिरूपेण दृष्टवदेवानुमानं विधिप्राधान्ये युज्यतेऽभिधानं च।

४७१-१ त्वन्मते **व्यावृत्तिप्राधान्ये तु** दोषः। तद्यथा–**दृष्टवत् पार्थिवत्वाद्यसिद्धौ** पार्थिवद्रव्यसदेकात्मकभवनमेव वृक्षभवनमनिच्छतोऽस्मन्मतं ते **वृक्षो नैव वृक्षः स्यात् पार्थिवत्वेनासिद्धत्वात् तोयवत्**, यथा तोयं पार्थिवत्वेनासिद्धं वृक्षो न भवति एवं वृक्षोऽपि वृक्षो नैव स्यात्। **तथा पार्थिवं द्रव्यत्वेनासिद्धत्वात् पार्थिवं नैव स्यात्, गुणवत्**, यथा गुणस्य द्रव्यत्वेनासिद्धत्वादपार्थिवत्वं तथा पार्थिवस्यापि अपार्थिवत्वं स्यात्। **एवं द्रव्यं न द्रव्यं स्यात्, सत्त्वेनासिद्धत्वात्, खपुष्पव**दिति। पार्थिवद्रव्यसत्त्वासिद्धयोऽसिद्धा इति चेत्, न, व्यावृत्तिप्राधान्येऽन्यत्वात् स्वार्थानुबन्धिभेदानामपि[3] व्यावृत्तत्वात् स्वार्थाभावाभावशब्दार्थत्वात्[4]। प्रसिद्धिविरोधदोष इति चेत्, तवैव व्यावृत्तिप्राधान्याभ्युपगमाद्दोषो न ममेति। **तथा सदपि न सत्, द्रव्यादित्वेनासिद्धत्वात्** 'खपुष्पवत्' इति वर्तते। एवं पूर्वं[5] पूर्वं नात्मरूपभाक् स्यात्, उत्तररूपेणाभूतत्वात्, अग्निवदिति यथावद् गतार्थमनिष्टापादनम्।

यदप्युक्तम्–

गुणत्व[6]-गन्ध-सौरभ्य-तद्विशेषैरनुक्रमात्।
अद्रव्यादिव्यच्छेद एकवृद्धयोत्पलादिवत्॥ [ प्र० समु० २। १४ ]

इति व्यावृत्तिप्राधान्ये गुणवत्त्वादिभिरद्रव्यादिव्यच्छेद एकवृद्ध्या युज्यते।

---

१ °भावनानां प्र०॥ २ '°मूलादीनि' इत्यपि पाठोऽत्र स्यात्॥ ३ °नुवत्विभेदा° प्र०। °नुवर्तिभेदा° इत्यपि स्यादत्र पाठः॥ ४ °शब्दार्थत्वाभावात् य०॥ ५ पृ० ७२७ पं० १२ 'तदपि' इत्यनेनास्यान्वयः॥ ६ सवृत्तिके **प्रमाणसमुच्चये** द्वितीये स्वार्थानुमानपरिच्छेदे दिङ्नागेन यदभिहितं तदत्र भोटभाषान्तरतः संस्कृते परिवर्त्योपन्यस्यते—

अनेकधर्मणोऽर्थस्य न लिङ्गात् सर्वथा गतिः।
अनुबन्धिव्यवच्छेद इतर(एवान्य ?)स्मात् प्रतीयते॥ २।१२½॥

वह्नेर्दीप्तितैक्ष्ण्यादयो यावन्तो विशेषास्ते सन्तोऽपि धूमेन न गम्यन्ते व्यभिचारात्। ये पुनरनुबन्धिनो यदभावेऽग्निर्न भवति तेषां द्रव्यत्वगुणत्वादीनामद्रव्यादिभ्यो व्यावृत्तिरेव प्रतीयते, यथाग्नेरनग्नितो व्यावृत्तिमात्रं स्वसम्बन्धानुरूप्यात् प्रतीयते,

तथाहि—अयमनग्नौ सर्वत्र न दृष्टः, अन्यत्र च दृष्टः ।

**गुणत्वगन्धसौरभ्यतद्विशेषैरनुक्रमात् ।**
**अद्रव्यादिव्यवच्छेद एकवृद्ध्योत्पलादिवत् ॥ २।१३½ ॥**

तत्र गुणत्वेन अद्रव्याद् गन्धत्वेनापार्थिवादद्रव्याच्च सौरभ्येणासुरभिसाधारणात् सौरभ्यविशेषेणानुत्पलादेर्व्यवच्छेद एकैक-वृद्ध्या क्रियते । अन्यथा

**दृष्टवद् विधिरूपेण यदि लिङ्गं प्रकाशयेत् ।**
**[1]सर्वत्राप्रतिपत्तिः स्यात् सर्वथा वा गतिर्भवेत् ॥ २।१४½ ॥**

यदि च यथा धूमोऽग्नौ दृष्टस्तथोत्तरकाले प्रकाशयति कदाचिदपि नैव प्रकाशयेत् । यथानग्नौ सर्वत्र न दृष्टस्तथा सर्वत्राग्नावपि न दृष्टः । यदि च यथा दृष्टस्तथा प्रकाशयति [तथा सति] दीप्तितैक्ष्ण्यादयो विशेषा अपि गम्येरन् । यस्मात् सामान्यरूपेणैवानग्नि-प्रतिषेधेन प्रकाश्यते तस्माद् विधिनापि तदेवास्य रूपं दृष्टमिति प्रतीयते न विशेषरूपम् ।

**सामान्यं यद्यपि भवेदाश्रयाणामदर्शनात् ।**
**ततोऽन्यत् तद् न दृश्येत, भेदो वैकत्र दर्शनात् ॥ २।१५½ ॥**

अग्नित्वं [2]तावदग्नितोऽन्यत् सामान्यं नास्ति । सत्त्वेऽपि तद्दर्शनस्य न सम्भवः, सर्वेषामाश्रयाणामदर्शनात् । द्वित्वादीनाम-नेकसाधारणानामाश्रयाग्रहणे[ऽ]ग्रहणं दृष्टम् । कस्यचित् सादृश्यवादिनः [3]सादृश्यस्यापि न । अथ सामान्यमेकाश्रयग्रहणेऽपि समस्तं गृह्यते तथा सति आश्रयवद् नाना स्यात् । यथा चानुमेयं केनचिद्दर्शन गम्यते

**तथाङ्गं येन रूपेण लिङ्गिनं नातिवर्तते ।**
**तेनैवानेकधर्मापि गमयेदितरैर्न तु ॥ २।१६½ ॥**

धूमोऽपि धूमत्वपाण्डुरत्वादिना येनांशेनाग्निं न व्यभिचरति तेनैव गमयति, न द्रव्यत्वादिभिः, व्यभिचारात् । आह च—

**गम्यन्ते तेऽपि लिङ्गेन ये लिङ्गिन्यनुबन्धिनः ।**
**विशेषा न तु गम्यन्ते तस्यैव व्यभिचारिणः ॥ २।१७½ ॥**
**लिङ्गानुबन्धिनस्त्वर्था गमयन्ति न लिङ्गिनम् ।**
**व्यभिचाराद् विशेषास्तु प्रतीताः प्रतिपादकाः ॥ २।१८½ ॥** इत्यन्तरश्लोकौ ।”

—PSV[1] c. ed. D. ed. पृ० ३० b–३१ a, N. ed. पृ० ३० b–३१ a। PSV[2] N. ed. पृ० ११४ b–११६ a, P. ed. पृ० ११३ । दृश्यतां पृ० ६७४–६७५ ।

अस्य **जिनेन्द्रबुद्धिना** रचिता **विशालामलवती** टीकापि भोटभाषानुवादात् संस्कृते परिवर्त्योपन्यस्यते—**अनुबन्धि-व्यवच्छेद** इति । अनुबन्धिना सम्बन्धिना येनांशेनाग्निः प्रतीयते तस्य द्रव्यत्वादेः विपक्षादन्यस्माद् व्यवच्छेदो व्यावृत्तिः प्रतीयते । के पुनरनुबन्धिनो विशेषा इति चेत्, **यदभावेऽग्निर्न भवती**त्यादि । ननु धूमस्य प्रकाशकत्वाद् 'यदभावे धूमो न भवति' इति वक्तव्यम्, कुत एवमुच्यत इति चेत्; अयमेवार्थोऽनेन प्रकारेणोक्त इति न दोषः । तथाहि—यदभावेऽग्निर्न भवति तदभावे धूमोऽपि न भवत्येव । अथवा ये सम्बन्धिन इति धूमस्यैवानुबन्धिन इति योज्यम् । ये धूमस्यैवानुबन्धिनस्तानेव दर्शयितुमाह–**यदभावे** इत्यादि । यदभावेऽग्निर्न भवति त एव धूमस्यानुबन्धिनः । अनुबन्धिनामन्यस्माद् व्यावृत्तिः प्रतीयत इत्यत्रोदाहरणमाह—**यथाग्नेरनग्नितो व्यावृत्तिमात्र**मित्यादि । कस्माद् व्यावृत्तिमात्रं गम्यते न विशेष इत्याह—**स्वसम्बन्धानुरूप्या**दित्यादि । अयं कारको हेतुः, न लिङ्गम् । **तथाहि—अय**मिति तत्सम्बन्धानुरूप्यमाह । **अनग्नौ सर्वत्र न दृष्ट** इत्यनेन व्यावृत्तेः प्राधान्यं विपक्षे सर्वत्रादर्शनेन कथयति **अन्यत्र च दृष्ट** इति **च**शब्देन क्वचिददर्शनमपीति द्योतनेनान्वयाप्राधान्यम् । एवं यस्मादन्वय उपचरितो व्यावृत्तिस्तु मुख्यः सम्बन्धः स च सामान्येनैव सम्भवति न विशेषेण तस्मात्

1 **'सर्वत्रादर्शनान्न स्यात्'** इति पाठो **विशालामलवत्या**मादृतो भाति ॥ 2 तावदग्नावन्यत् PSV[2] ॥ 3 'न सम्भवः' इत्यर्थः ॥

तदानुरूप्याद् व्यावृत्तिद्वारेण 'अत्राग्निरेव, नानग्निर्भवति' इति अनग्नितो व्यावृत्तिमात्रं प्रतीयते न विशेषः । यथा चाग्नित्वेन सम्बन्ध एवं द्रव्यत्वगुणित्वादिभिरपीति तेषामप्यद्रव्यत्वादिभ्यो व्यावृत्तिरेव प्रतीयते । व्यावृत्तिद्वारेणैव हेतुर्गमक इत्यत्र हेत्वन्तरमाह—**गुणत्व-गन्ध-सौरभ्य-तद्विशेषै**रित्यादि । **एकवृद्ध्ये**ति एकैकवृद्ध्येत्यर्थः । **गुणत्वेन अद्रव्यादि**ति 'इदं द्रव्यं गुणत्वात्' इति गुणत्वेनाद्रव्यव्यवच्छेद उत्पलादौ क्रियते । तथाहि—तत् सर्वत्राद्रव्ये न दृष्टम्, द्रव्ये दृष्टम् । अत्राद्रव्यव्यवच्छेद आद्ये न वृद्धिरेकस्मिन् । यदपेक्षया गन्धेनैकवृद्ध्या व्यवच्छेदः क्रियते तत्प्रदर्शनार्थं 'गुणत्वेन अद्रव्यात्' इत्युक्तम् । अत एव गुणत्वस्याप्येकवृद्ध्या व्यवच्छेदं प्रति अङ्गभावोऽस्ति । यदि तेनाद्रव्यव्यवच्छेदो विधीयते तर्हि गन्धेनैकवृद्ध्या व्यवच्छेदः क्रियते, नान्यथा । तथा च कारिकायां द्वन्द्वसमासान्तत्वेन गुणत्वशब्दस्याविरोधः पदान्तरेण तुल्यसामर्थ्यात् । **गन्धत्वेनापार्थिवादद्रव्यत्वाच्चे**ति 'इदं पार्थिवं द्रव्यं च गन्धत्वात्' इति अपार्थिवादद्रव्याच्च व्यवच्छेदः क्रियते । **सौरभ्येण असुरभिसाधारणा**दिति सौरभ्येण पूर्वाभ्यामसुरभिसाधारणाच्च व्यवच्छेदः क्रियते । गन्धविशेषसुरभिसाधारणं सामान्यं सुरभिसाधारणम्, यद् न सुरभिसाधारणं तत् तथोक्तम् । गन्धाभाव इत्यर्थः । **सौरभ्यविशेष** उत्पलादौ गन्धविशेषः । एवमद्रव्यादिव्यवच्छेद एकैकवृद्ध्योत्पलादिषु गुणत्वादिभिः क्रियमाणो दृष्टः । स कथम्? यदि विपक्षाद् व्यावृत्तिद्वारेण हेतुर्गमकः, अन्यथा न युज्यते । दृष्टवद् विधिद्वारेण सर्वत्र सर्वेषां द्रष्टॄणां निर्विशेषत्वात् समाना प्रतीतिः स्यात् । तस्मात् व्यावृत्तिद्वारेणैव हेतुर्गमक इत्यभ्युपगन्तव्यम् । ये तन्नेच्छन्ति तान् प्रत्याह—**दृष्टव**दित्यादि । दृष्टेन तुल्यं दृष्टवत् । यथा पूर्वं सम्बन्धकाले लिङ्गमुपलब्धं तथा यदि प्रकाशयेदित्यर्थः । विधिरूपेण 'अग्निरत्र भवति' इति, न व्यतिरेकरूपेण 'अत्राग्निरेव, नानग्निः' इत्येवम् । **सर्वत्रादर्शनात्** प्रकाशनं **न स्या**दिति विज्ञेयम्, 'प्रकाशयेत्' इत्यस्य प्रकृतत्वात् **यदि च यथाग्नौ दृष्ट** इत्यादि । यद्येवमभ्युपगम्यते विधिवादिना 'यस्मादग्नावेव धूमो दृष्टः, नानग्नौ, तस्मात् प्रत्याययति' इति, तथा सति प्रतिषेधद्वारेणैव प्रकाशयेत् । तस्मात् तेनैवमभ्युपगन्तव्यं 'यस्मादग्नौ दृष्ट एव, नादृष्टः, तस्मात् स तं गमयति' इति । ततश्च नैव प्रकाशयेत् । यस्मात् स सर्वत्राग्नौ न दृष्टः, देशावस्थादिभिन्ने सर्वत्राग्नौ दर्शनस्यासम्भवात् । **यदि चे**ति दोषान्तरमाह । यदा धूमोऽग्नौ दृष्टस्तदा दीप्त्यादिविशेषाणामन्यतरेण युक्त एव दृष्टः । ततश्च तेऽपि प्रकाश्येरन् । तथा च न । तस्माद्दर्शनमात्रमनुमेयप्रतीतेर्न कारणम्, तद्भावेऽपि तदभावादिति । ननु प्रतिषेधवादिनापि दर्शनमिष्यत एव, तथाहि—कार्यत्वेनाविनाभावित्वाद् धूमो हुतभुजो हेतुः, कार्यकारणभावश्च दर्शनादर्शनाभ्यां स[हि]ताभ्यां सिध्यति न केवलाददर्शनादिति चेत्, उच्यते—**यस्मा**दित्यादि । एतद् दर्शयति–यस्माद् धूमेनाग्निः सामान्यरूपेण प्रकाश्यते, न दीप्त्यादिविशेषरूपेण, तस्मात् कार्यकारणभावसिद्धये **विधिनापि तदेवास्य रूपं दृष्टमिति** कार्यकारणव्यपदेशसिद्धेः कारणत्वेन **प्रतीयते, न विशेषरूप**मित्याशयः । दीप्त्यादिविशेषदर्शनं कार्यकारणव्यपदेशसिद्धेर्न कारणम्, तदभावेऽपि धूमदर्शनात् ।............................स्यादेतत्—सामान्यमेकमेव वस्तु व्यक्तिषु ताभ्यो भिन्नं ताभ्योऽभिन्नं वास्ति । तस्य च प्रतिव्यक्ति सर्वात्मना परिसमाप्तत्वादेकस्यामेवाग्निव्यक्तौ दर्शनमुपपद्यते ततः '**सर्वत्रादर्शनात्** प्रकाशनं **न स्यात्**' इत्येतन्न युज्यत इति, उच्यते—**सामान्यं यद्यपी**त्यादि । **यद्यपी**त्यनेन 'तदभाव एव, तथाप्यभ्युपगम्य दोष उच्यते' इत्येतद् दर्शयति । **अग्नित्वं तावद् नास्ती**त्यादि । यदि व्यक्तिभ्योऽन्यत् सामान्यं स्यात् [ तथा सति ] बुद्धौ प्रतिभासेत, न चास्ति प्रतिभासः ।······यद्यनन्यत् तथापि व्यक्तिवत् तत् सामान्यमेव न स्यात् । तथाप्यभ्युपगम्य तद्दर्शनासम्भवं साधयितुमाह—**तत्सत्त्वेऽपी**त्यादि । यदनेकसाधारणमगृहीतसमस्ताश्रयं तद् द्रष्टुं न शक्यते, यथाऽगृहीतसमस्ताश्रयं द्वित्वादिकम्, अग्नित्वमपि तथेति व्यापकविरोधः । **सादृश्यस्यापि ने**ति आश्रयादभिन्नत्वात् सादृश्यस्य भेदेनोपन्यासः । अत्रापि स एव प्रयोगो वक्तव्यः । अथैकग्रहणेऽपि समस्तं गृह्यते तथा सति तस्य प्रत्येकं सर्वात्मना परिसमाप्तत्वाद् गुणवद् नानात्वं स्यात् ।······अनेकत्वाच्च तत् सामान्यमेव न स्यात् आश्रयवत्, सामान्यस्यैकत्वेनेष्टत्वात् । **तथे**त्यादि ।······अङ्गं लिङ्गमुच्यते । **नातिवर्तत** इति न व्यभिचरतीत्यर्थः । **अनेकधर्मापी**ति सामान्यविशेषधर्मैः । **धूमत्व-पाण्डुरत्वादिने**ति·········। **न द्रव्यत्वादिभि**रिति ।······उक्तार्थमेव संग्रहश्लोकाभ्यां सुखेन प्रतिपादनाय **गम्यन्ते तेऽपि लिङ्गेने**ति । तेऽपि अनुबन्धिनो द्रव्यत्वादयो गम्यन्ते······। **लिङ्गानुबन्धिनस्त्वर्था** इति अविशिष्टा द्रव्यत्वादिसामान्यधर्माः । **विशेषास्त्वि**ति धूमत्वादयः । ते चाविशिष्टद्रव्यत्वादिसामान्यापेक्षया विशेषा इत्युच्यन्ते, न त्वसाधारणरूपापेक्षया ।"—VT. D. ed. पृ० १०० a–१०२ b, P. ed. पृ० ११२ a–११५ b ॥

**दृष्टानुवृत्तेः .................. ॥**

**दृष्टानुवृत्तेरेव नादृष्टावच्छेदादानुलोम्यान्निश्चयः प्रातिलोम्याद्वा संशयः । यतस्तत्र तुल्येऽन्यत्वे शुक्लत्वाद् गुणे निश्चयो न द्रव्यकर्मणोः, तयोश्चापोहो न सत्त्वगुणयोः ।**

**तत्रानुबन्धितत्त्वदर्शनान्नैवान्यत्वमिति चेत्, शुक्लं तर्हि नीलाद्यपि स्यात्, रूपादनन्यत्वात्, शुक्लगुणस्वरूपवत् । एवमेव [ रूपं रसाद्यपि स्याद् गुणादनन्यत्वाद्, गुणस्वरूपवत्, ........... ] द्व्यणुकाद्यपि । द्व्यणुकमुत्क्षेपणादि रूपादि च स्यादाश्रितत्वात् । संशयो न स्यात् शौक्ल्यैकात्म्यात् ।**

---

व्यावृत्तिप्राधान्ये तु—

[1]दृष्टवद् यदि सिद्धिः स्याच्छौक्ल्यरूपगुणाश्रितात् । ४७१-२
क्रमवत् प्रातिलोम्येऽपि द्वि[2]त्र्येकार्थगतिर्भवेत् ॥ [ प्र० समु० ३ । ४४ ] [3]इति ।

तदपि **दृष्टानुवृत्ते**रित्यादि श्लोकः, क्रमेण [2]द्वित्र्येकार्थगतिवत् प्रातिलोम्ये [2]द्वित्र्येकार्थगतिर्न भवति तथा दर्शनाददर्शनाच्चेति । तद्व्याख्या--दृष्टानुवृत्तेरेव नादृष्टावच्छेदात् नादृष्टा[न]नुवृत्तेरानुलोम्याद् निश्चयः प्रातिलोम्याद्वा संशयः । कस्मात् ? यतस्तत्र तुल्येऽन्यत्वे शुक्लत्वाद् गुणे निश्चयो द्रव्य-कर्मणोर्नेति, तयोश्चापोहो न सत्त्व-गुणयोः । शौक्ल्य-रूपादीनामैकात्म्याद् निश्चयः, दर्शनादेव चैकानेकात्मभ्यामाश्रित-गुण-रूपादिभिर्गुण-रूप-शौक्ल्येषु संशय इति ।

**तत्रानुबन्धितत्त्वदर्शनाद् नैवान्यत्वमिति चेत्** । स्यान्मतम्—वृक्षात् पार्थिव-द्रव्य-सत्त्वानीवानन्यानि शौक्ल्याद् रूपगुणाश्रितानुबन्धीनि । तस्मात् तत्र निश्चयोऽनपोहश्च । येऽन्ये तेषामरूपागुणानाश्रितानामपार्थिवत्वादिवद् वृक्षादपोह इति ।

अत्र ब्रूमः—**शुक्लं तर्ही**त्यादि । नीलरक्तपीताद्यपि शुक्लं स्यात्, रूपादनन्यत्वात्, शुक्लगुणस्वरूपवत् । **एवमेवे**त्यादि गतार्थान्यनिष्टापादनानि यावद् **द्व्यणुकाद्यपी**ति । द्व्यणुकं [4]कार्यद्रव्यमाश्रितं परमाण्वो-

---

१ "यदि यथा दृष्टं तथा प्रतीयते न व्यवच्छेदद्वारेण [ तर्हि ] यथा क्रमेण शौक्ल्येन त्रयाणां रूपत्व-गुणत्वा-ऽऽश्रितत्वानां प्रतीतिर्भवति, गुणत्वाद् द्वयो रूपा-ऽऽश्रितत्वयोः, गुणत्वाच्चैकस्याश्रितत्वस्य, एवं प्रातिलोम्येनापि आश्रितत्वात् त्रयाणां गुणत्व-रूपत्व-शौक्ल्यानां स्यात् गुणत्वाद् द्वयो रूपत्व-शौक्ल्ययोः रूपत्वाच्चैकस्यैव शौक्ल्यस्य । न हि आश्रितत्वादयो गुणत्वादिषु न दृष्टाः । अथ यथा आश्रितत्वं गुणत्वादिषु दृष्टं तथा कर्मादिष्वपीति सन्देहो भवति, शौक्ल्यमपि रूप-गुणा-ऽऽश्रितेषु दृष्टमित्यतस्तेषु साधारणत्वात् सन्देहः स्यात् । व्यावृत्तिद्वारेण प्रतीतौ तु न दोषः । यथा गुणत्वाभावेऽभावाच्छौक्ल्यं रूपत्वे हेतुः तथा गुणत्वाश्रितत्वयोरपि तयोरभावेऽभावादिति । आश्रितत्वं तु गुणत्वाद्यभावेऽपि दृष्टमिति नास्ति तस्माद् गुणत्वादिनिश्चयः ।"— **विशालामलवती प्रमाणसमुच्चयटीका** VT. P. ed. पृ० २०३ b–२०४ a ॥ २ प्रतिष्वत्र **द्वित्र्येकार्थगति**° इति पाठो विलोक्यते तथापि **प्रमाणसमुच्चये 'त्रिद्व्येकार्थगति**°' इति पाठः प्रतीयते, स च समीचीनतरः सङ्गतार्थश्चेति विभाव्य **त्रिद्व्येकार्थगति**° इति पाठोऽत्रादरणीयो भाति ॥ **३ इति** भा० प्रतौ नास्ति ॥ **४ कार्यं द्रव्य**° य० ॥

**अन्यत्वमेव तर्ह्यतुल्यं शौक्ल्यादेः । रूपादयो नान्ये शौक्ल्यादेः, अनिष्टापत्तेः । अरूपादित्वे शौक्ल्यस्य तच्छौक्ल्यमेव न स्यात् अरूपादित्वात् उत्क्षेपणादिवत् । तस्मात् तेन सहानन्यत्वाद् रूपादेर्न तदपोहः । ये पुनरन्येऽपि आश्रितादेस्तु गुणादयः तेषामपोहानपोहाभ्यां संशयः । अथैतदेव कुतः ? अस्मदिष्टान्वयदर्शनादेवैतत् सिद्धम् । एवं तावदानन्त्यानुक्तिव्यभिचारदोषयोरन्यापोहपक्षेऽपि भावः । [1]अनन्तरस्यापि च भावः, यस्मात्**

---

रुत्क्षेपणादि रूपादि च स्यादिति 'आश्रितत्वात्' इत्यस्माद्धेतोः । संशयो न स्यात् कर्म-गुणेषु सप्रभेदेषु अनुबन्धिवदनन्यत्वात् तदुपायप्रदर्शनं सर्वगुणादिपरिक्रमेण । कस्मात् ? शौक्ल्यैकात्म्यात् त्वदिष्टादिति ।

अत्राह–**अन्यत्वमेव तर्ह्यतुल्यं शौक्ल्यादेः** । [2]एवं तर्हि नानन्यत्वम्, किं तर्हि ? अन्यत्वमेव । मा भूदेतदनिष्टमिति तद् दर्शयन्नाह–**रूपादयो नान्ये शौक्ल्यादेः**, कस्मात् ? **तद्रूपानुबन्धित्वात्**,
४७२-१ [3]वृक्षादिव पार्थिवत्वम् । किं कारणम् ? **अनिष्टापत्तेः** । किं तदनिष्टमिति चेत्, अरूपादित्वे शौक्ल्यस्य तच्छौक्ल्यमेव न स्यात्, अरूपादित्वात्, उत्क्षेपणादिवदिति । **तस्मात् तेन सहानन्यत्वात्** शौक्ल्येन **रूपादेर्न तदपोहः** न रूपाद्यपोहः । ये पुनरन्येऽपि ततस्तेषामपोहानपोहाभ्यां संशयः । [4]के पुनस्ते ? उच्यन्ते–आश्रितादेस्तु गुणादयः, तद्यथा–गुणोऽयमाश्रितत्वात् इत्याश्रित एव नियमाद् गुणो नाऽनाश्रितोऽस्तीति । [5]आश्रितस्तु गुणः कर्म सामान्यं विशेषः समवायो वेत्यनियमः । तस्मात् तेन सहाश्रितत्वेन तेषां गुणादीनामन्यत्वादपोहोऽनपोहश्चेति संशयः स्यादिति ।

आचार्य आह–**अथैतदेव कुतः ?** '[6]शौक्ल्यादिवद्रूपादिषु निश्चयः, आश्रितत्वाद् गुणादिषु संशयः' इति त्वया यतः प्रत्यवगतं तद् वक्तव्यं विशेषकारणं व्यावृत्तिप्राधान्यवादिना, विधिना दर्शनमन्तरेण वस्तुनो न शक्यम्, अस्मदिष्टवस्त्वन्वयदर्शनादेवैतत् सिद्धम्, तदभावे तन्नियमानियमाप्रसिद्धेः ।

**एवं तावदि**त्यादि । भेदपक्षे परं प्रति उक्तयोरा[7]नन्त्यानुक्ति-व्यभिचारदोषयोः '[8]अदृष्टेरन्यशब्दार्थे' [प्र० समु० ५।३४] इत्यादिनाप्यपरिहृतत्वात् सविशेषयोरन्यापोहपक्षेऽप्यस्तित्वं दर्शितमित्युपसंहारः ।

**अनन्तरस्यापि च भावः** । यदप्युक्तम् [9]अनन्तरस्यापि जातिसम्बन्धाभिधानपक्षयोरुक्तस्य

---

१ "अनन्तरस्याप्यभावः । कथम् ? यस्माद् **व्याप्तेरन्यनिषेधस्य तद्भेदार्थैरभिन्नता । साक्षाद्वृत्तेरभेदाच्च जातिधर्मव्यवस्थितिः** ॥ [प्र० समु० ५।३६] सामान्यशब्दस्य हि योऽर्थान्तरव्युदासो व्यापारः स स्वभेदाप्रतिक्षेपेणेति भेदश्रुत्या सह सामानाधिकरण्यमुपपद्यते ।" इत्यादि **दिङ्नाग**मतं निराकर्तुमत्र प्रारभते । दृश्यतां पृ० ७२८ टि० ९ ॥ २ **स एवं** भा० ॥ ३ **वृक्षादि पार्थि**° य० ॥ ४ **तौ पुनस्ते** प्र० ॥ ५ **आश्रितास्तु** य० ॥ ६ °**दितद्रूपा**° य० । °**दिद्रूपा**° भा० ॥ ७ °**नन्त्या[द]नुक्ति**° इत्यपि पाठः स्यादत्र ॥ ८ दृश्यतां पृ० ६५० टि० २ ॥ ९ दृश्यतां पृ० ६५० पं० ११-२६ । **दिङ्नागे**न सवृत्तिके **प्रमाणसमुच्चये** पञ्चमेऽपोहपरिच्छेदे यदभिहितं तदत्र भोटभाषान्तरात् संस्कृते परिवर्त्योपन्यस्यते—

"**व्याप्तेरन्यनिषेधस्य तद्भेदार्थैरभिन्नता ।**
**साक्षाद्वृत्तेरभेदाच्च जातिधर्मव्यवस्थितिः** ॥ ५।३६ ॥

अनन्तरस्याप्यभावः । कथम् ? **व्याप्तेरन्यनिषेधस्य तद्भेदार्थैरभिन्नता ।** सामान्यशब्दस्य हि योऽर्थान्तरव्युदासो

व्यापारः स स्वभेदाप्रतिक्षेपेणेति भेदशब्दैः सह सामानाधिकरण्यमुपपद्यते । [1]तस्मात् स्वभेदार्थैः पृथक्छ्रुतिदोषो नास्ति । योऽर्थ उभयशब्दाभिधेयः तत्रार्थान्तरे सामानाधिकरण्यम् । तथा हि स्वार्थाव्यभिचारः, [2]केवलस्यान्यत्रावृत्तेः । पश्चिमस्यापि दोषस्याभावः । कथम् ? **साक्षाद् वृत्तेरभेदाच्च** । अर्थान्तरमुपादाय स्वभेदेषु शब्दो न वर्तते । तस्मात् पारतन्त्र्येण स्वभेदानाक्षेपदोषो भाक्तदोषश्च न स्तः । नापि भेदानवस्थानादव्यापकत्वाच्चानभिधानासामान्यदोषौ स्तः, अर्थान्तरापोहमात्रस्याभिन्नत्वादद्रव्यत्वाच्च । तत एव सामान्यविशेषान्तरयोगानुसरणमपि न कर्तव्यम्, साक्षादर्थान्तरनिषेधात् । एवं पूर्वोक्तदोषाभावादर्थान्तरापोह एव शब्दार्थः साधुः । [3]अतश्च **जातिधर्मव्यवस्थितिः** । जातिधर्माश्चैकत्व-नित्यत्व-प्रत्येकपरिसमाप्तिलक्षणा अत्रैव व्यवतिष्ठन्ते, अभेदादाश्रयानुच्छेदात् कृत्स्नार्थप्रतीतेश्च । एवं दोषाभावाद् गुणोत्कर्षाच्च शब्दोऽर्थान्तरनिवृत्तिविशिष्टानेव भावानाह ।”—PSV[1] c. ed. D. ed. पृ० ७४ b–७५ a, N. ed. पृ० ८३ b–८४ a । PSV[2] N. ed. पृ० १६७, P. ed. पृ० १६५ b–१६६ a ।

अस्य **जिनेन्द्रबुद्धि**रचिता **विशालामलवती** टीकापि भोटभाषानुवादात् संस्कृते परिवर्त्येहोपन्यस्यते—“**व्याप्तेरन्यनिषेधस्ये**ति । **व्याप्तिः** स्वभेदाप्रतिक्षेपः, अन्यनिषेधो यथोक्तं सामान्यम्, तस्य **व्याप्तेः** स्वभेदेषु व्यापकत्वादित्यर्थः । **अन्यनिषेधस्ये**ति कृद्योगलक्षणेयं कर्तरि षष्ठी । **तद्भेदार्थैरभिन्नते**ति अन्यापोहभेदार्थवाचकैर्द्रव्यादिशब्दैः सदादिशब्दस्य सामानाधिकरण्यमित्यर्थः । **सामान्यशब्दस्य** हीत्यादि । **सामान्यशब्दस्य यो व्यापारः** प्रतीयते, स च कीदृश इति चेत्, **अर्थान्तरव्युदासः, स स्वार्थाप्रतिक्षेपेण** । एतेन व्यापकत्वमाह । यथा जात्यभिधाने जात्यन्तराणां प्रतिक्षेपस्तथार्थान्तरापोहाभिधाने न द्रव्यत्वादिविशेषाणाम् ।……**हि**शब्दो यस्मादर्थे **इति**शब्दस्तस्मादर्थो(र्थे), यस्मादेवं तस्माद् भेदार्थैर्द्रव्यादिशब्दैः सच्छब्दस्य सामानाधिकरण्यमुपपद्यते ।……तस्मादेकमेव वस्तु सत्त्वद्रव्यत्वाभ्यां व्यज्यमानं ‘सद् द्रव्यम्’ इति सद्द्रव्यशब्दाभ्यामभिधीयते । **तथा हि स्वार्थाव्यभिचार** इति, समुदायार्थो हि विशिष्टः, यदि पदं तद्वाचकं स्यात् तदा तदभावेऽपि पदस्य वृत्तेस्तत्प्रतीतिर्न स्यात् । यस्मात् समुदायस्तद्वाचकं शब्दान्तरमेव तस्मादव्यभिचारः । **पश्चिमस्यापी**ति ‘[4]तद्वतो नास्वतन्त्रत्वात्’ इत्यस्य । **साक्षाद्वृत्तेरि**ति…… । अत्र सत्तादिगुणान्तरानपेक्षया असदपोहवस्तुनि शब्दः प्रवर्तते । तद् दर्शयति—**अर्थान्तरमुपादाये**त्यादि । **तस्मात् पारतन्त्र्येणे**ति, यमुपादाय द्रव्ये शब्दः प्रवर्तते सोऽर्थान्तरापोहो न जात्यादिवत् किमप्यर्थान्तरम्, ततो व्यवधानाभावात् कुतः पारतन्त्र्यम् ? तदेव हि वस्तु असदादिभ्यो व्यावृत्तं साक्षादभिधीयते, तस्माद् यस्तस्य भेदः [स] तत्राभेदाद् न प्रतिक्षिप्यते । भाक्तदोषोऽप्यत एव नास्ति । न ह्यन्यत्र मुख्ये वर्तमानः शब्दो द्रव्यादिषूपचर्यते । **नापी**त्यादि, भेदानामानन्त्यमनवस्थानम्, तस्मा**दनभिधानदोषो नास्ति** ‘[5]तद्वांश्च भेद एवोक्तः स च पूर्वं निराकृतः’ इत्यनेनोक्तः । **व्यापकत्वादसामान्यदोषोऽपि नास्ति** यः ‘[6]तद्वानर्थो घटादिश्च’ इत्यादिनोक्तः । कुतो नास्तीत्याह—**अर्थान्तरापोहमात्रस्याभिन्नत्वा**दिति, ‘अभेदात्’ इत्येतदनेन व्याख्यायते । भेदसद्भावे हि आनन्त्यदोषः स्यात् असामान्यदोषश्च, अन्यस्यान्यत्रावृत्तेः । अर्थान्तरापोहमात्रं त्वभिन्नम्, तत्र कुतोऽस्य दोषस्यावकाशः ? ननु यो ज्ञानस्य सामान्याकारः सामान्यं व्यवस्थाप्यते सोऽपि ज्ञानादभिन्नत्वादन्यत्रावर्तमानः कथं सामान्यम् ? इति चेत्, उच्यते—**अद्रव्यत्वा**दित्यादि । स विज्ञानस्याकारोऽपि सामान्यरूपेणापरिनिष्पन्नत्वात् सामान्यमद्रव्यसदेव । नेदमनिष्टमेव ।…… ……**तत एवे**ति साक्षाद्वृत्तेः । तत्र सत्ताया विशेषणरूपेणाभिधानाद् वस्तुस्वरूपस्य व्यवधानम् । तेन सम्बन्धिनो हि घटत्वादयः, न सत्तया सम्बन्धिनः, जातौ जात्यभावात् । तस्मात् तद्वारेण अनेकार्थाकाङ्क्षाया न कारणम् । अत्र तु साक्षादसन्निषेधेन स्वार्थे शब्दो वर्तते, तस्मात् तस्य विशेषाकाङ्क्षाकारणत्वमुपपद्यते सामान्यान्तरयोगाभावेऽपि **साक्षादर्थान्तरनिषेधा**दिति, अर्थान्तरनिषेधोपायभूतं स्वार्थाभिधानमेवमुच्यते, साक्षात् स्वार्थाभिधानादित्यर्थः । एतेन ‘तत एव’ इत्यस्यार्थो दर्शितः । अत्र च वस्तुसज्जात्यन्तरयोगनिषेधो विवक्षितः, नोपचरितजात्यन्तरयोगोऽपि ।……… **अत्रैव व्यवतिष्ठन्त** इति ।………नित्यत्वेन कल्पनमप्युपपद्यते **कृत्स्नार्थप्रतीते**स्तु प्रत्येकं परिसमाप्तिः ।……… **गुणोत्कर्षा**दिति जातिधर्मव्यवस्थाया अत्रैव युक्तत्वात् ।”—VT. D. ed. पृ० २७७ a—२७९ a, P. ed. पृ० ३१२ b–३१४ b ॥

---

1 तस्मादस्य भेदार्थैः PSV[1] ॥ 2 केवलेऽन्यत्रावृत्तेः (?) ॥ 3 कुतः ? जातिधर्म··PSV[1] ॥ 4 पृ० ६०७ पं० २५ ॥ 5 पृ० ६२९ पं० ७ ॥ 6 पृ० ६२९ पं० १४ ॥

**असन्निषेधाभावत्वाद् विशेषार्थविभिन्नता ।**

सामान्यशब्दस्य हि योऽर्थान्तरव्युदासो व्यापारः स स्वभेदाप्रतिक्षेपेण [प्र०समु०वृ०५।३६] **इति वाङ्मात्रेणोक्तम् । स स्वभेदप्रतिक्षेपेणैव, तस्य सन्नियमार्थत्वादसत्प्रतिषेधस्याभावत्वात् भेदानां परस्परतः सदसत्त्वात् भेदश्रुत्या सह सामानाधिकरण्यमनुपपन्नम् । सम्बन्धस्यापि भेदैरभावस्यानुपपत्तेः कस्य वा ते भेदाः ? तस्मादपृथक्छ्रुतिदोषोऽस्त्येव ।**

**सुकरो हि [ शब्दस्यान्यापोहेन सम्बन्धः, [1]शब्दो जातिमात्रस्य तद्योगस्य वा न वाचको भेदार्थैरपृथक्छ्रुतेः । तथा हि 'सद् द्रव्यं सन् गुणः सत् कर्म' इति भेदार्थैर्द्रव्यादिशब्दैः सामानाधिकरण्यं न स्यात्, तच्च दृष्टम् । न हि सत्ता योगो वा द्रव्यं गुणो वा भवति, किं तर्हि ? ] द्रव्यस्य गुणस्य वा । तथैव हि [ अन्यापोहस्य न**

---

[2]समानाधिकरणाभावप्रसङ्गदोषजातस्य [अ]भाव इति । तद्यथा–[3]व्याप्तेरन्यनिषेधस्य तद्भेदार्थैरभिन्नता [ प्र० समु० ५।३६ ]। 'सदित्यसन्न भवति' इत्यसतो निवृत्तिः सर्वद्रव्यगुणकर्मघटरूपोत्क्षेपणादिभेदव्यापिनी, तस्या
४७१-२ असन्निवृत्तेः सर्वभेदव्यापित्वात् तैरभिन्नार्थत्वात् सामानाधिकरण्यमुपपन्नमिति । एतन्न, यस्माद**सन्निषेधाभावत्वाद् विशेषार्थविभिन्नता ।** तद्व्याख्या–**सामान्यशब्दस्य ही**त्यादि, **सामान्यशब्दस्य हि** सदादेर्**योऽर्थान्तरव्युदासः** 'असन्न भवति' इति कृत्यं **व्यापारः स** त्वयेत्थमवधारितः **स्वभेदाप्रतिक्षेपेणे**ति वाङ्मात्रेणोक्तं प्रागुक्तं विस्मृत्येति पूर्वपक्षप्रत्युच्चारणम् । अत्र तु वयं ब्रूमः–**स स्वभेदप्रतिक्षेपेणैवे**ति । कस्मात् ? **तस्य** सच्छब्दस्य **सन्नियमार्थत्वात्**–'असन्न भवति' इति द्विःप्रतिषेधस्य प्रकृत्यापत्तेः सत्त्वेन नियतत्वा**दसत्प्रतिषेधस्याभावत्वात्** । ततः किम् ? ततो **भेदानां परस्परतः सदसत्त्वात्,** इतरेताराभावत्वादसत्त्वम्, सन्नियमात् सत्त्वम्, अतः स्वभेदाः प्रतिक्षिप्ता एव, सन्तोऽप्यसन्त एव न भवन्तीति प्राप्तम् । ततश्च **भेदश्रुत्या** द्रव्यगुणादिकया घटपटादिकया च **सह सामानाधिकरण्यमनुपपन्न**मसन्निवृत्तेरभावसाधनत्वात्, अभावेन चैकविभक्तित्वमनुपपन्नं भेदानां 'सद्द्रव्यं [4]सद्गुणः सन् घटः' इत्यादि । न विभक्तिमात्रसामानाधिकरण्यानुपपत्तिरेव, किं तर्हि ? पदस्याप्यनुपपन्नं सामानाधिकरण्यं विभक्तिभेदेनापि '[5]सद् द्रव्यस्य गुणस्य वा' इत्यादि । सम्बन्धस्यापि भेदैर्द्रव्यादिभिरभावस्यानुपपत्तेः **[6]कस्य वा ते भेदाः** सच्छब्देनाभिन्नासत्त्वनिवृत्तिमात्रोपादानात् ? **तस्मादपृथक्छ्रुतिदोषोऽस्त्येव ।**

तद्व्याख्यानार्था टीका [7]तदीयैव—**सुकरो ही**त्यादिका दृष्टान्तत्वेन गतार्था यावद् **द्रव्यस्य गुणस्य** वेति । **तथैव ही**ति दार्ष्टान्तिकत्वेन त्वन्मतप्रदर्शनमेव यावत् **सामानाधिकरण्यं न स्यात् । यथा न**
४७३-१ **हि सत्ता द्रव्यं गुणो वा भवती**त्यादि **तथा न** हि **सदसन्निषेधाभाव**स्त्वन्मतोऽस्मन्मतस्य प्रतिषेधद्वयविधेयस्य सतः सभेदस्यानभ्युपगमे **द्रव्यं भवति गुणो वा, किं तर्हि ? द्रव्यस्य गुणस्य वा** [8]भावा-

---

१ तुलना–पृ० ६०७ पं० १६ ॥ २ **समाधिकरणाभाव**° भा० ॥ ३ दृश्यतां पृ० ७२८ टि० ९ ॥ ४ **'सन् गुणः'** इति सम्यक् प्रतिभाति । तुलना–पृ० ६०७ पं० १७ ॥ ५ तुलना–पृ० ६०७ पं० १८ ॥ ६ **कस्य धातो भेदाः** भा० । **कस्य धातोर्भेदाः** य० ॥ ७ **तदैयैव सुकरा ही**° प्र० ॥ ८ ( ऽभावाभावः, असदसन्मात्रमित्यर्थः ? ? ? ) ॥

**वाचकः, भेदार्थैरपृथक्छ्रुतेः । तथा हि 'सद् द्रव्यं सन् गुणः सत् कर्म' इति भेदार्थैर्द्रव्यादिशब्दैः ] सामानाधिकरण्यं न स्यात् । यथा न हि सत्ता द्रव्यं गुणो वा, भवति, किं तर्हि ? द्रव्यस्य गुणस्य वा, तथा न हि सदसन्निषेधाभावो द्रव्यं भवति गुणो वा, किं तर्हि ? द्रव्यस्य गुणस्य वा भावाभावः । आह च—**

[1]विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः ।
सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः ॥ [ वाक्यप० ३।१४।८ ]

**यत्तु सत्तासम्बन्धाभिधानपक्षाभ्यामपोहपक्षे विशेषहेतुप्रतिपादनार्थमुक्तम्— तत्र हि सत्तासम्बन्धयोर्गुणत्वाद् वस्तुनश्च गुणित्वात् सामानाधिकर-**

---

भावः, सदसन्मात्रमित्यर्थः, इतीयं व्याख्या त्वन्मतानुसारिण्येवेति **आह** [2]**चेति** ज्ञापकमप्याह –[3]**विभक्तिभेदो नियमादित्यादि** ।

**यत्तु सत्ते**त्यादि । सत्ता-सम्बन्धाभिधानपक्षयोरपृथक्छ्रुतिदोषोऽस्ति, नापोहपक्षे विशेषहेतुसद्भावादिति तस्य विशेषहेतोः प्रतिपादनार्थमुक्तम्—**तत्र ही**त्यादि । सत्तासम्बन्धा[भिधा]नपक्षयोर्गुणौ सत्ता-

---

१ अत्रेदमवधेयम् । **नयचक्रवृत्तौ 'विभक्तिभेदो नियमादित्यादि'** इत्येव प्रतीक उपलभ्यते । **न्यायवार्तिके** [ २।२।६६ ] **दिङ्नाग**मतनिराकरणप्रसङ्गे **'विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः । सामानाधिकरण्यस्यासिद्धिः सद्द्रव्यशब्दयोः ॥'** इति कारिका **उद्द्योतकरेण** पूर्वपक्षरूपेणोपन्यस्ता, अतः सा **दिङ्नाग**स्येति सम्भाव्यते । **भर्तृहरेर्वाक्यपदीये** [ ३।१४।८ ] तु **'विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः । सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः ॥'** इति कारिका दृश्यते । एतच्चास्माभिरत्र पृ० ७३१ टि० ३ इत्यत्र विस्तरेणोपदर्शितम् । अतोऽत्र **मल्लवादिक्षमाश्रमणानां** कीदृशी कारिकाभिमतेति निर्णेतुं न पार्यते । तथापि **भर्तृहरेः** कारिका **दिङ्नागे**नापि पृ० ६०७ पं० १९ इत्यत्रास्मिन् प्रसङ्गे निर्दिष्टा, अतोऽस्माभिरपि सैव कारिका सम्भावनयात्रोपन्यस्तेति सुधीभिर्विभावनीयम् ॥ **२ वेति** प्र० । तुलना–पृ० ६०७ पं० १८ ॥ **३ "विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः । सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः ॥** [ वाक्यप० ३।१४।८ ], पटस्य शुक्ल इति द्रव्यगुणाभिधायिपदप्रयोगे शाब्दो गुणप्रधानभावः । तथाहि—अत्रोपसर्जनं प्रधानोपकारपरिणतं स्वार्थमाचष्ट इति गुणविभक्तिं षष्ठीमुपादत्ते । प्रधानं तु स्वात्मन्यवस्थितमपरोपकारीति प्रथमया युज्यते इति नियतो विभक्तिभेदो व्यधिकरणे विषये । वीरः पुरुष इत्यादौ तु समानाधिकरणे विषये द्वावपि द्रव्यशब्दौ स्वनिष्ठं स्वार्थमाचक्षाते । तथा च तत्र प्रथमैव । सामर्थ्यनिबन्धनस्तु गुणप्रधानभाव उक्तो 'विशेष्यं स्यादनिर्ज्ञातम्' [ वाक्यप० ३।१४।७ ] इत्यादिना । एवं च सत्यपि गुणप्रधानभावे शाब्दाशाब्दत्वकृतो विशेषः सामानाधिकरण्यवैयधिकरण्ययोरिति षष्ठीसमानाधिकरणयोः समासयोर्भेदः ।" इति **हेलाराजकृतायां वाक्यपदीयटीकायां** वृत्तिसमुद्देशे ॥ "यत् पुनरेतद् 'भेदार्थैरभिन्नविभक्तिकत्वात्' इति तन्न, समानार्थापरिज्ञानात् । न ब्रूमः सत्ताशब्देन सामानाधिकरण्यम्, अपि तु सत्तायाः प्रधानसाधनवाचिना सच्छब्देन द्रव्यगुणकर्माण्यभिधीयन्ते । गुणकर्मशब्दैरपीतरेतरविशेषणविशेष्यभावापन्नैस्तान्येव । एवं च सति युक्तं सामानाधिकरण्यमुभयोः सद्द्रव्यशब्दयोः, एकविषयत्वात् । यदा पुनरयं सत्ताशब्दः सत्ताप्रधान एवाङ्गभूतं साधनमभिधत्ते न तदा सामानाधिकरण्यं द्रव्यस्य सत्तेति भवति । तस्मात् सामानाधिकरण्यानुपपत्तिरदोषः । [1]**विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः । सामानाधिकरण्यस्यासिद्धिः सद्द्रव्यशब्दयोः ॥** इति तदनेन प्रत्युक्तम् ।"— **न्यायवार्तिकम्** [ जेसलमेरस्थं हस्तलिखितम् ] २।२।६६ ॥

---

1 **दिङ्नाग**मतस्य निराकरणमत्र प्रस्तुतम्, अतोऽयं श्लोको **दिङ्नाग**स्यैव कस्मिंश्चिद् ग्रन्थान्तरे भवेदिति सम्भाव्यते । यस्तु **भर्तृहरेः** श्लोको **दिङ्नागे**नोद्धृतः स पृ० ६०७ पं० १९ इत्यत्र द्रष्टव्यः ।

ण्याभावो युक्तः, इह तु अर्थान्तरापोहो यस्मिन् वस्तुनि क्रियते तद् द्रव्यं शब्दार्थः नापोहमात्रम्। स च सच्छब्देन व्याप्तः, अपरित्यागात्, न तु साक्षादुक्तः।

तद्यथा – सच्छब्दः [असन्निवृत्त्युपसर्जनं द्रव्यमाह, न साक्षात्,] संशयोत्पत्तेः, तस्माद् विशेषार्थैर्द्रव्यादिशब्दैः सच्छब्दस्य सामानाधिकरण्यं वाक्यार्थे युक्तं सद्द्रव्यं सद्गुणः सत्कर्म ···। तथा हि स्वार्थाव्यभिचारो विशेषशब्दसहितस्य। यस्मादवयवशब्दार्थाभ्यामन्यः समुदायार्थः, तस्य च वाचकौ तौ समुदितौ, न तु सच्छब्दो द्रव्यार्थमाह न द्रव्यशब्दः सदर्थम्। कथं तर्हि यत् सत् तद् द्रव्यं यद् द्रव्यं तत् सदिति? [1]उभयशब्दव्युदासानुगृहीतस्य शब्दद्वयाभिधेयस्य समुदायार्थस्यैकत्वात् तथोच्यते, न तु सदर्थस्य द्रव्यशब्देनाभिधानात्।

---

सम्बन्धौ विशेषणत्वात्, [2]तद्वस्तु गुणीत्यतः सामानाधिकरण्याभावो युक्तः। [3]इह त्वर्था[4]न्तरापोहः सदित्यसन्न भवतीति नासद्भावमात्रमेवोच्यते, किं तर्हि? अर्थान्तरापोहेन विशिष्टं वस्त्वेव सदित्युच्यते, यस्मिन् [5]वस्तुनि सोऽपोहः क्रियते तच्च द्रव्यं शब्दार्थः, नापोहमात्रम्। स चापोहविशिष्टोऽर्थो द्रव्यादिः सच्छब्देन व्याप्तोऽपरित्यागात्, न तु साक्षादुक्तः।

तद्व्याख्या–**तद्यथा [6]सच्छब्द** इत्यादि। कस्मादनभिधानमिति चेत्, संशयोत्[7]पत्तेः, [8]उपात्तत्वे सति अनभिहिते संशयः स्यात्। तस्मात् सामानाधिकरण्यं विशेषार्थैर्द्रव्यादिशब्दैः सच्छब्दस्य वाक्यार्थे युक्तं न पदार्थे। तद्दर्शयति–**सद्द्रव्यं सद्गुण** इत्यादि। तथा हि स्वार्थाव्यभिचारो विशेषसहितस्येति विशेषशब्दप्रयोगः। कोऽसौ वाक्यार्थ इत्यत आह–**यस्मादवयवशब्दार्थाभ्यामन्यः समुदायार्थः**, सद्द्रव्यशब्दार्थावयवावसदद्रव्यनिवृत्त्युपलक्षितौ ताभ्यामन्य उभयशब्दव्युदासानुगृहीतः समुदायार्थः, तस्य च
४७३-२ वाचकौ तौ समुदितौ न विपरीतार्थौ, तद् दर्शयति–**न तु सच्छब्दो द्रव्यार्थमाह, न द्रव्यशब्दः सदर्थ**मिति। यथोक्तम्—

> [9]अपोह्यभेदाद् भिन्नार्थाः स्वार्थभेदगतौ जडाः।
> एकत्राभिन्नकार्यत्वाद् विशेषणविशेष्यकाः॥ [प्र० समु० ५।१५] इति।

अत्र चोद्यम्—**[10]कथं तर्ही**ति 'यत् सत् तद् द्रव्यम्, यद् द्रव्यं तत् सत्' इति भिन्नार्थत्वेन युक्तम्? इति। अत्र तेनैवोच्यते–**उभयशब्दव्युदासानुगृहीतस्य** असदद्रव्यनिवृत्त्यनुगृहीतस्य संहत[11]शब्दद्वयाभिधेयस्य समुदायार्थस्यैकत्वात् तथोच्यते, [12]न तु सदर्थस्य द्रव्यशब्देनाभिधानादिति पूर्वपक्षः।

---

१ 'उभयशब्दव्युदासानुगृहीतस्य शब्दद्वयाभिधेयत्वात्, न तु सदर्थस्य द्रव्यशब्देनाभिधानात्' इत्यपि मूलं स्यादत्र। तुलना–पृ० ७३३ पं० ३, पृ० ७३३ पं० ५॥ २ **'तद्वत्तु'** इति पाठः शोभनः। (तद्वद्वस्तु?)॥ ३ तुलना–पृ० ७३३ पं० २॥ ४ **'°न्तरापोहे'** इत्यपि पाठः स्यात्॥ ५ **वस्तुनि अपोहः** य०॥ ६ तुलना पृ० ६०७ पं० २६॥ ७ **°संशयोत्पत्तेरूपत्तत्वे सति** प्र०॥ ८ 'अनुपात्तत्वे' इत्यपि चिन्त्यम्, दृश्यतां पृ० ६३८ पं० १४॥ ९ दृश्यतां पृ० ६३०॥ १० 'कथं तर्हीति। 'यत् सत् तद् द्रव्यम्, यद् द्रव्यं तत् सत्' इति भिन्नार्थत्वे **न** युक्तमिति।' इत्यपि योजना स्यादत्र॥ ११ तुलना–पृ० ७३३ पं० ३॥ १२ तुलना–पृ० ७३३ पं० ५॥

**अत्रापि शक्यं वक्तुम्—आश्रितस्य गुणि(ण?)त्वाद् गुणगुणिनोर्भेदात् सामानाधिकरण्याभावस्तदवस्थः । इह तु जातियोगौ यस्मिन् वस्तुनि वर्तेयातां [तद् द्रव्यं सदित्युच्यते……] शब्दद्वयाभिधेयत्वात् ।**

**[1]पश्चिमस्यापि दोषस्य भाव एव, साक्षादवृत्त्यादिदोषजातस्य सातिशयस्योक्त-**

उत्तरपक्षस्तु–[2]**अत्रापि शक्य**मित्यादि । सत्ता-योगपक्षगतो विभक्तिभेदप्रसङ्गदोषोऽत्रापि शक्यो वक्तुम्, आश्रितस्य [3]गुणित्वात् । तद्यथा–सदभावाभाव आश्रितः, द्रव्याद्यभावाभाव आश्रयः, तयोश्च गुणगुणिनोर्भेदात् तदभिधायिनोः सामानाधिकरण्याभावस्तदवस्थः । [4]या त्वयोक्तोपपत्तिः साऽपि जाति-योगपक्षयोरपि क्रमत इत्यतस्तत्प्रदर्शनार्थमाह–[5]**इह तु जाति-योगौ यस्मिन् वस्तुनी**त्यादि । सत्तातः सच्छब्दः तत्सम्बन्धाद्वा सति वर्तते वस्तुनि द्रव्यादिभेदवति 'सत्त्ववत् सत्' इत्यभेदोपचाराद् मतुब्लोपाद्वा, [7]त्वयोक्तापोहवृत्तिवद् वर्तेयातां जातियोगौ 'सदेव सत्त्ववत्' इति । शेषस्त्वदुक्तोपपत्ति[8]ग्रन्थवत्तुल्यगमो [9]यावच्छब्दद्वयाभिधेयत्वा**दिति गतार्थः । तस्मात् तदवस्थ एवापृथक्छ्रुतिदोषः ।

किञ्चान्यत्–[10]**पश्चिमस्यापि दोषस्य भाव एव**, नाभावः । यदुक्तं जातिमत्पक्षे —

**[11]तद्वतो नास्वतन्त्रत्वाद् भेदाज्जातेरजातितः** [ ]

इत्यादि दोषजातं तस्याभावोऽन्यापोहपक्षे [12]साक्षाद्वृत्तेः, तत्र हि [13]सच्छब्दः सत्तामुदापाय द्रव्ये ४७४-१
वर्तमानस्तद्भेदान् घटादीना[क्षे]प्तुमसमर्थः । [14]अत्र पुनरसत्प्रतिषेधेन साक्षाद्वर्तत इति तस्य ये विशेषास्तान् न प्रतिक्षिपति । तस्मादिहानाक्षेपदोषो नास्ति । [15]भाक्तदोषोऽप्यत एव नास्ति, न ह्यन्यत्र मुख्या वृत्तिर्द्रव्यादिषूपचर्यते । नापि भेदानवस्थानादनभिधानदोषः, कस्मात् ? [16]अभेदात्, न ह्यर्थान्तरापोहो भेदेषु भिद्यते, [17]अभावात् । तन्मात्रं च शब्देनोच्यते, न [18]भेदाः । तथा [19]सामान्यदोषोऽपि नास्ति । यत्तूक्तम्–

**[20]सत्त्वान् घटादिरर्थो न [21]पटादिषु न [22]वर्तते** [ ]

इति, साक्षाद् घटपटादिष्वसत्प्रतिक्षेपादिति । तन्न भवति, यस्मात् **साक्षादवृत्त्यादिदोषजातस्य**

---

१ **दिङ्नागेन** क्वचिद् ग्रन्थे यत् स्वमतं प्रतिपादितं तदत्र निराक्रियते । **प्रमाणसमुच्चयवृत्ता**वपि "पश्चिमस्यापि दोषस्याभावः । कथम्? **साक्षाद्वृत्तेरभेदाच्च** अर्थान्तरमुपादाय स्वभेदेषु शब्दो न वर्तते । तस्मात् पारतन्त्र्येण स्वभेदानाक्षेपदोषो भाक्तदोषश्च न स्तः । नापि भेदानवस्थानादव्यापकत्वाच्चानभिधानासामान्यदोषौ स्तः, अर्थान्तरापोहमात्रस्याभिन्नत्वादद्रव्यत्वाच्च" इत्यभिहितं दिङ्नागेनेति ध्येयम् । दृश्यतां पृ० ७२९ पं० २ ॥ **२ अवापि** य० ॥ ३ 'गुणत्वात्' इत्यपि भवेदत्र पाठः । 'आश्रितस्य [ गुणत्वादाश्रयस्य च ] गुणित्वात्' इत्यपि पाठोऽत्र चिन्त्यः ॥ **४ पास्त्वयोक्तो**° प्र० ॥ ५ पृ० ७३२ पं० १ ॥ ६ तुलना–पृ० ७३२ पं० १ ॥ **७ त्तयोक्तापोहनिवृत्तिवत्** प्र० । ( त्वदुक्तापोहवृत्तिवत् ? ) ॥ ८ °**ग्रंथवस्तुल्य**° प्र० ॥ ९ तुलना–पृ० ७३२ पं० २५ ॥ १० तुलना–पृ० ७३५ पं० १४ ॥ ११ दृश्यतां पृ० ६०७ पं० २५ टि० ५, पृ० ६२३ पं० १७, पृ० ६२५ पं० ८, पृ० ६२८ पं० ३, पृ० ७३५ पं० २४ ॥ १२ पृ० ७२८ पं० ३० ॥ १३ पृ० ७२९ पं० ३ ॥ **१४ सन्न पुन**° प्र० ॥ १५ पृ० ६२३ पं० ४ ॥ १६ पृ० ६२५ पं० ८ ॥ १७ अभावत्वेन तस्यैकत्वादित्याशयः ॥ **१८ भेदात् तथा** प्र० ॥ १९ पृ० ६२९ पं० १४ । अत्रेदमवधेयम्–प्रमाणसमुच्चयवृत्तौ 'असामान्यदोषः' इत्यभिहितं **दिङ्नागेन**, अत्र तु पृ० ७३४ पं० १५ इत्यत्र च 'सामान्यदोषः' इत्यभिहितं ग्रन्थकृता । अतो **दिङ्नागेन** ग्रन्थान्तरेऽभिहितं **'सामान्यदोषोऽपि नास्ति'** इति वचनमत्र विवक्षितं भाति । प्रमाणसमुच्चयवृत्तौ असामान्यदोष उक्तः, अन्यत्र तु **दिङ्नागेन** सामान्यदोष उक्त इति भाति ॥ २० सदस्यास्तीति सत्वान्, दृश्यतां पृ० ६२८ पं० १९ । प्रमाणसमुच्चये **'तद्वानर्थो घटादिश्च न पटादिषु वर्तते'** इति 'तद्वानर्थो घटादिश्चेन्न पटादिषु

**त्वादस्माभिः । सच्छब्दोऽपोहमात्रस्वरूपोपसर्जनं द्रव्यमाह, न साक्षादित्यादि सर्वं प्रागुक्तम् ।**

**यत्तूक्तं परं प्रत्याशङ्क्य–स्यादेतत्—अपोहविशिष्टार्थत्वे⋯⋯तुल्यं शब्दार्थस्य समानत्वम् । ततः—**

अद्रव्यत्वाच्च भेदाच्च⋯।⋯⋯॥ [ ]

**नाप्यर्थान्तरापोहो नाम [ भावान्तरम्⋯⋯] ⋯⋯ नास्ति सामान्यदोष इति । अत्र ब्रूमः–तद्वत्त्वं च त्वदुक्तवत् । ननु भावान्तरतैव⋯⋯⋯।**

---

**सातिशयस्योक्तत्वादस्माभिः,** तदेव स्मारयन्नाह—**सच्छब्दोऽपोहमात्रस्वरूपोपसर्जनं द्रव्यमाह[1], न साक्षादित्यादि सर्वं प्रागुक्तं** '[2]जातिमद्वदपोहवान्' इत्युपक्रम्य । तत्र च जातिमतीवापोहवत्यपि सर्वे दोषा यथा सङ्गतास्तथा प्रतिपादिता इति न पुनर्लिख्यते ।

स्यान्मतम्–जातिमत्त्ववदपोहवत्त्वमप्ययुक्तमिति, त[3]दाशङ्क्यते–**यत्तूक्त**मन्यापोहवादिना **परं प्रति आशङ्क्य** तद्यथा—**स्यादेतदपोहविशिष्टा[4]र्थस्त(र्थत्व)** इत्यादि यावत् **तुल्यं शब्दार्थस्य[5] समानत्वम्** शब्दस्य च समानत्वमर्थस्य च 'अपोहपक्षेऽपि' इति वाक्यशेषः । इत्थं पूर्वपक्षीकृत्योत्तरमाह–**ततः** [6]**अद्रव्यत्वाच्च भेदाच्चे**ति [7]कारिकया [8]चशब्दा[द् भा]ष्ये लिखितम् । तद्व्याख्या–**नाप्यर्थान्तरापोहो नामे**त्यादि यावन्**नास्ति सामान्यदोष** इत्यपोहपक्षे जातिमत्पक्षगतदोषाभावप्रतिपादनं [9]विशेषप्रदर्शनादिति त्वदभिप्रायं प्रदर्श्य वयमत्रोत्तरं ब्रूमः—**तद्वत्त्वं च त्वदुक्तवत्** । अस्य व्याख्या–**ननु भावान्तरतै[10]वे**त्यादि । यदि परमताभ्युपगमात् सामान्यवत्पक्षे सत्सामान्यान्वयात् सामान्य[व]द्विशेषणस्य सामान्यस्यार्थान्तरत्वं पारतन्त्र्यादि च ब्रूषे सामान्यवद् व्यावृत्तेरपि अर्थान्तरत्वं विशेषणत्वं पारतन्त्र्यादि च ननु तदवस्थमेव,
४७४-२ तद्वतोऽन्यप्रत्ययात्मकत्वात् सामान्यवत् तद्व्यावृत्तेरपि । अथ स्वमतेन ब्रू[11]षे न सामान्यं न व्यावृत्तिमदिति कुतस्तद्विशिष्टवस्त्वभिधानं खपुष्पशेखरविशिष्टवन्ध्यापुत्राभिधानवत् ।

---

वर्तेते' इति वा पाठो दृश्यते । दृश्यतां पृ० ६२९ पं० १४ । अत इदं कारिकार्धं **दिङ्नागस्य** ग्रन्थान्तरादत्रोद्धृतं प्रतीयते । '**सत्वान्** सत्तावान् **घटादिरर्थो न** न सच्छब्दार्थ इत्याशयः, कस्मादिति चेत्, **पटादिषु न वर्तते,** स हि घटादिरर्थः पटादिषु न वर्तते, तस्मात् **सामान्यमर्थः स कथम्?** सामान्यं ह्यनेकवृत्ति, घटादिरर्थस्तु पटादिषु न वर्तते तस्मात् स न सामान्यमित्याशयोऽत्र भाति ॥ **२१** तुलना–पृ० ६२९ पं० १४ ॥ **२२ वर्तेते** प्र० ॥

१ पृ० ६०७ पं० २६ ॥ २ पृ० ६०६ पं० २२ ॥ ३ 'तदाशङ्क्य ते[**न**] यत्तूक्त°' इत्यपि पाठोऽत्र भवेत् ॥ **४ °ष्टार्थस्त इत्यादि** भा० । **°ष्टास्त इत्यादि** य० ॥ ५ **°स्यासमानत्वं शब्दस्य चासमा°** भा० । **°स्यासमानत्वं शब्दस्य च समा°** य० ॥ ६ **दिङ्नागस्य** ग्रन्थान्तरादियं कारिकात्रोद्धृता प्रतीयते, **प्रमाणसमुच्चये** तु नेयं कारिका दृश्यते । किञ्चान्यत्, **प्रमाणसमुच्चयवृत्तौ** 'अर्थान्तरापोहमात्रस्य **अभिन्नत्वादद्रव्यत्वाच्च**' इति पाठ उपलभ्यत इति ध्येयम् । दृश्यतां पृ० ७२९ पं० ४, पृ० ७३३ पं० २१ ॥ **७ कारिकाया** प्र० । 'कारिकायां' इत्यपि पाठोऽत्र स्यात् ॥ **८ चशब्दाख्ये** भा० ॥ ९ **विशेषदर्श°** य० ॥ १० **°दिव ननु** भा० । **°दिषुव ननु** य० ॥ ११ **द्रूपे न** य० । **द्रूयते न** भा० ॥

**अपि च भावान्तर ............... । यथा जातिस्वरूप ......... अनाक्षेपस्तथा यथाकथञ्चित् ............... अस्वातन्त्र्यहेतुत्वात् ।**

**यदि चार्थान्तरापोहो न भावान्तरं [1]कथमिदम्—यत् सत् तद् द्रव्यं यद् द्रव्यं तत् सदिति ? उभयशब्दव्युदासानुगृहीतस्य शब्दद्वयाभिधेयस्य समुदायस्यैकत्वात् तथोच्यते न तु सदर्थस्य द्रव्यशब्देनाभिधानात्, अर्थान्तरापोहो यस्मिन् वस्तुनि क्रियते तद् द्रव्यं शब्दार्थो नापोहमात्रम् । तस्मादपरिहृतः पश्चिमदोषोऽपि ।**

---

**अपि च भावान्तर**ेत्यादि । [2]अत्र प्रस्तुतार्थोपकारापकारानङ्गत्वाद् भावान्तराभावान्तरत्वाभ्यां विचारिताभ्यां न किञ्चित् प्रयोजनमस्ति, किन्तु इदमत्र प्रस्तु[3]तार्थोपयोगिकम्, तद्यथा—बुद्धिस्थस्य शब्दप्रयोगजनितज्ञानोपलक्षितस्यान्वयव्यतिरेकद्वारेणावधारितस्यार्थस्याऽऽ**नुगुण्येन** वशवर्तितया 'अयं भवति, अयं न भवति' इति तयोर्विधिप्रतिषेधयोर्भेदेन प्रत्ययः शब्दार्थसम्बन्धज्ञस्य शब्दप्रयोगादुत्पद्यते, सामान्योपसर्जनविशेषशब्दार्थपक्षे वा । द्वयोरपि च पक्षयोरुपसर्जनीकृतविशेषणत्वाद् भेदानाक्षेपादस्वातन्त्र्यादनभिधानं तुल्यमित्येष विचारप्रयासार्थः । तद् दृष्टान्तेन दर्शयति—**यथा जातिस्वरूपे**त्यादिना तद्वत्पक्षवादिमतेन याव**दनाक्षेप** इति, दार्ष्टान्तिकेन च **तथा यथाकथञ्चि**दित्यादिना याव**दस्वातन्त्र्यहेतुत्वा**दिति सुष्ठूच्यते—[4]**पश्चिमस्यापि दोषस्य सातिशयस्य भाव एवेति ।**

यदप्युक्तम्—अर्थान्तरापोहोऽसद्घटनिवृत्तिः सन् घट इति, तस्मात् सामान्यदोषोऽपोहपक्षे नास्तीति, तदपि प्रत्यासन्नमात्मोक्तं विस्मृत्य त्वयाभिहितमिति बोधयितुकाम इदमेव तावत् प्रत्युच्चारयति—**यदि चार्थान्तरापोहो न भावान्तर**मित्यादि । अभावान्तरत्वादर्थान्तरापोहस्यापोहवानर्थः शब्दवाच्यो न भवति, अतो नापोहो विशेषणं नापोहवान् सोऽर्थ इति यदि त्वयेष्टमिति अस्य विरोधापादनार्थमुच्यते— ७४-५१
[5]**कथमिद**मित्यादि पूर्वपक्षितमस्माभिर्याव[6]**न्न तु सदर्थस्य द्रव्यशब्देनाभिधाना**दित्येतस्य [7]सूचनं सूत्रेण याव**द् नापोहमात्र**मिति गतार्थम् । किमुक्तं भवतीति चेत्, उच्यते—यदि द्रव्यं यद्यद्रव्यमर्थान्तरापोहः तद्वांस्त्वर्थः त्व(स्व)शब्दार्थत्वेन विवक्षितत्वादुच्यत एव बुद्धिस्थान्वयव्यतिरेकार्थभेदप्रत्ययोत्पत्तिदर्शनादित्युक्तं भवति । न हि लोके शब्दप्रयोगजनितप्रत्ययपरिच्छेद्यापलापेनान्यः शब्दार्थः शक्यः कल्पयितुं सुदूरमपि गत्वा प्रतिपत्तिशरणावस्थानाद् वादानामिति नायं निः[8]सरणोपायः । तस्मादप[9]रिहृतः पश्चिमदोषोऽपीति । एतेन '[10]अस्वातन्त्र्याद् भेदाज्जातेरजातितः' [          ] इति सव्याख्याविकल्पा दोषहेतवोऽपरिहृता वेदितव्याः, तेषां त्वदुक्तन्यायाध्वानतिक्रमात् परिहारहेतूनां तद्विकल्पानुसारित्वाच्चेत्यलं प्रसङ्गेन ।

---

१ 'कथमिदम्–यत् सत् तद् द्रव्यं यद् द्रव्यं तत् सदिति ? अर्थान्तरापोहो यस्मिन् वस्तुनि क्रियते तद् द्रव्यं शब्दार्थो नापोहमात्रम् । तस्मादपरिहृतः पश्चिमदोषोऽपि ।' इत्यपि मूलं स्यादत्र ॥ २ **यत्र** प्र० ॥ ३ °**तार्थौ**° प्र० ॥ ४ पृ० ७३३ पं० ४ ॥ ५ तुलना–पृ० ७३२ पं० ७ ॥ ६ पृ० ७३२ पं० २५ ॥ ७ **सूचनसूत्रेण** प्र० ॥ ८ °**शरणो**° प्र० ॥ ९ **दपहृतः** य० ॥ १० दृश्यतां पृ० ६२३ पं० १७, पृ० ६२५ पं ८, पृ० ६२८ पं० ३, पृ० ७३३ पं० १३ ॥

**अत्र च [1]संघातः शब्दार्थ उत्पत्तावभिव्यक्तौ वा । यद्यप्राप्तयौगपद्यानि पदानि कार्यात् प्रसिद्धाद् व्यवस्था लोकप्रसिद्धेरेव वा, अनवस्थिततर्कत्वात् पुरुषाणाम् । आगममात्रं त्वेतत् पदसमूहोऽनियतानुपूर्व्यो वाक्यम् ।**

---

प्रस्तुतनयमतः शब्दार्थो[2] विधीयते—**अत्र च** विधि[नियम]नियमे **सङ्घातो** वर्ण-पद-वाक्यादीनां **शब्दार्थ उत्पत्तावभिव्यक्तौ** वेति । यदि वर्णादयो जन्यन्ते यद्यभिव्यज्यन्ते कार्य-नित्यपक्षयोर्द्वयोरपि अविरुद्धः सङ्घातो वाक्यादिः शब्द इति । स्यान्मतम्—उत्पन्नमात्रप्रध्वंसित्वाद् वर्णादीनां यौगपद्याभावे
४७५-२ कुतः सङ्घात इति, अत्रोच्यते—यद्यप्राप्तयौगपद्यानि पदानि कार्यात् प्रसिद्धाद् व्यवस्था लोके, किं तत् कार्यम् ? अर्थप्रतिपादनम्, तद्यथा—वर्णादीनां तिरोहितानां परिणामान्तरमापन्नानां विनष्टानां वा बुद्धौ संस्कारमाधाया[3]ऽभिधेयविज्ञानोत्पत्तिनिमित्तत्वं तदभावे तदभावात् प्रयोगानन्तरीयकत्वाच्च प्रत्ययस्यानुमीयते । लोकप्रसिद्धेरेव वा व्यवस्था, दृष्टा हि लोके तेषां वर्णपदादीनां शब्दानामर्थप्रत्यायनासम्भवादर्थप्रत्यायकस्तत्समुदाय इति शक्तिः प्रसिद्धा । सन्निदानीं समुदायः समुदायिभ्यो वर्णादिभ्यस्तदसम्भविकार्यान्तरदर्शनादन्य इति केचिदाहुः, तस्मादेव कार्याद् मा भूदहेतुकमर्थप्रत्यायनं तेषु तस्य प्रतिदेशं समस्तेषु वा देशैः सामस्त्येन वा वृत्त्यसम्भवान्न व्यतिरिक्त इत्यपरे । पूर्ववर्णज्ञानाहितसंस्कारापेक्षान्त्यवर्णो[4] [5]संहताशेषशेषावयवः समुदायोऽभिधाता पूर्ववर्णजनितबुद्धिपरिपाकादित्येके । सिकतातोयवद् देशान्तरेषु असतोऽन्त्येंऽशे कुतः सम्भवः प्रत्यायनस्य ? किन्तु तिलतैलवत् सर्वावयवेषु तिरोहिताभिमतेषु सूक्ष्मतामापन्नेषु वितत्य व्यवस्थितो बुद्धिसंस्कारपरिपाकसमुदायोऽभिव्यञ्जकः प्रत्ययस्येत्यपरे । स च समुदायात्मा शब्द एक एवाभिन्नः प्रत्यायकोऽर्थस्यैकप्रत्ययदर्शनात्, अनेक एव वा प्रत्यवयवाहितसंस्कारबलाधेयार्थज्ञानत्वादित्येवमादीनि विचारान्तराण्येवैतानि । पुरुषमतिसमुत्थापितशुष्कतर्कविषयत्वात् किं न एतैः, यदि व्यतिरिक्तः यद्यव्यतिरिक्तः अन्त्ये शेषसमस्तेष्व[6]भिन्नो भिन्नो वा प्रत्यायकः समुदायोऽवयवा एव वा ? योऽस्तु सोऽस्तु, सर्वथाऽर्थप्रत्यायनात् फलात् समुदायः शब्द इत्येतावदुपयुज्यते । किं कारणम् ?
४७६-१ अनवस्थिततर्कत्वात् पुरुषाणाम्, यथोक्तम्—यत्नेनानुमितोऽप्यर्थः[7] [ वाक्यप० १ । ३४ ] इत्यादि तथा हस्तस्पर्शादिवान्धेन [ वाक्यप० १ । ४२ ] इत्यादि । किं तर्हि प्रतिपत्तव्यम् ? **आगममात्रं त्वेतत् पदसमूहो वाक्य**मिति । यथोक्तम्—

> **जो हेतुवाद[9]पंक्खंसि[10] हेतुओ आगमे य आगमिओ ।**
> **सो ससमयपण्णवओ सिद्धंतविरोधओ[11] इतरो** [ सम्मति. ३ । ४५ ] **त्ति ।**

स चा**ऽनियतानुपूर्व्यः** पदसमूहः । अनुपूर्वभाव आनुपूर्व्यम्, तदनियतं यस्य सोऽनियतानुपूर्व्यः

---

१ पृ० ४४८ टि० २ ॥ २ 'शब्दार्थो**ऽभिधीयते**' इति पाठः समीचीनो भाति ॥ ३ °**मावयोभिधेय**° भा० । °**मावयोरभिधेय**° य० ॥ ४ °**रापेक्ष्यन्त्य**° भा० ॥ ५ **संहताशेषदोषावयवः** य० । **संहताशेषशेषावयवः** भा० । भा० प्रतिपाठोऽपि शोभन इति ध्येयम् ॥ ६ °**समस्तेष्यभिन्नो** य० ॥ ७ यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥" इति सम्पूर्णा कारिका । दृश्यतां पृ० ३६ पं० ४ ॥ ८ "हस्तस्पर्शादिवान्धेन विषमे पथि धावता । अनुमानप्रधानेन विनिपातो न दुर्लभः ॥" इति सम्पूर्णा कारिका ॥ ९ °**वायपक्खंसि हेउओ** य० ॥ १० **परिक्खंमि** भा० ॥ ११ °**राहओ इयरो** य० ॥

**अयं च शब्दैकदेशत्वात् पर्यवास्तिकः । परिः समन्तादर्थे, अव गत्यर्थे । परितोऽवनं पर्यवः । [1]समन्ताद् द्रवति । कोऽसौ ? भेदो भावोपसर्जनः । सोऽस्तीति यस्य मतिः [2]स पर्यवास्तिकः ।**

**निर्गमवाक्यमप्यस्य**—दुवालसंगं गणिपिडगमेकं पुरिसं पडुच्च सादियं सपज्जवसियं [ नन्दीसू० ४२ ] **इत्यादि ।**

## इति विधिनियमनियमोऽष्टमोऽरः ।

## समाप्तश्च द्वितीयो मार्गः ।

---

पदसमूहः, तद्यथा—'देवदत्त गामभ्याज' इति कदाचित्, कदाचिच्च 'देवदत्त गामभ्याज शुक्लाम्, देवदत्त महिषीं गृष्टिं कल्याणीम्' इति 'पात्रमाहर, आहर पात्रं सौवर्णं च' इत्यादि । व्याकरण-साङ्ख्य-वैशेषिक-बौद्धाद्यन्यतमग्रन्थमात्रं सर्वागमसमूहात्मकार्हतागमो वा वाक्यम्, [3]वाक्यार्थोऽपि तदभिधेयोऽर्थः । उक्तः शब्दार्थः ।

अयं पुनर्नयः क्वान्तर्भवति, द्रव्यार्थे किं पर्यायार्थे ? उच्यते—**अयं च शब्दैकदेशत्वात् पर्यवास्तिकः ।**

मूल[4]निमेणं पज्जवणयस्स उज्जु[5]सुतवयणविच्छेदो ।
[6]तस्स तु साहपसाहा सद्दविकप्पा सुहुमभेदा ॥ [ सम्मति. १ । ५ ]

[7]इत्यार्षेऽपि सप्तनयशताम्नानात् पर्यवास्तिकभेदस्य शब्दनयस्य भेद इत्यर्थः ।

पर्यवास्तिक इति कः शब्दार्थः ? उच्यते—**परि**रुपसर्गः **समन्ता[8]दर्थे, अव गत्यर्थे** धातुः । परितोऽवनं समन्ताद् गमनं पर्यवः । [9]तदाचष्टे—**स[10]मन्ताद्द्रवति** । इत्थमक्षरार्थमुक्त्वा वस्तुतो दर्शयति—**कोऽसौ ? भेदो भावोपसर्जनः**, यो भवति घटादिर्भेदः स भवनक्रियोपसर्जनः पर्यवः । सोऽस्तीति यस्य ४७६-२
नयस्य मतिः स पर्यवास्तिक इति तद्धितप्रत्ययान्तार्थः प्रकृत्यर्थेन विशेषितो ज्ञेयः ।

किमेताः स्वमनीषिका एवोच्यन्ते, अस्ति किञ्चिद् निबन्धनमस्यार्षमपीति ? 'अस्ति' इत्युच्यते, तद्यथा—**निर्गमवाक्यमप्यस्य-दुवाल[11]संगं गणिपिड[12]गमेकं पुरिसं पडुच्चे**त्याद्यार्षग्रन्थं साक्षित्वेनाऽऽहैतन्मतसंवादिनम् । यद्यप्ययमागमोऽनेकपुरुषा[13]न्वयेन सदा व्यवस्थितस्तथापि प्रत्येकं पुरुषविशेषाश्रित एव निश्चयाय क्रियासामान्योपसर्जनविशेषपरमार्थत्वाद् भवत्यर्थस्य । तच्च द्वादशाङ्गं गणिपिटकमत एव [14]साद्यं सपर्यवसानं च क्षणिकमेवेत्यर्थः । **इत्यादि**ग्रहणा[15]दन्यापि [16]प्रकृतिस्थित्यनुभावप्रदेशबन्धादिप्ररूपणा एकसमयमात्रविषया मिथ्यादर्शनादिपरिणामाध्यवसायप्ररूपणा च द्रष्टव्या ।

**इति** परिसमाप्तौ, इत्थं परिसमाप्तो विधिनियम[17]योर्नियमोपप्रदर्शनो गुण-प्रधानभावेनायमष्टमोऽरः । **समाप्तश्च** [18]द्वितीयो मार्गं उभयविकल्पभेदोपदर्शनः ॥

---

१ तुलना पृ० ७ पं० ११ ॥ २ दृश्यतां पृ० ३ पं० ७, टिपृ० ५ पं० २३ ॥ ३ **वाक्याभिर्थो°** प्र० ॥ ४ **°निमेषणं** भा० । **निमेषण** य० ॥ ५ **°सुय°** य० ॥ ६ **तस्स उ** य० ॥ ७ **इत्यार्थे°** भा० । **इत्यर्थे°** य० ॥ ८ **°दर्थेऽव** य० । **°दर्थो अव** भा० ॥ ९ **तथाचष्टे** य० ॥ १० **'समन्तादवति'** इति पाठः सम्यग् भवेत् ॥ ११ **°सिंगं** भा० ॥ १२ **°मेगं** य० ॥ १३ **°न्वयेन दा व्यव°** य० ॥ १४ **साद्यसप°** य० ॥ १५ **°दन्यपि** भा० । **°दन्यदऽपि** य० ॥ १६ "सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते । स बन्धः । प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः ।"—**तत्त्वार्थसू०** ८ । २—४ ॥ १७ **°यमोर्नियमोएवोपदर्शनो** प्र० ॥ १८ **द्वितीयोर उभयविकल्प°** य० ॥




# अथ नवमो नियमारः ।

**यदि भेदप्रधानो भावः कथमसौ ? स भवितारमन्तरेण स्वरूपमपि प्राप्तुमसमर्थोऽस्वतन्त्रत्वादसन् खपुष्पवत् । तदभावे भेदा एव विप्रकीर्णाः स्युः । ततश्च भेत्तव्याभावाद् भेदा अपि न भवितुमर्हन्तीति धर्मधर्मिस्वरूपविरोधः । घटादिभेदाभावः, भेत्तव्याभावात्, गगनोदुम्बरकुसुमवत् । ततश्चात्यन्तनिरुपाख्यत्वात् स्ववचनाभ्युपगमानुमानप्रत्यक्षविरोधा अपि ।**

**'पृथिवी घटो भवति' इत्यत्र यदि विशेष एव भवति तर्हि सामान्यस्याभावे विशेषोऽपि नास्त्येव । असति च विशेषे कुतः सामान्यस्यासत्प्रधानोपकारिता ?**

---

विधि-नियमसर्वभङ्गवृत्त्यात्मकै[1]कतत्त्वाधिकारे वर्तमान उभयनियमभङ्गारदर्शनेऽप्यपरितुष्यत उत्तर-
नयस्य नियमभङ्गस्योत्थानम् । तस्मिंस्तु दूषिते स्वमतप्रदर्शनं युक्तमिति तद्दूषणार्थमाह **—यदि भेदप्रधानो**
**भाव** इत्यादि यावद् **धर्म-धर्मिस्वरूपविरोधः** । यद् 'भेदो भवति प्राधान्येन, अन्वयोऽस्योपसर्जनम्'
४७७-१ इ[2]त्युक्तं तत्र तमेवंविधं भावमवधारयामः–**कथमसौ ?** इति, स त्वयेष्टोऽन्वयो भावो भवितुर्भेदस्य क्रिया
भेदातिरेकेण भवितारं कर्तारमन्तरेण स्वरूपमपि प्राप्तुमसमर्थो [3]निश्चयो( ये ? ) । कस्मात् ? अस्वतन्त्रत्वाद-
कर्तृत्वादभविता, अभवितृत्वादसन् खपुष्पवत् । **तस्य** अन्वयस्य भावस्य **अभावे भेदा एव विप्रकीर्णा**
भेद्यवस्तुरहिताः **स्युः** । ततश्च भेत्तव्यस्यान्वयस्याभावाद् भेदा अपि न भवितुमर्हन्ति । [4]भिद्यमानो हि
भेदः, कुतो भिद्यतेऽसौ निर्भेद्यत्वात् खपुष्पवदिति भेदाभावाद् धर्मधर्मिणोः स्वरूपाभावे 'अन्वयोपसर्जनो
भेदप्रधानः शब्दार्थः' इत्येतद् वाक्यं निराकृतधर्मधर्मिस्वरूपकं संवृत्तम् । तदुपसंहृत्य साधनमाह–
**घटादिभेदाभावः, भेत्तव्याभावात्, गगनोदुम्बरकुसुमव**दिति । उभयोर्भेत्तृभेत्तव्ययोरभावः, न
गगनकुसुमादुदुम्बरकुसुम[मु]दुम्बरकुसुमाद्वा गगनकुसुमं भेत्तृ भेत्तव्यं वेति दृष्टान्तः, तथा उपसर्जन-
प्रधानयोः सामान्य-भेदयोरिति दार्ष्टान्तिकोऽर्थः । **ततश्चात्यन्ते**त्यादि । इत्थं **नि[5]रुपाख्यत्वा**च्छून्यत्वा-
पत्तौ **स्ववचना-ऽभ्युपगमा-ऽनुमान-प्रत्यक्षविरोधा अपि** प्राप्ताः, ते चानिष्टा इति ।

किञ्चान्यत्, 'पृथिवी घटो भवति' इत्यत्र निर्धार्यम्–किं पृथिवी भवति न घटः, उत घटो भवति न पृथिवी, उभयं वा भवति, न भवति ? इति । तत्र **यदि विशेष एवे**त्यादि, सामान्यस्योपसर्जनस्याभावे [6]विशेषोऽपि नास्त्येवेतीदा[7]नीमेवोक्तत्वादसति च घटे विशेषे कुतः सामान्यस्यासतोऽसत्प्रधानोप-

---

१ °**कतत्वाधि**° भा० । °**कत्वाधि**° य० ॥ २ दृश्यतां पृ० ७३७ पं० २ ॥ ३ ( ऽनिश्चयाय ? ) ( निश्चयेन ? ) ( ऽनिश्चेयः ? ) ( निरुपाख्यः ? ) ॥ ४ **विद्यमानो** प्र० ॥ ५ °**निरूपणाख्य**° य० ॥ ६ °**विशेषणोवे नास्त्ये**° य० ॥ ७ पृ० ७३८ पं० ४ ॥

**अथ पृथिव्यादेरन्वयित्वं प्रवृत्तेर्भवति ततश्चोपसर्जनत्वं सामान्यस्य नास्ति। उभयस्मिंस्त्वसति स यद्यभाव एव भेदः, [1]तेनैव भेदेन न भूयेत अभावत्वात् खपुष्पवत्। न ह्यभावो भावो भवति। अथ भाव एव ततो भावाव्यतिरेकाद् भूतत्वादुभयथापि न पुनर्भूयेत, भूतघटादिवदाकाशादिवत्। न हि भूत एव भवति, तथाऽसत्त्वापत्तेः। यदि भूतमेव भवेत् ततस्तदसत् स्यात्, उत्पद्यमानत्वात्, अजातघटादिवत्।**

**भेदेषु भवनान्वय औपचारिकः [ इति चेत् ], नन्वन्वयद्रव्यं स्वात्मन्येव तिष्ठति, ततश्च तदवस्थामात्रं घटादिभेदा इति घटादिभेदा एवौपचारिका इत्युक्तं भवति। यथा 'अङ्गुलिर्वक्रा भवति' इत्युक्ते वक्रता अङ्गुलेः भेदावस्थामात्रमित्यौ-**

---

कारिता ? इति। **अथे**त्यादि। अथ मा भूत् पृथिव्यादिसामान्योपसर्जनत्वे द्वयोरपि सामान्य-विशेषयोरभावदोष इति **पृथिव्यादेरन्वयित्वं प्रवृत्तेर्भवति** सत्त्वात्, **ततश्चोपसर्जनत्वं सामान्यस्य नास्ति** ४७७-२ स्वतन्त्रव्या[2]पित्वात् भावत्वात् प्रवर्तमानत्वाद् भेदवत्, इत्थमप्युपसर्जनत्वनिवृत्तिः।

**उभयस्मिंस्त्व**ति सामान्ये पृथिव्यां भेदे च घटे द्वयेऽपि **असति** भावेऽन्वये भवितरि च विशेषे **स यद्यभाव एव** [3]**भेदो** येन भूयते भेदेन स भेद इतीष्यते **तेनैव भेदेन न भूयेत अभावत्वात्**, अभावत्वमभवनक्रियात्मकत्वात् **खपुष्पवत्। न ह्यभावो भावो भवती**ति दृष्टान्तार्थप्रदर्शनात्। **अथ भाव एव,** मा भूदेष दोष इति अन्वयस्वभाव एवासौ भेदो भाव एवेष्यते, **ततो भावाव्यतिरेकाद्** भावात्मकत्वादन्वयात्मकत्वाद् **भूतत्वादुभयथापि** [4]प्रधानोपसर्जनत्वाभ्यां पृथिवी-घटत्वाभ्यां **न पुनर्भूयेत,** भूतत्वात्, **भूतघटादिवत् आकाशादिवद्** वैधर्म्यात्। तद्दर्शयति–**न हि भूत एव भवती**ति। कस्मात् ? **तथाऽसत्त्वापत्तेः। यदि भूतमेव भवेत्** उत्पन्नमेवोत्पद्यते **ततस्तदसत् स्यात्, उत्पद्यमानत्वात्, अजातघटादिव**दित्यसत्त्वापत्तिः, अनिष्टा च सेति न भावो भवति [5]नाभावो भवत्युभयं पृथिवी घटश्चेति।

**भेदेष्वि**त्यादि। स्यान्मतम्—भेदेषु घटादिष्वेव पृथक् सत्सु परमार्थतः योऽसौ 'भवति भवति' इति **भवनान्वयः** स **औपचारिक** इति। अत्रोच्यते–[6]**नन्वन्वये**त्यादि। ननु त्वयैव स्वद्रव्ये पृथिव्यादि तिष्ठति [7]स्वात्मन्येव ततश्च **तस्य** पृथिव्यादि[8]द्रव्यान्वय[स्या]**वस्थामात्रं घटादिभेदा** इति 'घटादिभेदा एवौपचारिकाः, पृथिव्यादिसामान्यमेव तत्त्वम्' इत्युक्तं [9]भवति। किमिव ? इत्यत आह–**यथाङ्गुलि-** ४७८-१

---

१ 'येन भूयते भेदेन तेनैव न भूयेत' इत्यपि मूलमत्र स्यात्॥ २ °**व्यापितत्वात्**° प्र०॥ ३ **भेदोप्यनुभूयते** य०। **भेदोत्यनुभूयते** भा०॥ ४ **प्राधानो** प्र०॥ ५ **नाभावो** भा०। **न भावो**° य०। अत्रेदमवधेयम्–लेखकप्रमादात् °**ति न भावो भवति न भावो भव**° इति द्विर्भावोऽप्यत्र संभवति, तथाङ्गीकारे तु '**अनिष्टा च सेति न भावो भवत्युभयं पृथिवी घटश्चेति**' इति पाठोऽप्यत्र सम्भवेत्॥ ६ **नन्वत्वयेत्यादि** य०। **नत्त्वयेत्यादि** भा०। अत्रेदमवधेयम्–अत्र यदि **ननु त्वयेत्यादि** इति प्रतीकः शुद्ध इत्यभ्युपगम्यते तदा '**ननु त्वयैव तदवस्थामात्रं घटादिभेदा** इति घटादिभेदा एवौपचारिका इत्युक्तं भवति' इति मूलमत्र सम्भाव्यते॥ ७ **स्वात्मनोव** भा०। **स्वात्मन्येन** य०। (स्वात्मनैव ?)॥ ८ °**द्रव्यस्यावयवस्थामात्रं** य०। अत्र **द्रव्यस्यावस्थामात्रं** इति पाठोऽपि सम्भवेत्॥ ९ **भवतीति** य०॥

**पचारिकत्वं वक्रतायाः, नाङ्गुलेः, न हि वक्रत्वमङ्गुलिर्भवति अनुत्पन्नत्वात् खपुष्पवत्। भेदत्वाच्च रूपवत्।**

**अत उक्तन्यायात् त्रिभुवनं भिन्नाभिमतमप्यभिन्नमेव द्रव्याश्रितत्वाद् भेदानाम्। पर्यायप्रवृत्तेः सर्वथैव भवनविध्यनुपपत्तिः।**

**विशेषस्वरूपप्रत्यवेक्षायां भवनं स्वेनैव महिम्ना पृथग् वर्तते। तद् यदि पूर्वं भवनमस्वतन्त्रं पृथक् चावृत्ति ततो निर्मूलत्वादसन् घटः खपुष्पवत्। नापि स स्वयमेव भावः, विशेषप्रधानपक्षहानेः। नाप्यस्य भावः, ततश्च असत्त्वाविशेषात्**

---

रित्यादि, यथा 'अ[1]ङ्गुलिर्वक्रा भवति' इत्युक्तेऽङ्गुलेरवस्था वक्रताऽङ्गुलेः सामान्यस्य भेदा[2]वस्थामात्रमित्यौपचारिकत्वं वक्रतायाः, नाङ्गुलेः। यस्माद् न वक्रत्वमङ्गुलिर्भवति, वक्रत्वस्याऽनवस्थात्वादङ्गुलेः। अङ्गुलिरेव वक्रीभवति, न वक्रतैवाङ्गुलीभ[3]वति। कस्मात् पुनर्न वक्रत्वमङ्गुलीभवति? उच्यते–**अनुत्पन्नत्वात् खपुष्पवत्**। एवं तावदयुगपद्भाविकालभिन्नाभिमतपर्यायेषु द्रव्यमात्रत्व[4]मुक्तम्। युगपद्भाविदेशभिन्नाभिमतपर्यायेष्वपि **भेदत्वाच्च रूपवत्** 'त[5]दवस्थामात्रम्' इति वर्तते। यथा घट एव चक्षुरादिग्रहणापदेशविशिष्टत्वात् 'रूपं रसो गन्धः' इत्यादिभेदेनोच्यतेऽङ्गुलिर्वा, विज्ञानमात्रस्य तत्र भेदत्वाद् वस्तुनो घटस्याभिन्नत्वात्, एवं पृथिव्यादिसामान्यभेदा घटादयोऽश्म-सिकतादय[श्च] विज्ञानमात्रेणेति।

किञ्चान्यत्, **अत उक्तन्याया**दित्यादि। अतीतविध्यादिद्रव्यार्थिकनयेषु एक-सर्वगत-नित्यकारणवस्तुमात्रविजृम्भितं स्तिमितसरस्तरङ्गादिव[त्] त्रिभुवनं भिन्नाभिमतमप्यभिन्नमेव, द्रव्याश्रितत्वाद् भेदानामवस्थादिसंज्ञानां पुरुषादिवादेषु प्रतिपादितत्वात् द्रव्यस्य पर्यायानाश्रितत्वाच्च। **प[6]र्यायप्रवृत्ते**रित्या[7]दि, इति सर्वथैव भवनविध्यनुपपत्तिरेवं पूर्वातीतद्रव्यनयदर्शनेन।

**विशेषस्वरूपे**त्यादि। तस्यापि च विशेषस्य स्वरूपं प्र[8]त्यपेक्ष्यमाणमन्वयसामर्थ्यादृते न ल[9]भ्यते,
४७८-२ तद्यथा–पूरयति पालयति कार्यस्यात्मनोऽवस्थादेः स्वरूपमिति कारणं भवनमन्वयः स्वेनैव महिम्ना पृथग् वर्तते भेदादृतेऽपि यथोपवर्णितमनेकधाऽतीतनयेषु। **तद् यदि पूर्वं भवनमस्वतन्त्रं पृ[10]थक् चावृत्ति** यथा त्वयेष्टं स्यात्, ततः किम्? **ततो निर्मूलत्वा[11]**दित्यादि, निर्मूलत्वा**दसन् घटः खपुष्पवत्**। स्यान्मतम्–किं घटस्य मूलेन भवनेन? किं न[12] स स्वयमेव भवति? इति, एतच्च **नापि स** घटः **स्वयमेव भावः**, कस्मात्? **विशेषप्रधानपक्षहानेः**। यदि विशेष एव भावस्ततो घट एव विशेषः, स एव भावो भवनम्, तेन भूयतेऽन्वयेन भावेनेत्यतस्तथाभावत्वाद् घटस्यापि भावमात्रं सा[13]मान्यमर्थं(र्थः?) घटादि-

---

१ 'अङ्गुलिर्वक्रीभवति' इत्यपि पाठोऽत्र स्यात्, दृश्यतां पं० १०–११॥ २ भेदवस्था° प्र०। 'तदवस्था°' इत्यपि पाठोऽत्र सम्भवेत, दृश्यतां पं० १२॥ ३ °भवतीति भा०॥ ४ °त्वयुक्तम् प्र०॥ ५ दृश्यतां पं० ८, पृ० ७३९ पं० २४॥ ६ (पर्यायाप्रवृत्तेः ? ?)॥ ७ °त्यादिः। अथ सर्वैथैव भा०॥ ८ (प्रत्यवेक्ष्यमाण° ?)॥ ९ लभ्येतो भा०। लभ्यते य०॥ १० पृथक्त्वावृत्ति यथा त्वयेष्टं भा०। पृथक्त्वा वृत्ति( त्ते ? )र्यथात्वयवेष्टं य०॥ ११ °त्वादि निर्मूल° य०॥ १२ न स्वयमेव य०॥ १३ सामान्यामर्थं भा०। सामान्यमर्थं य०। 'सामान्यमेवं' इत्यपि पाठोऽत्र स्यात्॥

**खपुष्पवदेवाविशेष इति पूर्वोक्तवदाविर्भावादिभेदानुपपत्तिविरोधाः ।**

**ननु विशेषः प्रत्यक्षत एवोपलभ्यते । दृश्यमानत्वेऽपि तथा तस्याभवनादसत्त्वं दृष्टम्, यथा मृगतृष्णिकागन्धर्वनगरयोः । मृगतृष्णिकागन्धर्वनगरयोर्हि प्रत्यक्षत्वेऽपि शीतादिविशेषासत्त्वादसत्त्वं दृष्टं तथा विशेषस्य प्रत्यक्षत्वेऽप्यसत्त्वम् ।**

**अथोच्येत–शीतादिर्जीवाजीवादिश्च विशेषो मृगतृष्णिकासलिले गन्धर्वनगरे च नास्तीति विशेषासत्त्वात् स्यादसत्त्वम्, नावश्यं विशेषे विशेषैर्भाव्यं यतो विशेषासत्त्वादसत्त्वं कल्प्येत । यदि स्युर्विशेषे विशेषा अविशेष एव स्यात्, विशेषवत्त्वात्, सद्द्रव्यपृथिव्यादिसामान्यवत् ।**

**अपि च वयमप्येतदेव ब्रूमः–अन्वय एव स्यादिति । स च नास्ति खपुष्पवत् ।**

---

विशेषजातमपि । तत्प्राधान्याद् विशेषस्य भावानुरोधात् सामान्योपसर्जनविशेषप्रधानप्रति[ज्ञा]हानिः । एवं तावद् घटो भाव इ[1]त्ययुक्तम् ।

स्यान्मतम्–घटस्य भावो विशेषस्य सम्बन्धिनः सम्बन्धषष्ठ्या । यथा घटस्य विनष्टस्य कपालान्यभावस्य भावहेतुत्वान्निरु[2]द्धस्य, कपालानि हि घटनिरोधहेतुकानि उत्पद्यन्ते तदुपकारित्वात् । किमिव? यथाङ्कुरस्य बीजं निवर्तमानमुपकारीति । एतच्च **नाप्यस्य भावः** । कस्मात्? **ततश्चासत्त्वाविशेषात् खपुष्पवदेवाविशेष इति पूर्वोक्तवदाविर्भावादिभेदानुपपत्तिविरोधा[3]** इत्यनेनातीतं ग्रन्थमतिदिशति [4]यदेतदसत्त्वं नाम त्वया क्वचिद् मन्यते ततोऽन्यत् कार्यम्, तदसमर्थविकल्पत्वात्, घटपटवत् । विकल्पासामर्थ्यं चासत्कार्ययोरित्यादि यावत् [5]स्ववचनादिविरोधोपसंहारेण [6]विशेषविरोधोऽप्रयोगप्रसङ्गात् स्वरूपविरोध इति ।

आह–**ननु विशेष** इत्यादि । सामान्योपसर्जनो विशेषः **प्रत्यक्षत एवोपलभ्यते** । तस्माद् दृष्टविरुद्धेयं कल्पनेति । अत्रोच्यते–**दृश्यमानत्वेऽपि** प्रत्यक्षव्यभिचारप्रदर्शनसाधनम् । यथा दृश्यते **तथा** ४७९-१ **तस्याभवनादसत्त्वं दृष्टम् । यथा मृगतृष्णिके**त्यादि दृष्टान्तः । तद्व्याख्या–**मृगतृष्णिका-गन्धर्वनगरयोर्ही**त्यादि, भवनस्य पृथग्भावेन भवनात् [7]परमार्थसत्त्वात् सलिल-[8]नगरयोरसत्त्वं दृष्टं यथा तथा सामान्योपसर्जनतायां विशेष[9]स्य प्रत्य[10]क्षत्वेऽप्यसत्त्वमिति ।

**अथोच्येत** त्वया **शीतादि**रित्यादि । मृगतृष्णिकासलिले शीत-मृदु-द्रवतादिविशेषाभावात् गन्धर्वनगरे दृश्यमानजीवाजीवविशेषधर्माभावात् स्यादसत्त्वम् । नाऽवश्यं विशेषे [11]घटादौ पृथिवी[वि]शेषाणामश्मसिकतादिभेदैर्भाव्यं यतो विशेषासत्त्वं कल्प्येत । यदि स्युर्विशेषे विशेषा अविशेष एव स्यात्, सामान्यमेव अन्वय एव स्याद् **विशेषो विशेषवत्त्वात्, [12]सद्द्रव्यपृथिव्यादिसामान्यवत् ।**

अत्राचार्य आह–**अपि च वयमप्येतदेव ब्रूमः–अन्वय एव** अविशेषं सामान्यमेव **स्या**दिति ।

---

१ **इत्यतयुक्तम्** प्र० । ( इति न युक्तम्? ) ॥ २ °**द्धस्या** प्र० ॥ ३ °**धादित्यने**° य० ॥ ४ दृश्यतां पृ० १६० पं० ४—पृ० १६१ पं० १ । तुलना–पृ० ४३० पं० १ ॥ ५ पृ० १७१ पं० ३ ॥ ६ पृ० १७२ पं० ३ ॥ ७ ( परमार्थतोऽसत्त्वात्?? ) ॥ ८ °**नगरसत्त्वं** भा० ॥ ९ °**स्य च प्रत्य**° भा० ॥ १० °**क्षत्वेव्यस**° प्र० ॥ ११ **घटाघटादौ** प्र० । '**घटपटादौ**' इत्यपि भवेदत्र पाठः ॥ १२ **सद्रव्यपृथि**° भा० । **सद्रव्यत्वपृथि**° य० ॥

**आकृतिविशेषनिर्वृत्तौ निर्वृत्तिर्घटादीनां रूपादीनां च ।**

**मृगतृष्णिका त्वाकृतजलविशेषापि किं शीतादिभेदा न भवति? भावाभावादेव । यथा चासौ तथा घटादिर्विशेषोऽन्वयभावाभावान्नास्ति । यदि विशेष एव प्रधानं स्यात् सलिलभावानन्वितं मृगतृष्णिकादिवद् घटाद्यप्यसत् स्यात्, निरुपाख्यत्वात् 'इदं तत्' इति नोपाख्यायेत। ततो न किञ्चित् स्यात् पृथिव्यादिसामान्येनानुपष्टब्धत्वात् खपुष्पवत्।**

**तथा कस्मादुदकादिना न व्यज्यते पृथिवी विभिन्नेन? अत्यन्तवैलक्षण्याद्वा कश्चिदेवावाच्योऽर्थः कस्मान्न स्यात्, अन्वयरहितत्वात्?**

**अत एव च जीवकर्मसम्बन्धसन्तत्याख्यान्वयाभावात् संसारमोक्षाद्यनुप-**

---

यदि तथाभवनेन विशेषेणाऽऽकृत्याख्येन विना भवेदन्वयो विशेष एव निःसामान्यः, स च नास्ति खपुष्पवत् । नापि सामान्यमेव निर्विशेषं [1]*घटादि, किं तर्हि ? **आकृतिविशेषनिर्वृत्तौ** [2] **निर्वृत्तिर्घटादीनां** सामान्यभवनस्य विशेषात्माभिव्यक्तेः, तथा **रूपादीनां** रूप-रस-गन्धादिविशेष*घटावस्थानात् [3]आक्रियमाणविशेष[4]स्य तथा तथा वस्तुनो भवनात् ।

तद्वैधर्म्यं मृगतृष्णिकायामित्यत आह–**मृगतृष्णिका त्वाकृतजलविशेषापि किं शीतादिभेदा न भवति** ? इति कारणनिर्णयार्थं प्रश्नः । व्याकरणं चास्य **भावाभावादेव । यथा चा**[5]**साविति** यथा
४७९-२ मृगतृष्णिकादिर्भावाभावान्नास्ति **तथा घटादिर्विशेषोऽन्वयभावाभावान्नास्ति ।** परस्य तु दोषः–**यदि विशेष एव प्र**[6]**धानं स्यात् सलिलभावे**त्यादि सलिलभवनेनानन्वितं घटाद्यपि मृगतृष्णिकाकल्पमसत् स्यात् **निरुपाख्यत्वात्,** उपाख्या हि भवनप्राणिका, किमित्युपाख्[7]यायेतेत्यत आह–**इदं तदिति** [8]**नोपाख्यायेत** 'पृथिवी' इति 'द्रव्यं सद् घटः' इति वा । **ततः** किम् ? **न किञ्चित् स्यात्,** कस्मात् ? **पृथिव्यादिसामान्येनानुपष्टब्धत्वात् खपुष्पवत् ।**

किञ्चान्यत्, **तथा कस्मा**दित्यादि । यदि विशेषः सामान्यनिरपेक्षः स्यात् ततो यथा 'घटः' 'पटः' इति वा विशिष्टया वृत्त्या पृथिव्यादि व्यज्यते तथोदकज्वलनानिलाकाशादिना कस्मान्न व्यज्यते पृ[9]थिवी विभिन्नेन ? अत्यन्तमं[10]न्यस्य पृथिवीद्रव्यस्य वैलक्षण्याद्वा सर्वस्य द्रव्यगणस्य व्यतिरेकेण निरन्वयो निरुपाख्यः कश्चिदेवावाच्योऽवेद्यरूपोऽर्थः कस्मान्न स्यात्, अन्वयरहितत्वात् ?

**अत एव चे**त्यादि । यस्मादन्वयरहितस्य निरुपाख्यस्याभावस्तस्माद् मिथ्यादर्शनादिप्रत्ययजीवकर्मसम्बन्धसन्तत्याख्यान्वयाभावाद् नरकादिगतिविशेषसुखदुःखफलाख्यसंसारविशेषार्थप्रवृत्तयोः पुण्यपापकर्मणोरनुपपत्तिः, तदनुपपत्तेः संसारानुपपत्तिस्तत्प्रतिपक्षसम्यग्दर्शनादिपरिणामविशेषानुपपत्तिः, तत-

---

१ * * एतच्चिह्नान्तर्गतो **घटादि** इत्यत आरभ्य **विशेष**° इत्यन्तः पाठो य० प्रतौ नास्ति ॥ २ °**षनिवृत्तौ** भा० ॥ ३ **अक्रिय**° प्र० ॥ ४ °**षणस्य** य० ॥ ५ **वासौ** प्र० ॥ ६ **प्राधान्यं** भा० । 'विशेषे एव प्राधान्यं स्यात्' इति यद्यर्थस्तदा भा० प्रतिपाठोऽपि सङ्गच्छते ॥ ७ °**ख्यायेत्यय** प्र० ॥ ८ **नोपाख्यायन** भा० । **नोपाख्येयेन** य० ॥ ९ 'पृथिवीविभिन्नेन' इत्यपि योजना भवेत् ॥ १० °**मन्यस्था** प्र० । '°मन्य**स्मात्**' इति पाठोऽत्र समीचीनः सम्भाव्यते ॥

**पत्तिः, अनियततथाप्रवृत्तेः। सत्यां च तथानियतप्रवृत्तौ 'पृथिवी घटः' इत्यन्वयप्राधान्यमेवैषितव्यम्, विशेषस्तु पृथिवीमनुवर्तते। लोके प्रधानं ह्यनुवृत्यते, न गुणः।**

**सदापि विशेषानुवृत्तेरुक्तवद् नेति चेत्, एतद्वद् विशेषाभावात्।**

**अतस्त्यक्त्वेमौ सामान्यविशेषैकान्तपक्षौ अवचनीयं वस्तु प्रतिपत्तव्यम्। नाप्यभावं न तदुपसर्जनं न भाव एव नाविशेषं न विशेषोपसर्जनं न विशेष एव नोभयोपसर्जनं नोभयप्रधानं वस्तु। अवचनीयभावविशेषकारणकार्यैकानेकप्रधानोपसर्जनं वस्तु।**

---

स्तत्प्राप्यमोक्षानुपपत्तिरपि, ततः शास्त्राभ्यासादिपुरुषकारानुपपत्तिः, अनियततथाप्रवृत्तेः । अथ मा भूवन्नेते दोषा इति तथानियतप्रवृत्तिरिष्यते ततः **सत्यां च तथानियतप्रवृत्तौ** जीवकर्मसम्बन्धसंसारमोक्षादिकायां 'जीवो नारकः संसारी मुक्तः' इत्यादिवत् 'पृथिवी घटः' इत्यन्वयप्राधान्यमेवैषितव्यम्, विशेषस्तु घटः पृथिवीमनुवर्तते जीवत्वं [1]नारकत्वादिः । कस्मात्? यस्माद् लोके प्रधानं ह्य[2]नुवृत्यते न गुणः, गुणस्त्वनुवर्तते न प्रधानं नीलोत्पलवदिति । ४८०-१

**सदापि विशेषानुवृत्तेरुक्तवद् नेति चेत्,** । स्यान्मतम्—ननूक्तम्—

[3]अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते ।
तस्य पूर्वमदृष्टत्वात् सामान्यादुपसर्जनात् ॥

इत्यादिप्रपञ्चेन विशेष एव सामान्येनाऽनुवृत्यते न विशेषेण सामान्यमिति । [एतच्च न,] [4]**एतद्वद् विशेषाभावात्**, स एव हि विशेषो नैवास्तीति पूर्वनयेषु बहुधा भावितम् । तस्मान्न विशेषैकान्तपक्षः सामान्यं शक्नोत्यत्यन्तं निवर्तयितुं नापि सामान्यैकान्तपक्षो विशेषपक्षम् ।

अत[4]स्त्यक्त्वेमौ सामान्य-विशेषैकान्तपक्षौ वक्ष्यमाणमनन्तरं वस्तु प्रतिपत्तव्यम्। अवचनीयं 'भवनविशेषाभ्यां कारणकार्यत्वाभ्यामेकानेकत्वाभ्यां प्रधानोपसर्जनत्वाभ्याम्' इत्यादिभिर्विकल्पैर्विकल्प्यमानमवक्तव्यतत्त्वं वस्तु भवति । **नाप्यभावं** निरन्वयम् **न[6] तदुपसर्जनं** भावोपसर्जनं विशेषप्रधानं 'वस्तु' इत्यभिसंबध्यते, **न भाव एव** निराकृत[7]विशेषः, तथा **नाविशेषं** विशेषशून्यम्, **न विशेषोपसर्जनं** [8]सामान्यप्रधानमिति, **न विशेष एवा**ऽत्यन्ततिरस्कृतसामान्यः, **नोभयोपसर्जनं वस्तु** अत्यन्तनिराकृतस्वातन्त्र्यसामान्यविशेषम्, **नोभयप्रधानम**त्यन्तस्वतन्त्रतुल्यकक्षसामान्यविशेषम्, सर्वविक[9]ल्पेष्वेष्वभावापत्तिदोषदर्शनात्। कीदृक् तर्हि वस्तु भवति? इत्यत आह—**अवचनीयभाव-विशेषेत्यादिः समासदण्डको** गतार्थ उक्तपर्यायविकल्पयुग[10]लकैः । ४८०-२

---

१ **नरक°** प्र० ॥ २ **नुवृत्त्यते** य० । **°नुवृत्त्यते** भा० ॥ ३ **अर्थशब्दावि°** प्र० । दृश्यतां पृ० ६१६ पं० ३ ॥ ४ **एतद्वद्विशेषाभावात्** प्र० । अत्र 'एतन्न विशेषाभावात्' इत्यपि पाठश्चिन्त्यः ॥ ४ **°स्त्यक्षेमौ** भा० । **°स्तत्क्षेमौ** य० ॥ ५ **न्याय्यभावं** प्र० ॥ ६ **त तदुप°** भा० । **तत्तदुप°** य० ॥ ७ **°तविशेषं** प्र० ॥ ८ **सामान्यं प्रधान°** प्र० ॥ ९ **°कल्पोष्वष्वभावा°** भा० । **°ल्पोष्वणुभावा°** य० । **°ल्पेष्वभावा°** इत्यपि पाठोऽत्र स्यात् ॥ १० **°लकेः** भा० । **°लके** य० ॥

**एवं हि भवति भवनमग्नीन्धनवत्। यथा नैकत्वम् [ अग्नेरिन्धनेन सह इन्धनस्याग्निना वा सह ]। यदि स्यादेकत्वमग्नेरिन्धनेन दग्धेन्धनवदग्निरिन्धनरहितत्वाद् न प्रवर्तेत, अनिन्धनस्याप्रवृत्तेश्चाभावतैवाग्नेः स्यात्। न प्रवर्तेत, एकत्वात्, दग्धेन्धनवत्।**

**यथेन्धनमग्निरहितमप्यनुपजाताग्निकं प्रवर्तते तथेन्धनरहितोऽप्यग्निः प्रवर्त्स्यति सूक्ष्मावस्थ इति चेत्, को वा ब्रवीति 'इन्धनमग्निरहितम्' इति। तदपेक्ष-**

---

एतस्यार्थस्य भावनार्थमुदाहरणम्—[1]**एवं हि भवति भवनमग्नीन्धनव**दिति। तत्र तावदग्नीन्धनयोरेकत्वं नानात्वमुभयत्वमनुभयत्वमन्यतरप्रधानोपसर्जनता [2]वा स्यात्? इति विकल्प्य [3]**सर्वथाप्यवक्तव्यतैव** इति वक्ष्यमाणो दृष्टान्तार्थः, तद्विकल्पानुपपत्तेः।

तत्रैकत्वं तावन्न घटत इति ब्रूमः। कथम्? **यथा नैकत्व**मित्यादि। तच्चैकत्वमग्नेरिन्धने[न] सह इन्धनस्याग्निना वा सह स्यात्, [4]सहयुक्तेऽप्रधाने तृतीया, इन्धनमेवाग्निरेव वा स्यात्। [5]तन्न तावदग्नेरिन्धनेन सहैकत्वं घटते, तेन सहैकत्वात् तत्प्राधान्याद् वक्ष्यते दोषोऽसत्त्वम्। [7]**यदि स्यादेकत्वमग्नेरिन्धनेन** [8]**दग्धेन्धनवदग्निरिन्धनरहितत्वाद् न प्रवर्तेत,** यथा दग्धेन्धनोऽग्निर्न प्रवर्तते तथास्याप्रवृत्तिः। **अनिन्धन[**[9]**स्याऽ]प्रवृत्तेश्चाभावतैवाग्नेः स्यात्** [10]अस्ति-भवति-विद्यति-पद्यति-वर्ततयः सन्निपातषष्ठाः सत्तार्थाः [ ] इति वचनात् प्रवृत्तिसत्तार्थत्वादप्रवृत्तेरसत्तापर्यायत्वात्। तदुपसंहृत्य साधनमाह—**न** [11]**प्रवर्तेत, एकत्वात्, दग्धेन्धनवत्।** यथा दग्धेन्धनोऽग्निरिन्धनेन सहैक[12]त्वादिन्धनाव्यतिरेकेणाप्रवर्त-
४८१-१ मानत्वादेकत्वादप्रवृत्तेरसंस्तथाग्निरिति।

अत्राह—[13]**यथेन्धन**मित्यादि यावत् **सूक्ष्मावस्थ इति चेत्।** यथेन्धनमग्निना सहैकत्वेऽप्यनुपजाताग्निकं प्रवर्तमानं दृष्टं [14]तथाग्निरपीन्धनेन सहैकत्वे प्रवर्तितुमर्हति सूक्ष्मावस्थः कार्यानुमेयोऽप्रत्यक्ष इत्यर्थः। [15]तस्मा[द]नैकान्तिकत्वादहेतुस्तदेकत्वमिति चेन्मन्यसे, अत्र ब्रूमः— [16]**को वा ब्रवीती**त्यादि। अग्निरहितावस्थायामिन्धनत्वस्यैवाभावाद् विपक्षाभावेऽनैकान्तिक[17]ाभासता। तद्व्याचष्टे—**तदपेक्षत्वादिन्धनत्वस्य** दीपनोऽग्निरिन्धन-दीपन-दहन-भस्मीकरणार्थत्वात् तत्परिणतावेवेन्धनम् '[18]इध्यते दह्यते दीप्यते' इति इन्धनमग्नित्वपरिणतावेव एकत्ववादिनो [19]विशेषेण, अतत्परिणतावग्नित्वेन्धनत्वयोरभावात् ञिइन्धी दीप्तौ

---

१ दृश्यतां पृ० ४२२-२ ॥ २ **व** प्र० ॥ ३ दृश्यतां पृ० ४८६-२ ॥ ४ **सहयुक्ते प्रधाने** भा०। "५६५ **सहयुक्तेऽप्रधाने** २। ३। १६। सहार्थेन युक्तेऽप्रधाने तृतीया स्यात्। पुत्रेण सहागतः पिता। एवं साकं-सार्धं-समं-योगेऽपि।"—**पा० सिद्धान्तकौमुदी** ॥ ५ **तृतीयेननमेवा°** य०। **तृतीयेनमेवा°** भा० ॥ ६ **त। अग्ने°** भा०। (तत्र न तावदग्ने°?) (न तावदग्ने°?) ॥ ७ दृश्यतां पृ० ४८४—१-२। तुलना पृ० ४८६-२ ॥ ८ **दग्नेत्वउवदग्नि°** भा०। **दग्नेत्वनवदग्नि** य० ॥ ९ दृश्यतां पृ० ४८१-२, ४८४-२ ॥ १० दृश्यतां पृ० ३४ पं० २१ पृ० १९० पं० २३ पृ० १९९ पं० ७ पृ० ३२४ पं० २७ ॥ ११ **प्रवर्ततैकत्वात्** प्र०। (प्रवर्तते एकत्वात्?) ॥ १२ **°त्वादिन्धनात्यव्यति°** प्र०। '**°त्वादिन्धनतो व्यति°**' इत्यपि पाठोऽत्र सम्भवेत् ॥ १३ दृश्यतां पृ० ४८७-१ ॥ १४ **यथा** प्र० ॥ १५ **तस्मान्नैका°** य० ॥ १६ दृश्यतां पृ० ४८७-१ ॥ १७ **°कताभा°** य० ॥ १८ **इष्यते** य० ॥ १९ **विशेषणातत्परिणता°** भा० ॥

NOTE

This Vol. II ends with the Eighth Ara on p. 737. However, as the first seven pages of the Ninth Ara (pp. 738-744) were printed along with the p. 737 of the Eighth Ara, they are given at the end of this Volume. But, for the convenience of the readers the Ninth Ara will be given from the beginning in Vol. III, pp. 738–744 will be printed again and will be given there.

नोंध

आ द्वितीय विभाग आठमा अरथी एटले के ७३७मा पृष्ठना अंते समाप्त थाय छे. परंतु आठमा अरना छेल्ला पृ. ७३७नी साथोसाथ नवमा अरनां प्रथमनां सात पृष्ठो (७३८–७४४) छपायां होवाथी आ ग्रथना अंते ते पृष्ठो आपवामां आव्यां छे. आम छतां, वाचकोनी सुविधा खातर तृतीय विभागमां नवमो अर प्रारंभथी ज छापवामां आवशे, अने पृ. ७३८ थी ७४४ फरीथी छापीने ते विभागमां अपाशे.